SARASVATĪBHAVANA-GRANTHAMĀLĀ

*[ Vol. 116 ]*

# VĀKYAPADĪYAPĀṬHA-BHEDANIRṆAYA

[ Part–I ]

*Written and Edited*

*by*

**Pt. RAGHUNĀTHA ŚARMĀ**

Sampurnanand Sanskrit Vishvavidyalaya.




Research Publication Supervisor

DR. BHAGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚASTRĪ'

Director, Research Institute,

Sampurnanand Sanskrit Vishvavidyalaya,

सरस्वतीभवन-ग्रन्थमाला

[ ११६ ]

# वाक्यपदीयपाठभेदनिर्णयः

[ प्रथमो भागः ]

लेखकः सम्पादकश्च

**पं० रघुनाथशर्मा**

सम्मानितप्राध्यापकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य






अनुसन्धानप्रकाशनपर्यवेक्षकः

**डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'**

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

प्रकाशकः—
निदेशकः, अनुसन्धानसंस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये,
वाराणसी.

प्राप्तिस्थानम्—
विक्रयविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः.
वाराणसी-२२१००२.

प्रथमं संस्करणम् : ११०० प्रतिरूपाणि

मूल्यम् : ८६-०० रूप्यकाणि

मुद्रकः—
गौरीशङ्कर प्रेस
मध्यमेश्वर,
वाराणसी।

# प्रास्ताविकम्

पाणिनीयव्याकरणं यद्यपि पाणिनिना कृताम् अष्टाध्यायीं धातुगणादिखिलपाठांश्च विभाव्य सामान्यतः प्रक्रियात्मकं निरूप्यते, तथापि विनष्टेऽपि व्याडिकृतसंग्रहग्रन्थे भर्तृहरिविरचितस्य त्रिकाण्डस्य वाक्यपदीयस्य समुपलभ्यमानत्वाच्छब्दविद्याया दार्शनिकः पक्षोऽपि विभासते। भर्तृहरिणा संग्रहमाधारीकृत्य वाक्यपदीयं प्रतिष्ठापितम्। तस्मिन् काले संग्रहग्रन्थ उपलब्ध आसीन्न वा? तस्योपयोगो भर्तृहरिणा च कृतो वा न वा? कृतश्चेत् कियतांशेनेत्यादिविविधाः प्रश्ना यत्र तत्र विकीर्णैः संग्रहश्लोकैः सह वाक्यपदीयस्य श्लोकानां तुलनया शक्यन्ते समाधातुं। एवं तावद् वाक्यपदीयस्याकूपारस्य गभीरता नूनं सिध्यति। तत्रावगाहनाय तिस्रष्टीका यद्यपि पूर्वत एव समायोजिता आसन्, तथापि तासु कस्याश्चित् खर्वत्वात्, अपरस्या अप्रशस्तत्वात्, अन्यस्याश्चापूर्णत्वाद् अवगाहनप्रिया नावगाढुं पारयन्ते स्म। पदवाक्यप्रमाणपारावारीणैः स्वनामधन्यैः पण्डितश्रीरघुनाथशर्ममहोदयैस्तादृशीं बाधां पर्यालोच्य स्वोपज्ञा 'अम्बाकर्त्री' इत्याख्या व्याख्या काण्डत्रये व्यतानि। तद्व्याख्यासंवलितः काण्डत्रयात्मकोऽयमनूनको ग्रन्थः संपूर्णानन्दसंस्कृतविश्वविद्यालयस्यानुसन्धानसंस्थानतः प्रकाशित इति विदन्त्येव कोविदाः।

अस्माभिरम्बाकर्त्र्याख्यायां व्याख्यायां वाक्यपदीयस्य तद्व्याख्यानां च केचन पाठभेदा मध्ये मध्ये प्रसङ्गानुसारेण निर्णयार्थमंशतो विमृष्टाः, तथापि समग्रग्रन्थस्य तद्व्याख्यानां च समग्राः पाठभेदाः सयुक्ति विवेचनीया इति दृशा कृतवाक्यपदीयपारावारावगाहनैः श्रीशर्ममहोदयैर्जिज्ञासूनां हितकाम्यया पाठभेदा निर्णीताः। अद्यत्वे सम्पादनविधौ सम्प्राप्तमातृकाणामाधारेण पाठभेदाः समुल्लिख्यन्ते। तत्रैकतमा प्रतिकृतिर्मुख्यतयाऽङ्गीक्रियते, अन्याश्च पाठभेदाय समाश्रीयन्ते। नवीनसम्पादनदृशा मुख्यप्रतिकृतौ यदि सन्त्यशुद्धाः पाठाः, सन्तु नाम। तेषां शुद्धाशुद्धनिर्णयाय नास्ति तत्रावकाशः। केवलं तद्गतपाठानां भेदास्तदितरमातृकागतपाठैः क. ख. ग. इत्यादिसंकेतैः पादटिप्पण्यां निर्दिश्यन्ते। इयमेवेतिकर्तव्यता सम्पादकानां सामान्यतो दृश्यते साम्प्रतम्। आधुनिकेषु सम्पादकेषु परम्परागतशास्त्रीयवैदुष्यं प्रायो न तथा जागर्ति यथा ते मुख्यमातृकाभूतपाठानामपि निर्णयं कर्तुं क्षमेरन्।

पण्डितप्रवराणां श्रीमद्रघुनाथशर्ममहोदयानां पाठनिर्णयविधावभिनवोऽयं प्रयोगः। तैः, श्रीचारुदेवशास्त्रिभिः, डॉ० को० अ० सुब्रह्मण्यमहोदयैश्च कृतान् पाठभेदनिर्णयान् विलोक्य

ग्रन्थतात्पर्यसंगतिपूर्वकं वाक्यपदीयपाठनिर्णयाय शेमुष्यां समास्थितः संकल्पः । तं चेमं ग्रन्थाकारेण विदुषां जिज्ञासूनां च कराम्बुजे प्राभृतीकुर्वन् परमं मोदमवाप्नोमि । ग्रन्थोऽयं द्वितीयकाण्डं यावदेवेदानीं प्रथमभागतया प्राकाश्यमानीयते । [illegible] पाठनिर्णया द्वितीयभागतया लघु प्रकाशमानेष्यन्ते । [illegible] पाण्डित्यानस्यात-पुष्पतया विकच्चितस्य ग्रन्थस्यास्य प्रकाशनेन विद्वज्जना [illegible] नूनं प्रीणिता उपकृताश्च भविष्यन्तीति ध्रुवं प्रत्येति ।

वाराणस्याम्
शरत्पूर्णिमायाम् २०३७ वै०
( २३-१०-८० खी० गुरौ )

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# भूमिका

**हरेर्जरद्गवी द्वैतपङ्के मूढैः प्रवेशिता ।**
**तदुद्धाराय सज्जस्य ममैष सफलः श्रमः ॥**

अथेदं विदितमस्तु विद्यावताम् । अहं किल पुरा वाक्यपदीयस्य व्याख्यामम्बाकर्त्रीं हरिवाकृषभतद्व्याख्यातॄणां भावावबोधाय विदधानः कथञ्चिन्मन्दमन्दमुदतीतरं वाक्यपदीयाम्भोधिम् । वाक्यपदीयकारिकासु तद्व्याख्यासु च येऽशुद्धाः पाठास्ते संशोधिता व्याख्याताश्च; किन्तु श्रीचारुदेवशास्त्रिसङ्गृहीता ये पाठभेदाः, ये च श्रीविद्वद्वरसुब्रह्मण्य-अय्यरसंगृहीताः पाठभेदास्तान् विलोक्य व्यषीदन्मे मनो नितराम् । जरसा निगृहीतस्त्वरसा पाठभेदान् निर्णेतुमशक्नुवन्नारभे मम पाठान् निर्णेतुं शनैः शनैः । ततो मद्भाग्यसंक्षयात् समुद्भूता वात्येव विघ्नव्यूहाः । प्रवाते कदलीव च प्रावेपत मे मनः । अन्तर्बहिश्च शिरः शरीरञ्च व्रणजालैः शरक्षतजालैरिव समावृतम्, तत्प्रतिविधानाय सूर्यस्तवः प्रारब्धः पूरितो मुद्रितश्च । सूर्यस्तवपूर्तौ जातायां व्रणाविरूढविग्रहो विरुजो जातः । ततो महान् वातोपसर्गः प्रादुरभूत् । तदर्थं वायुस्तवो विहितः, तस्य पूर्तौ वातव्याधिरपि निवृत्तः । शनिबाधानिवृत्तये च शनिस्तवो विहितः, स च पूर्णो मुद्रितश्च । एवं पराम्बानुकम्पया सर्वबाधाविनिर्मुक्तेन मया ब्रह्मकाण्डवाक्यकाण्डयोः पाठभेदा [illegible] निर्णीताः । तृतीयकाण्डस्य त्वन्तिमं समुद्देशसप्तकं पाठभेदान्निर्णीय [illegible] सम्पूर्णानन्दसंस्कृतविश्वविद्यालये तिष्ठति । आदिमस्य समुद्देशसप्तकस्य पाठभेदास्तु साम्प्रतं निर्णीयन्ते । तेषु जातिसमुद्देशस्य महाकायस्य पाठभेदा निर्णीताः, [illegible]समुद्देशस्य ते निर्णीयन्ते । अन्यस्य च समुद्देशपञ्चकस्य पाठभेदनिर्णयः पराम्बाप्रसादाद् विदुषामाशीर्भिश्च शीघ्रमेव संपत्स्यत्याशासानो विरमामि ।

[illegible]शम्याम् २०३७ वै०
( १९–१०–१९८० ख्रै० )

विदुषां कृपाभिलाषी
**रघुनाथशर्मा**

## कारिकापाठभेदविचार–

# विषयानुक्रमणिका

[ ब्रह्मकाण्डम् ]

## [ वाक्यकाण्डम् ]

पण्डितश्रीरघुनाथशर्मरचितः

# वाक्यपदीयपाठनिर्णयः

## ( ब्रह्मकाण्डम् )

### 'अनादिनिधनं ब्रह्म' इति कारिका ।। १ ।

अस्याः पूर्वार्धे—'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्' इति । 'अनादिनिधनं शब्द ब्रह्मतत्त्वं यदक्षरम्' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। स्वोपज्ञवृत्तौ कारिकापाठक्रमेण पूर्वं ब्रह्मस्वरूपनिर्देशात्। कारिकापाठक्रमेणैव च 'शब्दोपग्राह्यतया शब्दोपग्राहितया च शब्दतत्त्वमित्यभिधीयते' इति तत्पश्चादुक्तेः।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'सर्वपरिकल्पातीततत्त्वम्' इति, 'सर्वव्यवहारातीतत्वम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकायाम् 'एतान् परिकल्पान् अतिक्रान्तं रूपमस्य' इति व्याख्यादर्शनात्। स्वोपज्ञवृत्तौ—'यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः। तर्कागमानुमानेन बहुधा परिकल्पितः।' इति समुद्धृतपद्यदर्शनाच्च। किञ्च परिकल्पपदं प्रत्ययमात्रस्य बोधकम्, व्यवहारपदञ्च प्रत्ययस्य शब्दप्रयोगस्य हानोपादानादिरूपस्य प्रवृत्त्यादिरूपस्य च व्यवहारस्य बोधकमिति ऐकार्थ्याभावात् वृषभदेवटीकानुसारेण प्रागुक्तपद्यानुसारेण परिकल्पपदप्रयोग एव समुचितः। अन्यस्मिन् पाठे तु न कोऽपि प्रमाणसंवाद इति हेयः सः।

अत्रैव स्वोपज्ञवृत्तौ 'भेदसंसर्गसमतिक्रमेण' इति, 'भेदसंसर्गयोः समतिक्रमेण' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, वृषभदेवटीकासंवादात्, समासे दोषाभावात्, स्वरूपलाघवात्, उपस्थितिलाघवाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ-"व्यवहारानुपातिभिर्धर्माधर्मैः"-'व्यवहारानुपातिभिर्धर्मैः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। धर्माधर्मयोः पुण्यपापरूपयोर्व्यवहारानुपातित्वाभावात्। धर्माणां तु गोघटादीनामुत्पादविनाशयोर्वा व्यवहारानुपातित्वसंभवात्।

अत्रैव स्वोपज्ञवृत्तौ 'सर्वास्ववस्थास्वनाश्रितादिनिधनम्' 'सर्वास्ववस्थास्वनादिनिधनम्' इतिपाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, आश्रितपदस्य वैयर्थ्यात्।

अत्रैव स्वोपज्ञवृत्तौ 'सर्वप्रवादेषु अपूर्वापरे' इति 'सर्वप्रवादेषु पूर्वापरे' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, कोट्योः पूर्वापरत्वयोरेव संभवात्।

अत्रैव स्वोपज्ञवृत्तौ 'मूर्तपरिवर्तप्रसङ्गानाम्' 'मूर्तिपरिवर्तप्रत्यङ्गानाम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'क्वचिदवच्छेदः' 'क्वचित्क्वचिदवच्छेदः' 'क्वचित्कश्चिद-वच्छेदः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयस्य क्वचित्पदस्य तृतीयस्य कश्चित्पदस्य वा वैयर्थ्यात्।

अत्रैव स्वोपज्ञवृत्तौ 'तत्तु' 'तच्च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। चकारपाठे त्वर्थकत्वे संदेहसंभवात्।

अत्रैव स्वोपज्ञवृत्तौ 'भिन्नरूपाभिमननानाम्' 'भिन्नरूपमननानाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। भ्रान्तिरूपाया अभिमतेरेवात्र वक्तुमौचित्यात्।

'विकाराणां प्रकृत्यन्वयित्वाद्' इति अत्रैव स्वोपज्ञवृत्तौ क्वचित्पाठः। क्वचित्तु 'विकाराणां प्रकृत्यन्वयाद्' इति पाठः। तत्र द्वितीयपाठ एव युक्तः। विकाराणां प्रकृतौ संबन्धादित्यर्थसंगतेः। प्रथमपाठस्तु न युक्तः। विकाराणां प्रकृतावनुगमाभावात्। वैपरीत्येन विकारेष्वेव प्रकृतेरनुगमात्। किञ्च प्रथमपाठे व्यर्थ एव तद्धितान्तात्तद्धित-कृति प्रयासः। द्वितीयपाठेऽपि तस्यैवार्थस्य लाभात्।

अत्रैव स्वोपज्ञवृत्तौ क्वचित्पुस्तके 'शब्दोपग्राहितया च' इति पाठो दृश्यते। क्वचिन्न। तत्र तस्य पाठ एव युक्तः। वृषभदेवेन प्रकृतार्थानुगुण्येन तस्य व्याख्या-तत्वात्। जयन्तभट्टेन न्यायमञ्जर्यां तस्य पाठस्य उद्धृत्य व्याख्यातत्वाभावेऽपि न तेन तन्निषेधः कृत इति तस्यौदासीन्यं तत्र पाठे इति अप्रतिषिद्धत्वात्तत्संग्रह एव न्याय्यः। स्वोपज्ञवृत्तावेव—'शब्दोपग्राहितया चावनिष्ठते' इति क्वचित्पाठः, स तु अर्थासंगतेरयुक्तः।

अत्रैव स्वोपज्ञवृत्तौ 'शब्देनाक्रियन्ते' इति, 'शब्देन क्रियन्ते' इति पाठद्वयं दृश्यते तत्राद्यपाठ एव युक्तः। आङर्थस्य द्वितीयपाठेनालाभात्।

अत्रैव स्वोपज्ञवृत्तौ 'प्रत्यक्चैतन्येऽन्तःनिवेशितस्य' 'प्रत्यक् चैतन्येऽन्तः-शब्दसंनिवेशितस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव साधुः। द्वितीय-पाठेऽर्थासंगतेः।

अत्रैव स्वोपज्ञवृत्तौ 'अभिष्यन्दते' 'अभिनिष्यन्दते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। लाघवात्। द्वितीयपाठेऽर्थानाधिक्याच्च।

अत्रैव स्वोपज्ञवृत्तौ समुद्धृते श्लोके 'अभिष्यन्दमानाम्' 'अनभिष्यन्दमानाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अनभिष्यन्दमानायाः ( वैखरीरूपेणा-विवर्तमानायाः ) अन्यत्वेन वेदनासंभवेन अग्रिमग्रन्थविरोधात्।

अत्रैव श्लोके 'एनाम्' इति, 'पूताम्' इति च पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। पूतत्वस्य प्रकृतवाक्यार्थानुपयोगित्वम्। अर्थेनाप्रविभक्ततत्त्वाया नानारूपत्वेन भ्रान्तिरूपप्रतीतौ सत्त्यां पूतत्वासंभवाच्च।

अत्रैव स्वोपज्ञवृत्तौ समुद्धृते गद्यभागे 'मूर्तिक्रियाविवर्तौ अविद्याशक्तिप्रवृत्तिमात्रम्' इति, 'मूर्तिक्रियाविवर्तौ विद्याशक्तिप्रवृत्तिमात्रम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे हि त्रय्यन्तवेदिदर्शनविरोधः। वेदान्तसिद्धान्ते मूर्तिक्रियाविवर्तयोरविद्याशक्तिप्रवृत्तिमात्रत्वाभ्युपगमात्। अत्रैव पाठे 'एतद्धि अविद्याया अविद्यात्वम्' इति अग्रिमग्रन्थसंगतेश्च।

अत्रैव समुद्धृतगद्यभागे 'अविद्याशक्तिप्रवृत्तिमात्रं तौ' 'अविद्याशक्तिप्रवृत्तिमात्रगतौ' 'अविद्याशक्तिप्रवृत्तिमात्रकौ' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, मूर्तिक्रियाविवर्तयोरविद्याशक्तिप्रवृत्तिमात्ररूपत्वेऽपि तद्गतत्वाभावात्। तृतीयपाठोऽपि न युक्तः, मूर्तिक्रियाविवर्तावुद्देश्यीकृत्य तादृशप्रवृत्तिमात्रकत्वतत्त्वान्यत्वाभ्यामनाख्येयत्वोभयविधानार्थं चकाराभावात्, तदध्याहारे गौरवाच्चेति।

अत्रैव गद्यभागे 'विद्यात्मनि' इति, 'विद्यात्मनिष्ठौ' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे—तत्त्वान्यत्वयोः प्रतियोग्यनिर्देशेन तदंशे साकाङ्क्षत्वात्। अत्रैव गद्यभागे 'एतद्धि' इत्यस्याग्रे 'तद्' इत्यधिकः पाठो वर्तते, स तु व्यर्थत्वादुपेक्ष्यः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते क्वाचित्के गद्यभागे 'संवर्ताद्' 'वर्तमानात्' 'संवृत्तात्' इति पाठत्रयम्, तदग्रे 'अनाकृताद्' 'व्याकृताद्' इति पाठद्वयञ्च समुपलभ्यते। तत्र प्रथमे पाठत्रये मध्यमपाठ एव युक्तः, अर्थसंगतेः। इतरत् पाठद्वयन्तु अर्थासंगत्या उपेक्ष्यम्। ततः परस्मिन् पाठद्वये तु 'व्याकृतात्' इत्येव पाठो युक्तः। अनाकृताद् इत्यस्य अव्याकृतार्थकत्वे अन्यार्थकत्वे वाऽर्थासंगतेः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुदाहृते पद्ये 'आभासेऽप्यनवस्थितः' 'आभासोऽप्यनवस्थितः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, यः सर्वविकल्पानां सर्वेषां दृश्यानां स्वस्मिन् आभासेऽपि वस्तुतस्तद्वत्तयानवस्थित इत्यर्थसंगतेः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुदाहृते पद्ये 'प्रकृतित्वमपि प्राप्तान्' 'प्रकृतित्वमनुप्राप्तान्' इतिपाठद्वयम्, 'विकारानाकरोति सः' 'विकारान्यक्करोति सः' इति च पाठद्वयं वर्तते। तत्राद्ये पाठद्वये प्रथमपाठ एव युक्तः। प्रकृतित्वं प्राप्तानपि विकारान् स आकरोति, आकारयुक्तान् करोति, व्याकरोति इति यावद्, इत्यर्थसंगतेः। द्वितीयपाठेऽन्वर्थस्य क्तप्रत्ययेनैव क्रोडीकाराद् व्यर्थ एवानोः प्रयोगः। द्वितीयस्मिन्नपि पाठद्वये प्रथमपाठ एव युक्तः। न्यक्काररूपस्यार्थस्यात्राविवक्षितत्वात्। अस्यैव पदस्य तृतीयपादे, ऋतुधामेव, 'ऋतुधर्मेव' इति पाठद्वयम्, 'ग्रीष्मान्ते' 'वर्त्मान्ते' 'घर्मान्ते' इति पाठत्रयं च दृश्यते। तत्राद्ये पाठद्वये आद्यपाठ एव साधुः। वृषभदेवेन ऋतुधामपदस्यैव व्याख्यातत्वाद्, तत्रैव पाठेऽर्थसंगतेश्च। तदनन्तरे पाठत्रयेऽपि आद्यपाठ एव साधुः,

तत्रार्थसंगतेः। द्वितीयपाठे तु नास्ति कथमप्यर्थसंगतिः। तृतीयपाठेऽपि नार्थसंगतिः। घर्मान्तस्य रात्रावपि संभवात्, तत्र च महतां मेघसंप्लवानामसंभवात्। एतदग्रिमपद्ये तृतीयपादे 'अङ्गाराङ्कितम्' 'अङ्गारकिणम्' 'अङ्गारांकनम्' इति पाठत्रयं दृश्यते। तत्र प्रथमपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे च न कथमप्यर्थसंगतिः। एतदग्रिमपद्ये प्रथमपादे—'आकृतिगोत्रस्थाद्' 'आकृतिगोत्रस्था' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवेन तथैव व्याख्यानात्। द्वितीयपाठे तु अर्थासंगतिः। नहि व्यक्तिग्रामा आकृतिगोत्रस्थाः। आकृतिव्यक्त्योर्नित्यत्वानित्यत्वरूपारूपवत्त्वसावयवत्वानवयत्वादिभिर्वैसादृश्यात्। अत्रैव 'व्यक्तिग्रामाः, 'व्यक्तग्रामाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नास्ति कथमप्यर्थसंगतिः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते पद्ये सप्तमे चतुर्थे पादे 'दृष्टिभेदनिबन्धनम्' 'दृष्टभेदनिबन्धनम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, दृष्टय एव भेदे निबन्धनानि ज्ञापकनिमित्तानि यस्य तत्तथाभूतम्, न तु वस्तुतो भिन्नमित्यर्थसंगतेः। द्वितीयपाठे तु भेदनिबन्धनानि स्वरूपतो नोक्तानि इति साकाङ्क्षता तस्येति, न तस्य शोभनत्वम्।

अत्रैव समुद्धृतेऽष्टमपद्ये प्रथमपादे क्वचित्पुस्तके 'शान्त' इति पदानन्तरं 'विद्यात्मकम्' इति पाठो नास्ति, क्वचित्पुस्तके तु 'विद्यात्मको' इति पाठो वर्तते, इतः प्राक् 'शान्त' इति पदं नास्ति, तदेतस्मिन् पाठद्वये आलोच्यमाने 'शान्तविद्यात्मकम्' इति पाठः साधुर्भाति। ज्योतिषो विशेषणत्वेन नपुंसकलिङ्गस्यैवौचित्यात्। अस्यैव पद्यस्य द्वितीयपादे—'तदुदैतदविद्यया' इति पाठो दृश्यते। टीकायां तु वृषभदेवेन—'तदुहैतद् विद्यया' इति पाठो व्याख्यायते इत्ययमेव पाठो युक्तः, द्वितीयपाठेऽर्थासंगतेः।

अत्रैव समुद्धृते नवमपद्ये तृतीयपादे 'तस्याः' इति, 'तस्याम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, तस्या अविद्यायाः, परिवर्तानाम् परिणामानाम्, परिमाणमियत्ता न विद्यते इत्यर्थसंगतेः। द्वितीयपाठे तु परिणामिनोऽपि निर्देशाद् वाक्यस्य तदंशे साकाङ्क्षता स्यात्। अत्रैव पादे 'यो लब्धसंस्कारो' 'चालब्धसंस्कारात्' 'या लब्धसंस्कारा' इति पाठत्रयं दृश्यते। तत्रान्त्यपाठ एव युक्तः, अर्थसंगतेः। इतरस्मिन् पाठद्वये तु नास्ति कथमप्यर्थसंगतिः।

अत्रैव समुद्धृते एकादशे पद्ये प्रथमपादे—'तथेदममृतं ब्रह्म, 'तथैतदमृतं ब्रह्म' 'तथैवैतत्पृथग् ब्रह्म' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। इदमः सन्निकृष्टार्थकत्वाद्, ब्रह्मणश्चात्मत्वेन संनिकृष्टत्वात्। द्वितीयपाठस्तु न युक्तः, एतदः समीपतरार्थकत्वाद्, ब्रह्मणश्च 'तद्दूरे तदवन्तिके' इति मन्त्रे दूरान्तिकत्वयोरुभयोर्वर्णनेन समीपतरत्वासंभवात्। यद्यपि ब्रह्मण आत्मत्वेन समीपतरत्वं संभवत्येव, तथापि कथंचिद् भेदकल्पनायां तु समीपत्वं संभवति, न समीपतरत्वम्, दूरत्वस्यापि मन्त्रे श्रवणाद् इति।

## 'एकमेव यदाम्नातम्' इति कारिका ।। २ ।

अस्या द्वितीये पादे 'भिन्नशक्तिव्यपाश्रयाद्' इति 'भिन्न शक्तिव्यपाश्रयात्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव साधुः, वृषभदेवेन तस्यैव पाठस्य प्रतीकं कृत्वा द्विधा व्याख्यानात्। अस्या एव चतुर्थे पादे 'पृथक्त्वेनेव वर्तते' 'पृथक्त्वेन विवर्तते' 'पृथक्त्वेन च वर्तते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, भेदस्याविद्यकत्वेनावास्तवत्वाद्, इवशब्दप्रयोगस्य युक्तत्वात्। यद्यपि द्वितीयपाठेऽपि स एवार्थ आयाति, विवर्तसत्ताया अवास्तवत्वात्, तथापि द्वितीयपाठे शक्तिभेदो ब्रह्मणो विवर्त इति पूर्वं प्रतीतिर्भवति, ततश्च विवर्तरूपतया तत्सत्ताया अवास्तवत्वानुमितिरिति। प्रथमपाठे तु प्रथमत एव भेदसत्ताया अवास्तवत्वप्रतीतिरिति विवक्षितार्थस्य साक्षात्प्रत्यायकत्वात् प्रथमपाठ एव युक्तः। तृतीयपाठस्य तु अतिस्फुटमेवायुक्तत्वम्, ब्रह्मणि वस्तुमूलस्य पृथक्त्वस्य वर्तमानत्वात्। अत एव 'पृथक्त्वेनैव वर्तते' इति क्वाचित्कः चतुर्थोऽपि पाठोऽयुक्त एव।

अस्या एव कारिकायाः स्वोपज्ञवृत्तौ समुद्धृते बृहदारण्यकोपनिषद्वाक्ये 'सलिल एवैको द्रष्टाऽद्वैत एक एवाभवत्' इति, 'सलिलमेवाद्वैतमेकमेवाभवत्' इति च पाठद्वयं दृश्यते। तत्र प्रथम पाठ एवोपनिषदमनुसरति, न तु चरमः। चरमवाक्ये द्रष्टृपदानुक्तेर्जगत्कारणस्य चेतनत्वाप्रतीत्या चेतनो जगत्कारणमिति औपनिषदसिद्धान्तविरोधात्।

तत्रैवाग्रे 'प्रणव एवैकस्त्रेधा व्यभज्यत' इति, 'प्रणव एवैकस्त्रेधा विभज्यते' इति च पाठद्वयं दृश्यते। तत्र प्रथमः पाठ एव युक्तः, त्रेधाविभागस्य वर्तमानत्वाभावादतीतत्वाच्च।

अत्रैवाग्रे 'तदसदासीत्' इति, 'तदसदसदासीत्' इति, 'तदसदासन्' इति च पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः, तस्यैव पाठस्यार्थसंगत्या भाष्यकारादिभिर्व्याख्याततत्वाच्च। इतरत् पाठद्वयन्तु अर्थासंगत्या हेयम्। स्वोपज्ञवृत्तौ 'भिन्नशक्तिव्यपाश्रयात्' इति समस्तपाठः प्रतीकतया न युक्तः, व्यस्तपाठस्यैव युक्तत्वेन प्राक् समर्थिततत्वात्। अत्रैवाग्रे 'एकत्वस्याविरोधेन' 'एकत्वस्य बाधेन' इति च पाठद्वयं स्वोपज्ञवृत्तौ दृश्यते। तथाद्यपाठ एव युक्तः, अर्थसंगतेः। शब्दतत्त्वे ब्रह्मणि एकत्वस्य बाधाभावेन द्वितीयपाठस्यायुक्तत्वात्। 'भिन्नार्थप्रत्यवभासमात्रायाम्' 'भिन्नार्थप्रत्यवभासमानायाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः, टीकायां तस्यैव पाठस्य व्याख्यानाच्च। द्वितीयपाठस्तु न युक्तः। अर्थासंगतेः, समासासंगतेश्च।

अस्या एव व्याख्याया स्वोपज्ञवृत्तौ 'वृक्षाद्याकारावग्रहः' इति, 'भेदाकारावग्रहः' इति च पाठद्वयं दृश्यते। अत्रापि प्रथम एव पाठः शोभनः। वृक्षादिपदस्य परस्परं भिद्यमानवस्तुविशेषवाचित्वात्, भेदपदस्य च तादृशवस्तुसामान्य-

वाचित्वेन स्फुटार्थकत्वात् । भेदपदस्य कर्मघञन्तत्वं भावघञन्तत्वं वा इत्येव संदिग्धार्थकत्वाच्च । भावघञन्तत्वेऽर्थासंगत्या कर्मघञन्तत्वनिश्चयेऽर्थप्रतीतौ विलम्बाच्च ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'एकज्ञानतत्त्वानतिक्रमाद्' इति 'एकज्ञानानतिक्रमात्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । तस्यैव पाठस्यार्थसंगत्या टीकायां व्याख्यानात् । द्वितीयपाठस्य समनन्तरपूर्ववाक्यार्थेन सह विरोधादेतदर्थस्य पूर्ववाक्यार्थे हेतुत्वासंभवाच्च ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'तन्तुप्रकाशवत् प्रकाश्यावग्रहाभ्यः' इति, 'तत्तत्प्रकाश्यावग्रहेभ्यः' इति, 'तत्तत्प्रकाशवत् प्रकाश्यावग्रहाभ्यः' इति च पाठत्रयं दृश्यते । अत्राद्य पाठ एव युक्तः । तस्यैवार्थसंगत्या टीकायां व्याख्यातत्वात् । द्वितीयपाठस्तु कथमपि न युक्तः, अस्य पाठस्य पुंस्त्वेन—'आत्मामात्राभ्यः' इत्येतद् विशेषणत्वासंभवात् । तृतीयपाठोऽपि न युक्तः, एकस्यैव सांख्यीयस्य प्रकाशस्य टीकायां दृष्टान्तत्वेनोपन्यासात् । 'अपरस्तच्छब्दः पुनरर्थे' इति टीकादर्शनेन शब्दपाठस्यैव युक्तत्वप्रतीतेश्च । तच्छब्दस्य पुनरर्थकत्वे मानाभावाच्च । अत्र पाठे तच्छब्दे वीप्साभ्रमसंभवाच्च ।

अत्रैव स्वोपज्ञवृत्तौ 'तादात्म्येऽपि सति' इति, 'तादर्थ्येऽपि सति' इति च पाठद्वयं दृश्यते । तत्र पूर्व एव पाठः शोभनः । अपिशब्दस्य विरोधावद्योतकत्वात् । 'पृथक्तत्त्वमित्येवावसीयते' इत्यग्रिमग्रन्थस्वारस्याच्च । द्वितीयपाठस्तु न युक्तः । तादर्थ्यस्य तत्त्वभेदस्य च स्वरूपतो विरोधाभावात् । अत्रैव स्वोपज्ञवृत्तौ 'पृथक्तत्त्वमिवावसीयते' 'पृथक्त्वमिवावसीयते' इति, पृथक्तत्त्वेनेवावसीयते' इति च पाठत्रयं दृश्यते । तत्राद्यपाठ एवार्थसंगत्या टीकायां व्याख्यातः साधुश्च । द्वितीयपाठस्तु न युक्तः, प्रथमान्तस्य तत्पदस्य प्रागुपात्तस्य एतदन्वयायोग्यत्वात् । अस्य पाठस्याभिप्रेतत्वे तु तस्येति षष्ठ्यन्तमेव तत्पदं प्रागुपादीयेत । तृतीयपाठोऽपि न युक्तः । अस्यापि प्रथमान्तेन तत्पदेन सहान्वयायोग्यत्वात् ॥ २ ॥

## 'अध्याहितकलां यस्य' इति कारिका ॥ ३ ।

अस्याः प्रथमे पादे 'अध्याहितकलां यस्य' इति, 'अध्याहृताः कलां यस्य' इति, 'अध्याहृतकलां यस्य' इति, 'अध्यासितकलां यस्य' इति, 'अध्याहितकला यस्य' इति च पाठपञ्चकं तत्र तत्रोपलभ्यते । तत्राद्यपाठ एव युक्तः । हेलाराजेन जातिसमुद्देशे 'आत्मभूतः क्रमः' ( ३ । १ । ३७ ) इत्यादिश्लोकव्याख्यायाम्, कालसमुद्देशे 'जलयन्त्रभ्रमावेश०' ( ३ । ९ । १५ ) इत्यादिश्लोकव्याख्यायां चास्य श्लोकस्य संगृहीतत्वात् । तत्र चास्यैव पाठस्योपलब्धेः, अस्यैव पाठस्य वृषभदेवेनात्र व्याख्याततत्वाच्च । इतरे च पाठा अर्थासंगत्या क्वचिदर्थानिर्देशनाच्चोपेक्ष्या इति ।

अस्या एव कारिकायाः स्वोपज्ञवृत्तौ 'जन्ममय्यः' इति, 'जन्मवत्त्यः' इति च पाठद्वयं दृश्यते । तत्रान्त्य एव पाठो युक्तः । कालपरतन्त्राणां शक्तीनां जन्मवत्त्वस्यैव

युक्तत्वात्, जन्मरूपत्वरूपस्य जन्मविकारत्वस्य वा जन्ममयत्वस्य तासु असंभवात्, टीकायामपि अन्त्यपाठस्यैवाभ्युपेत्य व्याख्याततत्वाच्च ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'वैश्वरूपस्य' इति, 'स्वरूपस्य च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः, टीकायां तस्यैव व्याख्याततत्वाच्च । द्वितीयपाठस्तु न युक्तः, अर्थासंगतेः । नानारूपत्वरूपस्य हि वैश्वरूप्यस्य प्रतिबन्धाभ्यनुज्ञे युगपत्संभवतः उदाहृतं च तथैव टीकायाम्, न तु एकस्यैव स्वरूपस्य युगपत् ते संभवतः, विरुद्धत्वात् । अत्रैवाग्रे स्वोपज्ञवृत्तौ 'सर्वेषां हि विकाराणाम्' इति, 'सर्वेषां विकाराणाम्' इति च पाठद्वयं दृश्यते । तत्र हेत्वर्थकस्य हि शब्दस्योपादानं युक्तमेव, अपेक्षितत्वात् ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'कारणान्तरेष्वप्यपेक्षावताम्' इति, 'कारणान्तरेऽप्यपेक्षावताम्' इति च पाठद्वयं दृश्यते। अत्राप्याद्यपाठ एव युक्तः। कारणान्तरेषु बहुत्वसंभवेन बहुवचनान्तपाठस्यैव युक्तत्वात्। एकवचनोपादाने तु जातावेकवचनं व्यक्तौ वेति संदेहसंभवात् ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'प्रतिबन्धजन्मनाम्' इति, 'प्रतिबद्धजन्मनाम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव यद्यपि कर्मघञन्तत्वाभ्युपगमेन टीकायां व्याख्यातस्तथापि तत्र पाठे कर्मघञन्तत्वभावघञन्तत्वयोः संदेहोत्थानाद् असंदेहार्थमन्त्यपाठ एव युक्तः । अत्रैवाग्रे स्वोपज्ञवृत्तौ 'प्रविभज्यमानाविकारमात्रागतम्' इति, 'प्रविभज्यमानाऽपि क्रमं मात्रागतम्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु दशदाडिमादिवाक्यवदनर्थक एव ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'दण्डलेखावच्छेदम्' इति, 'दण्डलेखावच्छेदकम्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, तुलासूत्रे, तुलासूत्रमिति प्राक्तने पाठद्वयेऽपि अस्य संबन्धसंभवात् । द्वितीयपाठस्य तु न तत्र संबन्धसंभवः, आद्यपाठस्यैव टीकायां व्याख्यानाच्च ।

तत्रैवाग्रे स्वोपज्ञवृत्तौ 'तत्रैवमभून्नाभूदिति' इति, 'तत्रैवमभूदिति' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, 'पौर्वापर्यव्यवस्थाविकल्पे सति' इत्युत्तरग्रन्थानुरोधात्, प्रथम पाठे एव पूर्वकाले भावाभावयोर्विकल्पस्य संभवाच्च ।

अत्रैवाग्रे 'अपूर्वापरस्य भावस्य' 'अपूर्वापरीभावस्य' अपूर्वापरस्य' 'अपूर्वस्यापरस्य' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे विशेष्यासिद्धिः । एवं तृतीयचतुर्थपाठयोरपि सैव ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'षट् परिणामानां सत्ताविकाराणाम्' इति 'षट् परिणामाः तत्र सत्ताविकाराणाम्' इति च पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः, अस्मिन् पाठे विकारा इत्यस्य व्याख्या परिणामा इति 'भावभेदस्य' इत्यस्य व्याख्या सत्ताविकाराणामिति स्यात्, परिणामानामिति पाठस्तु मूले न दृश्यते इत्यसमञ्जसम् ।

वाचित्वेन स्फुटार्थकत्वात्। भेदपदस्य कर्मघञन्तत्वं भावघञन्तत्वं वा इत्येव संदिग्धार्थकत्वाच्च। भावघञन्तत्वेऽर्थासंगत्या कर्मघञन्तत्वनिश्चयेऽर्थप्रतीतौ विलम्बाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'एकज्ञानतत्त्वानतिक्रमाद्' इति 'एकज्ञाननानतिक्रमात्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तस्यैव पाठस्यार्थसंगत्या टीकायां व्याख्यानात्। द्वितीयपाठस्य समनन्तरपूर्ववाक्यार्थेन सह विरोधादेतदर्थस्य पूर्ववाक्यार्थे हेतुत्वासंभवाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'तन्तुप्रकाशवत् प्रकाश्यावग्रहाभ्यः' इति, 'तत्तत्प्रकाश्यावग्रहेभ्यः' इति, 'तत्तत्प्रकाशवत् प्रकाश्यावग्रहाभ्यः' इति च पाठत्रयं दृश्यते। अत्राद्य पाठ एव युक्तः। तस्यैवार्थसंगत्या टीकायां व्याख्यानत्वात्। द्वितीयपाठस्तु कथमपि न युक्तः, अस्य पाठस्य पुंस्त्वेन—'आत्मामात्राभ्यः' इत्येतद् विशेषणत्वासंभवात्। तृतीयपाठोऽपि न युक्तः, एकस्यैव सांख्यीयस्य प्रकाशस्य टीकायां दृष्टान्तत्वेनोपन्यासात्। 'अपरस्तच्छब्दः पुनरर्थे' इति टीकादर्शनेन शब्दपाठस्यैव युक्तत्वप्रतीतेश्च। तच्छब्दस्य पुनरर्थकत्वे मानाभावाच्च। अत्र पाठे तच्छब्दे वीप्साभ्रमसंभवाच्च।

अत्रैव स्वोपज्ञवृत्तौ 'तादात्म्येऽपि सति' इति, 'तादर्थ्येऽपि सति' इति च पाठद्वयं दृश्यते। तत्र पूर्व एव पाठः शोभनः। अपिशब्दस्य विरोधावद्योतकत्वात्। 'पृथक्तत्त्वमित्येवावसीयते' इत्यग्रिमग्रन्थस्वारस्याच्च। द्वितीयपाठस्तु न युक्तः। तादर्थ्यस्य तत्त्वभेदस्य च स्वरूपतो विरोधाभावात्। अत्रैव स्वोपज्ञवृत्तौ 'पृथक्तत्त्वमिवावसीयते' 'पृथक्त्वमिवावसीयते' इति, पृथक्तत्त्वेनेवावसीयते' इति च पाठत्रयं दृश्यते। तत्राद्यपाठ एवार्थसंगत्या टीकायां व्याख्यातः साधुश्च। द्वितीयपाठस्तु न युक्तः, प्रथमान्तस्य तत्पदस्य प्रागुपात्तस्य एतदन्वयायोग्यत्वात्। अस्य पाठस्याभिप्रेतत्वे तु तस्येति षष्ठ्यन्तमेव तत्पदं प्रागुपादीयेत। तृतीयपाठोऽपि न युक्तः। अस्यापि प्रथमान्तेन तत्पदेन सहान्वयायोग्यत्वात्॥ २॥

## 'अध्याहितकलां यस्य' इति कारिका॥ ३।

अस्याः प्रथमे पादे 'अध्याहितकलां यस्य' इति, 'अव्याहताः कला यस्य' इति, 'अव्याहतकलां यस्य' इति, 'अध्यासितकलां यस्य' इति, 'अध्याहितकला यस्य' इति च पाठपञ्चकं तत्र तत्रोपलभ्यते। तत्राद्यपाठ एव युक्तः। हेलाराजेन जातिसमुद्देशे 'आत्मभूतः क्रमः' (३।१।३७) इत्यादिश्लोकव्याख्यायाम्, कालसमुद्देशे 'जलयन्त्रभ्रमावेश०' (३।९।१५) इत्यादिश्लोकव्याख्यायां चास्य श्लोकस्य संगृहीतत्वात्। तत्र चास्यैव पाठस्योपलब्धेः, अस्यैव पाठस्य वृषभदेवेनात्र व्याख्यातत्वाच्च। इतरे च पाठा अर्थासंगत्या क्वचिदर्थानिर्देशनाच्चोपेक्ष्या इति।

अस्या एव कारिकायाः स्वोपज्ञवृत्तौ 'जन्ममय्यः' इति, 'जन्मवत्त्यः' इति च पाठद्वयं दृश्यते। तत्रान्त्य एव पाठो युक्तः। कालपरतन्त्राणां शक्तीनां जन्मवत्त्वस्यैव

युक्तत्वात्, जन्मरूपत्वरूपस्य जन्मविकारत्वस्य वा जन्ममयत्वस्य तासु असंभवात्, टीकायामपि अन्त्यपाठस्यैवाभ्युपेत्य व्याख्याततत्वाच्च ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'वैश्वरूपस्य' इति, 'स्वरूपस्य च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः, टीकायां तस्यैव व्याख्याततत्वाच्च। द्वितीयपाठस्तु न युक्तः, अर्थासंगतेः। नानारूपत्वरूपस्य हि वैश्वरूप्यस्य प्रतिबन्धाभ्यनुज्ञे युगपत्संभवतः उदाहृतं च तथैव टीकायाम्, न तु एकस्यैव स्वरूपस्य युगपत् ते संभवतः, विरुद्धत्वात्। अत्रैवाग्रे स्वोपज्ञवृत्तौ 'सर्वेषां हि विकाराणाम्' इति, 'सर्वेषां विकाराणाम्' इति च पाठद्वयं दृश्यते। तत्र हेत्वर्थकस्य हि शब्दस्योपादानं युक्तमेव, अपेक्षितत्वात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'कारणान्तरेष्वप्यपेक्षावताम्' इति, 'कारणान्तरेऽप्यपेक्षावताम्' इति च पाठद्वयं दृश्यते। अत्राप्याद्यपाठ एव युक्तः। कारणान्तरेषु बहुत्वसंभवेन बहुवचनान्तपाठस्यैव युक्तत्वात्। एकवचनोपादाने तु जातावेकवचनं व्यक्तौ वेति संदेहसंभवात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'प्रतिबन्धजन्मनाम्' इति, 'प्रतिबद्धजन्मनाम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव यद्यपि कर्मघञन्तत्वाभ्युपगमेन टीकायां व्याख्यातस्तथापि तत्र पाठे कर्मघञन्तत्वभावघञन्तत्वयोः संदेहोत्थानाद् असंदेहार्थमन्त्यपाठ एव युक्तः। अत्रैवाग्रे स्वोपज्ञवृत्तौ 'प्रविभज्यमानाविकारमात्रागतम्' इति, 'प्रविभज्यमानाऽपि क्रमं मात्रागतम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु दशदाडिमादिवाक्यवदनर्थक एव।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'दण्डलेखावच्छेदम्' इति, 'दण्डलेखावच्छेदकम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, तुलासूत्रे, तुलासूत्रमिति प्राक्तने पाठद्वयेऽपि अस्य संबन्धसंभवात्। द्वितीयपाठस्य तु न तत्र संबन्धसंभवः, आद्यपाठस्यैव टीकायां व्याख्यानाच्च।

तत्रैवाग्रे स्वोपज्ञवृत्तौ 'तत्रैवमभून्नाभूदिति' इति, 'तत्रैवमभूदिति' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, 'पौर्वापर्यव्यवस्थाविकल्पे सति' इत्युत्तरग्रन्थानुरोधात्, प्रथम पाठे एव पूर्वकाले भावाभावयोर्विकल्पस्य संभवाच्च।

अत्रैवाग्रे 'अपूर्वापरस्य भावस्य' 'अपूर्वापरीभावस्य' अपूर्वापरस्य' 'अपूर्वस्यापरस्य' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे विशेष्यासिद्धिः। एवं तृतीयचतुर्थपाठयोरपि सैव।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'षट् परिणामानां सत्ताविकाराणाम्' इति 'षट् परिणामाः तत्र सत्ताविकाराणाम्' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अस्मिन् पाठे विकारा इत्यस्य व्याख्या परिणामा इति 'भावभेदस्य' इत्यस्य व्याख्या सत्ताविकाराणामिति स्यात्, परिणामानामिति पाठस्तु मूले न दृश्यते इत्यसमञ्जसम्।

अत्रैवाग्रे 'योनय उपप्लवन्ते,' 'योनय इवोपप्लवन्ते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, वस्तुतो जन्मादिविकाराणां सत्ताविकारप्रपञ्चयोनित्वाभावात्।

अत्रैवाग्रे 'जातिसमुद्देशे तु सत्ताविभागे' इति, 'जातिसमुद्देशे सत्ताविभागे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अत्र भावप्रविकारा न्यक्षेण नोक्तास्तत्र तु तथा वक्ष्यन्ते इति पूर्वस्मादुत्तरत्र विशेषमवद्योतयितुं तुशब्दपाठस्यौचित्यात् ॥३॥

## 'एकस्य सर्वबीजस्य' इति कारिका ॥ ४ ।

तस्याश्चतुर्थे पादे 'भोगरूपेण' 'भोग्यरूपेण' 'भुजिरूपेण' इति पाठत्रयं दृश्यते। तत्राद्य पाठ एव युक्तः, अपुनरुक्तार्थकत्वात्। द्वितीयपाठस्तु न युक्तः, पूर्वोपात्तभोक्तव्यपदेन पुनरुक्तार्थकत्वात्। तृतीयपाठोऽपि न युक्तः, भुजिशब्देन धातोरेव प्रतीतेः। तथा चानुशासनम्—'इक्श्तिपौ धातुनिर्देशे' ( वा० -५५ ) इति। धात्वर्थबोधस्तु लक्षणया स्यादिति सैव दोषः।

अस्या एव स्वोपज्ञवृत्तौ 'चानिरुक्ताविरोधिशक्त्युपग्राह्यस्य' इति, 'चानुरक्ताविरोधिशक्त्युपग्राह्यस्य' इति च पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः, पूर्वपदार्थैः सहान्वयाविरोधात्, द्वितीयपाठे तु पूर्वपदार्थैः सहान्वयविरोधः, अनुरक्ताविरोधिनोरेकार्थपर्यवसानेन पौनरुक्त्यञ्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ 'परस्परविलक्षणा' इति, 'व्यावृत्तत्वलक्षणा' इति, 'विलक्षणा' इति च पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अस्मिन्पाठे जातिप्रयुक्तस्य वैलक्षण्यस्य प्रतीतेः। भोक्तृभोक्तव्यभोगग्रन्थय इत्युत्तरत्र पाठाद् द्वितीयतृतीयपाठयोस्तु न साधुत्वम्। जातिप्रयुक्तं वैलक्षण्यं व्यक्तिप्रयुक्तं वा इति संदेहसंभवात्। अत्रैव 'भोक्तृभोक्तव्यभोगग्रन्थयः' इति, 'भोक्तव्यभोगग्रन्थयः' इति च पाठद्वयं दृश्यते। तत्राद्यः पाठ एतत्कारिकानुसारित्वेन ग्राह्यः। द्वितीयस्तु अतादृशत्वेन हेयः। अत्रैव—'तस्य च ग्रन्थ्यन्तरसमतिक्रमेण' इति क्वचित्पाठः। क्वचित्तु चशब्दरहितः पाठः। तत्र चकारसहित एव पाठो युक्तः। तत्र चकार एवार्थकः। एवञ्चात्र पाठेऽर्थसंगतिः। अत्रैवाग्रे —'विवृत्तग्रन्थिपरिच्छेदस्येयम्' इति, 'विवृत्तग्रन्थिपरिच्छेदस्येवेयम्' इति च पाठद्वयं दृश्यते। अत्रेव शब्दपाठोऽनर्थकः।

अत्रैवाग्रे 'प्रकल्पते' 'प्रवर्तते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अनेकधा व्यवहारव्यवस्थाप्रवृत्तेः प्रत्यक्षसिद्धत्वेन प्रमाणानपेक्षत्वात्। प्रसिद्धिरूपायाः प्रक्लृप्तेस्तु अस्तिप्रमाणेनोपपादनापेक्षा। ॥४॥

## 'प्राप्त्युपायोऽनुकारश्च' इति कारिका ॥ ५ ।

अस्या व्याख्यायां स्वोपज्ञवृत्तौ—'वैकरण्यमसाधनापरितृप्तिः' 'वैयधिकरण्यमसाधनापरितृप्तिः' 'वैकरण्यस्यासाधनापरितृप्तिः' 'वैकरण्यस्यासौगम्याच्च परितृप्तिः' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। वैकरण्यम्—करणानाम-

भावः—सूक्ष्मशरीरराहित्यम्, तद्राहित्ये च स्थूलशरीरराहित्यं कैमुतिकन्यायसिद्धम्।

यद्यपि द्वितीयपाठेऽपि विगतमधिकरणं चेष्टाधिकरणं शरीरं यस्य तस्य भावो वैयधिकरण्यम् इति व्याख्यातुं शक्यते तथाप्येतत् क्लिष्टकल्पनम्। अधिकरणपदस्य सामान्यार्थकस्य विशेषपरत्वे नियामकासंनिधानात्। तृतीयचतुर्थपाठयोरयुक्तत्वं तु स्फुटमेव, अर्थासंगतेः। अत्रैव परितृप्तिरित्यस्य स्थाने 'परिवृत्तिः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, अर्थासंगतेः।

अत्रैव—'आत्मतत्त्वम्' 'आप्तत्वमि'ति पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः अर्थसंगतेः, 'निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः' इति मुक्तिस्वरूपनिरूपणे सुरेश्वरवार्तिकाच्च। क्वचित्तु आत्मतत्त्वमिति न दृश्यते। सा तु न्यूनता ग्रन्थस्य। अद्वैतिसंमतमुक्त्यसंग्रहात्। आप्तत्वमिति पाठस्तु न युक्तः, अर्थासंगतेः। विदेहमुक्तौ यथार्थवक्तृत्वरूपाप्तत्वासंभवात्। जीवन्मुक्तौ संभवेऽपि अन्यत्रापि संभवात्।

अत्रैव—'आप्तकामत्वम्' 'आत्मकामत्वम्' इति पाठद्वयं दृश्यते। तदुभयम् 'आत्मकामः, आप्तकामः' इति श्रुत्युक्तत्वाज्जीवन्मुक्तौ संभवदपि विदेहमुक्तौ न संभवति, तत्र वैकरण्येन कामनाया अभावात्। यदि तु आप्ताः समाप्ताः कामा यस्य यस्मिन् वा इति विग्रहे आप्तकामत्वं व्युत्पाद्यते तदा तद्विदेहमुक्तौ संभवति, आत्मकामत्वं तु कथमपि तत्र न संभवति। आप्तकामत्वस्यैवं विदेहमुक्तौ विदेहमुक्तौ संभवेऽपि अनागन्तुकार्थत्वमित्यनेन गतार्थत्वमित्येतद्द्वयमपि जीवन्मुक्तिपरतया कथञ्चिदत्र योज्यम्। आप्तकामत्वञ्चात्र प्राप्तकामत्वरूपम्।

अत्रैव—'अनागन्तुकार्थत्वम्' 'अनुगतकार्यत्वम्' 'अनागतकार्यत्वम्' 'आगन्तुकार्थत्वम्' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः। न आगन्तुका जन्या अर्था यस्मिन् स तथा, तस्य भावस्तत्त्वमिति व्युत्पत्त्याऽर्थसंगतेः। अन्यस्मिन् पाठत्रये तु अर्थासंगतिः स्पष्टैव, विदेहयुक्तौ तेषां धर्माणामसंभवात्। अत्रैव—'आत्ममात्रास्वसमावेशः' 'आत्ममात्रान्तसमावेशः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। कालवृत्तीनां कालव्यापाराणाम् आत्ममात्रासु आत्मस्वरूपेषु असमावेशः=असंसर्ग इत्येवमर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः, विदेहमुक्तौ कालवृत्तीनामात्ममात्रान्ते समावेशाभावात्। अत्रैव—'सर्वात्मना नैरात्म्यम्' 'समात्मनां नैरात्म्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शून्यवादिमते सर्वरूपेण नैरात्म्यमित्यर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। तथाहि—समशब्दस्य तुल्यार्थकत्वे समात्मनामित्यस्य वैयर्थ्यम्। नैरात्म्यमित्यनेनैवार्थसिद्धेः। तस्य सर्वार्थकत्वेऽपि विभक्त्यर्थासंगतिः। समात्मनामित्यस्य वैयर्थ्यादेव।

अत्रैवाग्रे—'शुक्लमजरं ज्योतिः' 'शुक्लमन्तर्ज्योतिः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठेऽन्तरित्यस्य आन्तरमित्यनेन गतार्थत्वात्। अत्रैव वाक्ये—क्वचित्पुस्तके—वीते इति, क्वचिद् वाते इति, क्वचित्पीते इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। पाठद्वयेऽर्थासंगतिः स्पष्टैव। यद्यपि तत्रापि पाठद्वये वाघातोः

क्तप्रत्यये वाते इत्यस्य गते इत्यर्थसंभवः, पीते इत्यस्य च ज्योतिषा निपीते निगीर्णे विनाशिते इत्यर्थसंभवः, तथापि वाते इत्यत्र वायुरूपार्थे संशयः, पीते इत्यस्य च विनाशिते इत्यर्थे लक्षणैव जघन्यवृत्तिरूपदोषः। वीते इति पाठे तु विगते इत्यर्थस्य शक्त्यैव संभवः। विपूर्वकादिणधातोर्वीधातोर्वा क्तप्रत्यये वीतपदस्य विगतार्थकस्य सिद्धेः।

अत्रैवाग्रे– 'असाक्षात्कृतधर्मभ्योऽपरेभ्यः' इति, 'असाक्षात्कृतधर्मेभ्यः परेभ्यः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—अपरेभ्य इत्यस्य अवरेभ्य इत्यर्थः। पौर्वापर्यशब्दादौ तथा दृष्टत्वात्। अवरत्वञ्चासाक्षात्कृतधर्मत्वस्योपपादकत्वम्। पूर्वकाले ऋषीणां सत्त्वस्य रजस्तमोभ्यामनभिभवेन साक्षात्कृतधर्मत्वसंभवात्। अवरस्मिन् काले तु सत्त्वस्य असम्यगाहारविहारसंभूतरजस्तमोगुणोद्रेकाभिभवेन असाक्षात्कृतधर्मत्वमुपपद्यते। 'असाक्षात्कृतधर्मभ्यः परेभ्यः' इति पाठे तु परत्वं भिन्नत्वं भिन्नकालावस्थितत्वं वा भवतु, उभयथापि परेभ्य इति व्यर्थमेव। असाक्षात्कृतधर्मभ्य इत्यनेनैवार्थसिद्धेः, साक्षात्कृतधर्मापिकालभेदश्च ततः पूर्वकालेऽपि संभवति इति अतिप्रसक्तञ्च। उत्तरकालभाविनामृषीणां स्वपूर्वकालिकेभ्यः प्रलयपूर्वकालिकेभ्यश्च असाक्षात्कृतधर्मभ्य ऋषिभ्य उपदेशदानासंभवश्च।

अत्रैव—'प्रवेदयिष्यमाणा' इति, 'प्रवेदयिष्यमाणां ताम्' इति च पाठद्वयं दृश्यते। तत्र प्रथमान्तपाठ एव साधुष्टीकानुसारी च। तामिति पुनरुक्तम्, पूर्वमुपात्तत्वात्।

अत्रैव—'विल्मं समामनन्ति' 'विल्वं समामनन्ति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। यास्कवचने विल्मशब्दस्यैव प्रयोगात्। विल्मं भिल्ममिति आद्यवर्णविपर्ययेऽपि मकारतादवस्थ्यस्य दर्शनाच्च। अत्रैव यास्कवचने–'असाक्षात्कृतधर्मभ्यः' 'असाक्षात्कृतधर्मस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अर्थासंगत्या तु द्वितीयपाठो न युक्तः। अत्रैव वाक्ये- 'मिल्मम्' 'विल्वा' इति पाठभेदः क्वचित्क्वचिद् दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठस्यानेकार्थकत्वेनार्थसंदेहात्, विरुद्धविभक्त्यवरुद्धत्वाच्च।

अत्रैव वाक्ये—'भासनं वा' इति, 'भासनामिव' इति पाठभेदो दृश्यते। तत्राद्यो विकल्पार्थकस्य वाशब्दस्यैव पाठो युक्तः, अर्थसंगतेः। इवशब्दपाठस्तु अर्थासंगत्याऽयुक्तः। निरुक्ते—'विल्मं भिल्मं भासनमिति वा इति दृश्यमानपाठविरोधाच्च।

अत्रैवाग्रे—'अभिव्यक्तिनिमित्ताल्लब्धक्रमे' 'अभिव्यक्तिनिमित्तलक्षणशब्दक्रमे' 'अभिव्यक्तिलक्षणशब्दक्रमरूपं वागात्मत्वं प्रापय्य' इति पाठत्रयं दृश्यते। अत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु लक्षणशब्दस्य करणसाधनत्वे निमित्तशब्देन सह पौनरुक्त्यम्। लक्षणशब्दस्य स्वरूपपरत्वे तु अर्थासंगतिः। किञ्चास्मिन् पाठे शब्दपदस्य वैयर्थ्यमपि।

अत्रैव स्वोपज्ञवृतौ—'अभिव्यक्तिनिमित्ताल्लब्धक्रमे' इत्यस्यानन्तरं 'वागात्मरूपे प्रापिते' इति, 'वागात्मत्वं प्रापय्य' इति, 'वागात्मरूपत्वे' इति, 'वागात्मरूपात्मम्'

इति, 'वागरूपम्' इति च पाठपञ्चकं दृश्यते। तत्राद्यपाठ एव युक्तः। वागात्मरूपेऽभिव्यक्तिनिमित्ताल्लब्धक्रमे प्रापिते इत्येवमर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, वागात्मत्वस्य नित्यसिद्धत्वात्। अत एव च न तृतीयोऽपि। अत एव च न पञ्चमः। किञ्चात्र पाठे वृषभदेवव्याख्याविरोधोऽपि। चतुर्थपाठस्तु अशुद्धत्वादुपेक्ष्य इति।

अत्रैवाग्रे 'अध्ययननिमित्तमध्येतॄणाम्' 'अध्ययननिमित्ताध्येतॄणाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु व्यासे प्रथमान्तपाठस्यार्थासंगतेः। समासे तु अर्थासंगतिः सुबोधैव।

अत्रैव—'चरणसमाख्याम्' 'चरणसमाख्या' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे 'व्यवस्थापयद्भिः' 'समाम्नातः' इति अग्रिमपदयोरेकतरेणापि समन्वयासंगतिः। अत्रैव 'व्यवस्थापयद्भिः' 'व्यवस्थासंपादयद्भिः' इति पाठभेदो दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेर्लाघवाच्च। द्वितीयपाठे 'व्यवस्था' इति प्रथमान्तस्य न कुत्राप्यन्वयसंभवः।

अत्रैवाग्रे—'मव्यतिक्रान्ता' मप्यतिक्रान्ता' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः। नहि देशभेदेन भिन्ना वाक् सत्यपि स्वरूपभेदे एकाभिधेयनिबन्धनत्वमप्यतिक्रान्ता भवति, यतस्तत्र स्वरूपभेदे सत्यपि तस्या एकमेवाभिधेयं भवति।

अत्रैवाग्रे—'एकार्थनिबन्धनत्वम्' 'एकाभिधेयनिबन्धनत्वम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे तु पुनरुक्तिर्दोषः। अस्यैव पदस्य एकवाक्यव्यवधानेन प्रागुक्तत्वात्। अत्रैव—'अव्यतिक्रान्तानि' 'अप्यतिक्रान्तानि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः। 'नहि चरणभेदेऽपि एकार्थनिबन्धनत्वमप्यतिक्रान्तानि श्रुतिवाक्यानि, शाखाभेदेऽपि अर्थाभेदस्यैव दर्शनात्। 'मप्यतिक्रामति' इति तु सर्वथाऽपपाठ एव, अर्थासंगतेः।

अत्रैवाग्रे—'पुराकल्प एक एव' 'पुराकल्पश्च एक एव' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। 'पुराकल्पे' इति च सप्तम्येकवचनान्तस्यच्छेदः। द्वितीयपाठस्तु पूर्वापरसमन्वयानुपपत्त्याऽयुक्त एव। अत्र यद्यपि—'एक एव' इति पाठः क्वचिद् दृश्यते, क्वचिन्नेति। तथापि 'एक एव' इत्यस्य पाठ एव युक्तः। 'प्रविभक्ताङ्गो दृश्यते' इति अग्रिमवाक्यानुरोधात्। अत्रैव—'कलौ' 'काले' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। अत्रैवाग्रे—'अपरिमाणमार्गशक्तिभेदो वेदो ब्रह्मराशिः' इति, 'अपरिमाणमार्गशक्तिभेदो ब्रह्मराशिः' इति पाठद्वयं दृश्यते। तत्र विशेष्यबोधकवेदपदघटितः पाठ एव युक्तः। वेदशब्दस्याभावे विशेष्यानुपलम्भो दोषः। ब्रह्मराशिरित्यस्यापि यौगिकत्वेन विशेषणत्वात्। ब्रह्मणः प्रतिपादको वर्णराशिरिति तदर्थः॥ ५॥

**भेदानां बहुमार्गत्वमिति कारिका ॥६॥**

अस्या व्याख्यायां स्वोपज्ञवृत्तौ—'एकविंशतिधा बाह्वृच्यम्' इत्यस्याग्रे-- 'पञ्चदशधा इत्येके' इति पाठोऽत्र दृश्यते। अयन्तु पाठः पातञ्जले महाभाष्ये ( १-१-५ ) वार्तिके न दृश्यते। एवमधिकोक्तावपि पाठभेदाभावेन न ततोऽत्र विरोधः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तेषां प्राक्प्रविभागादव्यभिचार एव' 'तेषां प्राक्प्रयोगादव्यभिचार एव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'येषां त्वयं शाखा प्रविभागो विच्छेदेन पुनः पुनर्भवतीत्यागमः' इति पूर्ववाक्यानुकूल्यात्। द्वितीयपाठे तु पूर्ववाक्यप्रातिकूल्यं स्फुटमेव ॥ ६ ॥

**स्मृतयो बहुरूपाश्चेति कारिका ॥७।**

अस्याश्चतुर्थे पादे—'प्रकल्पिताः' 'प्रकाशिताः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। श्रुतीनामन्तःस्थितास्तिरोहिता लिङ्गेभ्यो वेदविद्भिः प्रकाशिता इत्यर्थसंगतेः। अत एव स्मृतिपदव्यपदेशस्तासाम्। क्वचिद् दृष्टानामेव स्मरणोपपत्तेः। किञ्च प्रकल्पिता इति पाठे प्रकल्पितत्वस्मृतित्वयोर्विरोधोऽपि। अपूर्वस्य हि प्रकल्पितत्वम्, स्मरणं तु दृष्टपूर्वस्येति।

अस्या एव कारिकाया व्याख्यायां स्वोपज्ञवृत्तौ—'काश्चिद् शब्दनिबन्धनाः शिष्टेषु' 'काश्चिदर्थशब्दनिबन्धनाः स्मृतयः शिष्टेषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थशब्दो व्यर्थो वाक्यर्थविघटकश्च। स्मृतिपदन्तु पुनरुक्तम्। प्रागुपात्तत्वात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'दृष्टप्रयोजनाश्चिकित्सादिविषयाः' इत्यस्यानन्तरम्—'अदृष्टप्रयोजनाः' इति पाठः क्वचिद् दृश्यते, क्वचिन्न। तत्र 'अदृष्टप्रयोजना' इत्यस्य पाठ एव युक्तः। अन्यथा हि स्मृतीनां विवक्षितो द्वैविध्येन विभागोऽसंभवी।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रसक्तविरोधा' इति, 'प्रसक्ते विरोधा' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठेऽर्थासंगतिस्तु स्फुटैव।

अत्रैवाग्रे—'येषां हि' 'एवं हि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे—'ते श्रुत्यैव' इति तच्छब्दस्य पाठात्। यत्तच्छब्दयोः परस्परं नित्यसाकाङ्क्षत्वात्।

अत्रैवाग्रे—'यजमानोऽतिथये' 'अयं यजमानोऽतिथये' इति पाठद्वयं दृश्यते। तत्र अयमिति पाठो न युक्तः, सामान्येन प्रवृत्ते विधौ विशेषनिर्देशस्य अनौचित्यात्। ( ३-३-१-२ ) इति शतपथब्राह्मणेऽस्यैव विधिः सामान्येनैव प्रवृत्तिदर्शनात्। अत्रैव वाक्ये—'आगतायमहाजम्' 'आगतायाजमषण्ढम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रागुक्तशतपथब्राह्मणपाठानुरोधात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'स्मृतेः प्रामाण्यकल्पनायालम्' इति पाठः समुपलभ्यते। तत्र कल्पनपदं टीकाकृदुपेक्षत इवेति केचिदुक्तम्—तन्न युक्तम्। 'प्रामाण्याय' इति

पाठे 'प्रामाण्यं' साधयितुम् इत्यर्थप्रतीतौ प्रतिपत्तिगौरवात्। कल्पनपदप्रयोगस्तु अर्थापत्तिरूपं व्यतिरेक्यनुमानमुपलक्षयितुम्।॥ ७॥

**तस्यार्थवादरूपाणि इति कारिका ॥८।**

अस्या द्वितीयपादे—'निश्रिताः स्वविकल्पजाः' 'निश्चिताः स्वविकल्पजाः' 'निश्चितस्वविकल्पजाः' इति पाठत्रयं दृश्यते। 'निश्रित्य स्वविकल्पजाः' इति पाठोऽपि क्वचिद् दृश्यते। तत्राद्यपाठ एव युक्तः। अस्मिन् पाठे–'तस्यार्थवादरूपाणि' इत्यस्य कर्मत्वोपपत्तेः विवरणग्रन्थसंवादाच्च। निश्चिता इति पाठे तु अर्थवादरूपाणि इति निरन्वयं तिष्ठति। कर्मण्यत्रक्तः। प्रवादा इति च कर्म तेनोच्यते। न ह्ययं यत्नशतेनापि अर्थवादरूपाणि इत्यनेन संबन्धुं शक्य इति। तृतीयपाठेऽपि—अर्थवादरूपाणि इत्यस्यानन्वयस्तदवस्थ एव। विकल्पानां निश्चितत्वञ्च विरुद्धमभ्युपेतं स्यात्। अस्या एव कारिकायाश्चतुर्थे पादे—'मताः' 'गताः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, द्वितीयपाठे प्रवादानां नष्टत्वप्रतीतेः। प्रवादाश्च न नष्टाः, इदानीमपि सत्त्वात्।

अस्या एव कारिकाया व्याख्यायां स्वोपज्ञवृत्तौ— 'अर्थवादानर्थवादप्रकाराणि श्रुतिवाक्यानि' इति पाठो दृश्यते। तत्र 'अर्थवादान्' इत्यधिकं व्यर्थञ्च। इतोऽग्रे स्वोपज्ञवृत्तौ—'अग्निचयनस्थानोपस्तुत्यर्थौ' 'अग्निचयपस्थानश्रुत्यर्थो' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्त, अर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्या न युक्तः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तद्रूपपरिकल्पननिश्रितः' 'तद्रूपपरिकल्पितनिश्चितः' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, तद् रूपेण परिकल्पनं नितरां श्रित इत्यर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्याऽयुक्तः। तथाहि— 'कल्पनायाः पुरुषमतिप्रभवत्वेन अनैयत्ये तद्रूपपरिकल्पितस्याव्यवस्थितत्वरूपं निश्चितत्वं तस्य सम्भवति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अपदादपदं' 'अपदार्थादपदम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, कार्यकारणयोः सारूप्यात्। द्वितीयपाठे तु कार्यकारणयोर्वैरूप्यमिति न स युक्तः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'एक आत्मा विभज्यते' 'एक आत्माऽपि भवति' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु—'सत्त्वासत्त्वाभ्यामेक आत्माऽपि भवति; इत्यत्रार्थासंगतिः स्पष्टैव। सत्त्वासत्त्वरूपविरुद्धधर्मयोरेकात्मभवने करणत्वासम्भवात्। अत्रैवाग्रे—'तत्राद्वये' 'तथाद्वये' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः पूर्वं यथापदस्यानुपन्यासात्। किञ्च द्वयेऽद्वये इति छेदे संदेहोऽपि। अत्रैव—'स्वोपाख्यनिरूपाख्यता' इति, स्वोपाख्यान्निरुपाख्यता' इति, पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। अद्वये सोपाख्यता निरुपाख्यता च कथं स्यात्। इत्यर्थसंगतेः। द्वितीयपाठे तु अद्वये सोपाख्यान्निरुपाख्यता कुत्रापि नोक्ता इत्यनुक्तोपालम्भः। एतद्वाक्यावसाने क्वचिद् पुस्तके इति पदं न दृश्यते। तन्न युक्तम्, इतः पूर्वोत्तरवाक्ययोरवसाने इति पदस्य

दृष्टत्वेनात्रापि तदुपादानस्यौचित्यात् । अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तमः एव खल्विदमग्र आसीत्' इति वाक्यम् पठ्यते । 'तमो वा इदमग्र आसीदेकं' इति ( मै० ३०।५।२ ) पाठः । तस्यैवायमर्थानुवादो बोध्यः ।

अत्रैव स्वोपज्ञवृत्तिधृतपद्ये—'इदं फेनो न' 'इदं केनो न' 'इदं पीनो न' इति पाठत्रयं दृश्यते । तत्राद्य पाठ एव युक्तः । बुद्बुद इत्यपरस्य जलविकारस्यैव प्रतिनिधेर्यो-क्तत्वात् । टीकाकारेण चायमेव पाठो धृतः । स्कन्दमहेश्वरकृतायां निरुक्तटीकाया-मप्येवमेव पाठः । द्वितीयस्तु अपपाठः, अर्थासंगतेः । तृतीयोऽपि अपपाठ एव, विचारा-सहत्वात् ।

अत्रैव पद्ये द्वितीयपादे—'बुद्बुदो वा न कश्चन' 'बुद्बुदो वा न किञ्चन' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः । बुद्बुद इति विशेष्यानुरोधेन पुंसि-प्रयोगस्यैव युक्तत्वात् । अस्य पद्यस्य तृतीयपादे—'मायेयम्' 'मायैषाम्' इति पाठ-द्वयं दृश्यते । तत्राद्य पाठ एव युक्तः । अर्थसंगतेः । द्वितीयपाठे तु एषामित्यस्य निर्देश्या-नुपलम्भः । निरुक्तटीकायामपि स्कन्दमहेश्वरकृतायामाद्यपाठ एवोपलभ्यते ।

अत्रैव पादे—'वत' 'तव' 'ननु' इति पाठत्रयं दृश्यते । तत्राद्य पाठ एव युक्तः । वतेत्यव्ययस्य खेदद्योतकत्वेनार्थसंगतेः । तव इति पाठस्य साधुत्वे च सम्बोध्यानु-पलम्भो बाधकः । 'न तु' इति पाठस्तु सर्वथाऽयुक्त एव, अर्थासंगतेः । अत्रैवोदाहृतस्य द्वितीयपद्यस्य चतुर्थ पादे—'तमजिह्वोऽभ्यपूजयत्' 'तमुग्रोऽभ्यपूजयन्' इति पाठद्वयं-दृश्यते । तत्राद्य पाठ एव युक्तः, तत्र पाठे विरोधाभासालङ्कारसमर्थनात् । द्वितीय-पाठे तु उपक्रान्तस्य विरोधाभासालङ्कारस्य न समर्थनमिति तस्य पाठस्यानौ-चित्यम् । यद्यपि तै० आ० १।११।५। इत्यत्राभ्यपूजयन् इत्यस्य स्थाने 'असश्चत' इति पाठस्तथापि तस्यायमर्थानुवाद इति ध्येयम् । अत्रैवाग्रे स्वोपज्ञवृत्तौ—'असंप्रख्यान-रूपपाकश्च' 'अप्रत्याख्यानरूपपाकश्च' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः । आप एवादौ समुत्पन्ना । तासां च पृथिव्यादिभूतभौतिकक्रमेण द्विविधः पाकः ( परिणामः ) चिदचिद्रूप इत्यर्थसंगतेः । द्वितीयपाठे तु अपां प्रत्यख्यानाप्रत्याख्यानरूपः पाको न सम्भवतीत्यर्थासंगतिः ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तदेवं तदेकरूपम्' इत्यत्र 'तेदवम्' इति पाठो यद्यपि क्वचिन्न दृश्यते । तथापि तस्य दर्शनमेव श्रेयः । पूर्वं प्रकारपरामर्शस्यावश्यकत्वात् । क्वचित्तु 'तदेव' इति पाठः, स तु न युक्तः, अग्रे तेदकरूपमिति तत्पदोपादानेन पुनरुक्तेः, टीकायाम् 'तेदवम्' इति पाठस्यादृतत्वाच्च । अत्रैव स्वोपज्ञवृत्तेर्वाक्ये 'सर्वप्रबोधरूपम्' इति पाठः क्वचिन्न दृश्यते । किन्तु स पाठो युक्तः, अन्यथा सर्वप्रपंच-कारणस्य ब्रह्मणः स्वरूपानिर्देशात् । अप्रबोधरूपस्य जगतः प्रबोधरूपं ब्रह्मैव कारण-मिति ब्रह्मणो माहात्म्याप्रख्यानाच्च ।

अत्रैवाग्रेस्वोपज्ञवृत्तौ समुद्धृते द्वैतिवाक्ये 'रूपि चारूपि च' रूपि चानुचेयञ्च

इतिपाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। नित्याश्चानित्याश्चेति प्राक्, सूक्ष्मं स्थूलं च इत्युत्तरत्र परस्परविरोधिनोरेव निर्देशेन अत्रापि तयोरेव निर्देशस्यौचित्यात्। द्वितीयपाठे तु अर्थासंगतिरपि दोषः। क्वचितु—'रूपि चारूपञ्च' इति पाठो दृश्यते, स तु न युक्तः, प्रक्रमविरोधात् इनिना उपक्रान्तस्येनिनैव उपसंहारौचित्यात्। किञ्चास्मिन् पाठे—अरूपमित्यत्र नञ्समासो बहुव्रीहिर्वा इति संदेहोऽपि समुत्पद्यते इति हेय एष पाठः।

अत्रैव स्वोपज्ञवृत्तौ—

उभौ सखायौ सयुजौ सुपर्णौ समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥

इति श्लोकः समुद्धृतः। नेयमृक्, किं तर्हि ऋगनुकारः श्लोकः कृत्रिमः। अत्र तृतीयपादे—'तयोरन्यः' 'तयोरेकः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। उत्तरत्रापि अन्य इति पाठेन तदानुरूप्यात्। एकशब्दस्यानेकार्थकत्वेन स्वार्थे संदेहापादकत्वाच्च। अत्रैव स्वोपज्ञवृत्तौ समुद्धृते वाक्ये—'विवृत्ताविवृत्ताम्' विवृत्तं सत्त्वमेव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतेः। द्वितीयपाठे तु अर्थासंगतिः। अत्रवाक्ये—'बहुधानकं चैतन्यम्' बहुधा न किञ्चन' इति पाठद्वयं दृश्यते। तत्राद्यपाठे—बहवो धीयन्ते आरोप्यन्ते यत्रेति व्युत्पत्तौ बहुधानपदात्स्वार्थे कन् प्रत्ययः। द्वितीयपाठे—किञ्चन—किञ्चिदपि-बहुधा-नाना, न, किन्तु एकमेव इति नेह नानास्ति किञ्चन इति श्रुत्यर्थानुवाद इत्येवं पाठद्वयेऽपि अर्थसंगतिरवभाति, तथापि आद्यपाठ एव युक्तः। पदपदार्थतदुपस्थितीनामैक्येन लाघवात्। द्वितीयपाठे तद्वैपरीत्येन गौरवात्। द्वितीयपाठे एतद्वाक्यार्थस्य चैतन्यविशेषणत्वासंभवाच्च॥८॥

## सत्या विशुद्धिस्तत्रोक्ता इति कारिका॥९।

अत्र 'तस्याविशुद्धिः' इति क्वचित्पाठः, स तु न युक्तः। पूर्वं स्त्रीलिंगतत्पदपरामर्शयोग्यार्थाभावात्। अस्या कारिकायाश्चतुर्थे पादे—'सर्ववादाविरोधिना' 'सर्ववादाविरोधिनी' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। एवं सति सन्निहितेन प्रणवरूपेण इत्यनेन सहान्वयसंभवात्। द्वितीयपाठे तु विद्यापदेनान्वये आसत्तिबाधः। किञ्चाद्यपाठे—प्रणवः सर्वाभ्यनुज्ञाविषय इति स्वोपज्ञवृत्तिसंगतिरपि।

अत्रैव स्वोपज्ञवृत्तौ– 'अपि खलु ब्रह्मविद आहुः' 'अपि खलु ब्रह्मविदप्याह' इति पाठद्वयं दृश्यते। तत्र द्वितीयः पाठो न युज्यते, अपिशब्दस्य द्विरुक्तत्वात्। किञ्च बहुवचनान्तपाठे यथामतप्रौढिरवद्योत्यते न तथा एक वचनान्तपाठे इत्यतोऽपि द्वितीयपाठो हेयः। सांप्रतमपि हि प्रजातन्त्रे बहुमतेनैव प्रशासनं क्रियते। इतः कालात् प्रागपि बहूनामनुरोधो न्याय्य इति न्यायः समादृत आसीत्।

अत्रवाग्रे स्वोपज्ञवृत्तौ—'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यम्' इति—'प्रदेशोऽपि सार्वरूप्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, द्वितीयपाठे कस्य प्रदेश इत्यकाङ्क्षाया अनिरासात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अविकल्पं सविकल्पमिव' 'अविकल्पं विकल्पमिव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अविकल्पत्वसविकल्पत्वयोर्विरोधस्य प्रसिद्धेः। यद्यपि द्वितीयपाठेऽपि विकल्पभिन्नं विकल्पमिव इत्यर्थः संगतः संभवति, तथापि पूर्वग्रन्थे—सर्वं दर्शनमित्यत्र दर्शनपदेन मतस्यैवोपग्रहेण अविकल्पपदे बहुव्रीहिणा विकल्परहितमित्येवार्थो युक्तः इत्यवधेयम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रकृतिसर्वनाम' 'प्रकृतिसर्वनामपदम्' इतिपाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रकृत्या स्वभावेनैव सर्वेषां नामवाचकमित्यर्थे पदपदस्य वैयर्थ्यात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'सर्वविरुद्धार्थोपग्राही' 'सर्वदृष्टिरविरुद्धार्थोपग्राही इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। सर्वेषां विरुद्धानामर्थानामारोपाधिष्ठानतया उपग्राही आश्रय इत्यर्थसंगतेः। द्वितीयपाठे तु सर्वदृष्टिपदे व्यधिकरणबहुव्रीहिराश्रयितव्यः। अविरुद्धार्थोपग्राही इत्यत्र चाद्वैतसिद्धान्तहानिः, विरुद्धार्थानामपि आरोपाधिष्ठानत्वेन ब्रह्मण उपग्राहित्वात्।

अत्रैव स्वोपज्ञवृत्तौ समुद्धृते पद्ये 'तथोमे'—'तयोर्हे' 'तथाभेद' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीये तृतीये च पाठेऽर्थासंगतिः सुनिश्चितैवावधानेन प्रतीयते। 'नाप्यूहे' 'नाप्युभे' इतिपाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। पूर्ववाक्यानुरोधादर्थसंगतेश्च। प्रथमपाठे तु अर्थासंगतिः स्पष्टैव। अत्रैव पद्ये द्वितीयपादे—'न च' इति, 'ततः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अस्य पद्यस्य तृतीये पादे—'कर्मस्थाः' 'कर्मस्य' 'कर्मस्या' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अर्थस्तु अम्बाकर्त्र्यां द्रष्टव्यः। द्वितीयतृतीयपाठयोस्तु असाधुत्वार्थासंगती स्पष्टे एव। अत्रैव पादे— विषमम्' 'विषयम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'सत्त्वस्था समदर्शिन' इत्युत्तरग्रन्थानुरोधात्, अर्थसंगतेश्च ॥९॥

**विधातुस्तस्य लोकानामिति कारिका ॥१०।**

अस्यास्तृतीये पादे—'प्रतायन्ते' 'प्रतीयन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विद्याभेदाः प्रभवन्ति, इति स्वोपज्ञवृत्तौ व्याख्यानदर्शनात्। तत्र प्रतायन्ते इति पाठे प्रतता भवन्ति इत्यर्थस्य पर्यवसाने प्रभवन्ति इत्यर्थः संभवति। प्रतीयन्ते इत्यस्य तु न कथमपि प्रभवन्ति इत्यर्थे पर्यवसानमिति। अस्या एव कारिकायाश्चतुर्थे पादे—'ज्ञानसंस्कारहेतवः' 'ज्ञानसंज्ञानहेतवः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'सम्यग् ज्ञानहेतव : पुरुषसंस्कारहेतवश्च' इति व्याख्यादर्शनात्। अस्या एव व्याख्यायां स्वोपज्ञ वृत्तौ—'उपदेष्टृरूपत्वेन च' इति, उपादेयत्वेन'

इति च शब्दरहितश्च पाठ उपलभ्यते। तत्राद्यपाठ एव युक्तः। प्रकृतित्वेन विवर्तेषु, उपदेष्टृरूपत्वेन च व्यवस्थासु विधाता इत्यर्थसंगतिसंभवात्। द्वितीयपाठे तु पूर्वत्र उपात्तस्य प्रकृतिपदस्य संनिधानेन जन्यत्वरूपस्योपादेयत्वस्य परिग्रहेऽर्थासंगतिरन्वयासंभवश्च स्पष्ट एव।

अत्रैव स्वोपज्ञवृत्तौ यद्यपि—'व्यवस्थासु च' इति पाठः क्वचिद् दृश्यते, क्वचिन्न, तथापि अस्य पाठ एव युक्तः। एतत्पाठे सत्येव उपदेष्टृरूपत्वेन इत्यस्य प्रागुपात्तस्यान्वयोपपत्तेः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रणव एव वेद इत्येके' इत्ययं पाठः क्वचिदुपलभ्यते क्वचिन्न। तथापि अयं पाठो युक्त एव। अन्यथा हि—'सहि सर्वशब्दार्थप्रकृतिरिति' इत्युत्तरग्रन्थस्थितेन तत्पदेन कस्य परामर्शः स्यात्। तत्पदेन वेदस्य प्रागुपात्तस्य परामर्शेऽपि—'एतस्मिश्च दर्शने विद्याभेदाः प्रणवात्मतया वेदतत्त्वं नातिक्रामन्ति' इत्युत्तरग्रन्थस्वारस्यं व्याहन्येतेति। अत्र वाक्ये—'विद्याभेदाः प्रणवात्मतया' इति पदद्वयं यद्यपि क्वचित् पुस्तके न दृश्यते, तथापि तदावश्यकम्। अन्यथार्थासंगतिः स्पष्टैवेति। अत्रैव स्वोपज्ञवृत्तौ—'वेदतत्त्वं नातिक्रामन्ति' 'वेदं नातिक्रामन्ति, इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विद्याभेदाः, वेदस्य तत्त्वं तात्त्विकं रूपं प्रणवात्मकं नातिक्रामन्ति इत्यर्थसंगतेः। द्वितीयपाठे तु विद्याभेदानां वेदस्य च स्वरूपभेदाद् 'वेदं नातिक्रमन्ति' इत्युक्त्यसंभवः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—श्रुतिस्मृतित्रय्यन्तादिभ्यः' इति, 'श्रुतिस्मृतिचेति यत्ताभ्यो' इति, श्रुतिस्मृति येऽन्तादिभ्यो' इति च पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयतृतीयपाठयोस्तु अर्थासंगतिरसाधुत्वञ्च स्पष्टमेव। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'वेदाख्यस्य प्रसिद्धस्य' 'वेदाख्यस्य तु प्रसिद्धस्य' इति पाठद्वयं दृश्यते। तत्र तुशब्दपाठोऽत्रानुपयुक्त इति हेयः॥१०॥

## आसन्नं ब्राह्मणस्तस्येति कारिका ॥११॥

अस्याश्चतुर्थे पादे—'आहुर्व्याकरणम्' 'प्राहुर्व्याकरणम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव यक्तः। वक्तृप्रौढिप्रयुक्तां वचने प्रौढिमवद्योतयितुं तस्य पाठस्यौचित्यात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'उपकारविशेषकृताह्यासत्तिः' उपकारविशेषस्यासक्तिः' 'उपकारविशेषकृताभ्यासक्तिः' इति पाठत्रयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठेऽर्थासंगतिः। तृतीयपाठेऽभिशब्दपाठस्य वैयर्थ्यम्। अत्रैव स्वोपज्ञवृत्तौ—'समाख्याता' इति पदं क्वचिद् दृश्यते, क्वचिन्न। तत्रैतत्पाठ एव युक्तः। आसत्तिरूपस्य कर्मणः क्रियासाकांक्षत्वेन क्रियापदोपन्यासस्यौचित्यात्।

अत्रैव स्वोपज्ञवृत्तौ—'ऊह्यश्चाम्नायान्तरम्' इति, 'ऊहाख्यश्चाम्नायान्तरम्' इति, 'समूह्यत्वाम्नायान्तरम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे त्वर्थासंगतिः। तृतीयपाठेऽपि अर्थासंगतिः। समूह्यमिति

सानुस्वारपाठेऽपि समूहनस्य मार्जनसंस्काररूपत्वेनार्थासंगतिः स्फुटैवेति । अत्रैवाग्रे स्वोपज्ञवृत्तौ—'इदमूह्यमिदमनूह्यमिति न्यायात्' इति, 'इदमूह्यमिति न्यायाद्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः । न्यायेन भावाभावयोरन्यतरस्य निर्धारणात् पक्षद्वयोपन्यासस्यौचित्यात् । अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अवस्थिते' इति, 'अवस्थिते तु विभागे' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तो लाघवात् । द्वितीयपाठे तु 'तु विभागे' इत्यस्य वैयर्थ्यम्, अर्थप्राप्तत्वात् ।

अत्रैव स्वोपज्ञवृत्तौ—'सम्यग् विपरिणतौ' इति, 'सम्यग् विपरिणत्य' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठेऽर्थासंगत्या प्रथमपाठ एव युक्तः । अत्रैवाग्रे स्वोपज्ञवृत्तौ—'ब्रह्मचर्याधःशयनोद्वास' इति, 'ब्रह्मचर्याधःशायितोद्वास' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठे—अधःशायिता पदे वृत्तित्रयकल्पने गौरवात् । प्रथमपाठे तु अधःशयनपदे वृत्तिद्वयाकल्पनमेवेति लाघवम् ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'ये च पवित्रा मताः' इति, ये च पवित्रतमाः' इति च पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । पवित्रतमेषु अभिख्याततमत्वोक्तौ व्याकरणस्य गौरवातिशयप्रतीतेः । प्रथमपाठे तु अपवित्राणामपि पवित्रत्वेन मतत्वं संभवति' इति पवित्रत्वेन मतेषु अभिख्याततमत्वोक्तौ व्याकरणस्य नास्ति किमपि गौरवमिति उपेक्ष्यः प्रथमः पाठः ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अभिख्यातम्' अभिख्याततमम्' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । तत्र पाठे तमबर्थस्य प्रकर्षस्य प्रतीतेः । मूले 'तपसामुत्तमं तपः' इत्युक्तेश्च ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रधानञ्च' इति, 'प्रधानम्' इति, 'प्रधाने च' इति, 'प्रधाने' इति पाठचतुष्टयं तत्र तत्र दृश्यते । तत्र प्रथमे पाठद्वये प्रथमः द्वितीये पाठ-द्वयेऽपि प्रथम एव त्वर्थकचकारसहितः पाठो युक्तः, अर्थौचित्यात् । महाभाष्ये पस्प-शाह्निके व्याकरणप्रयोजनान्वाख्यानावसरे चशब्दयुत एव पाठस्य दर्शनाच्च ॥११॥

## प्राप्तरूपविभागाया इति कारिका ॥१२।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'वर्णपदवाक्यलक्षणं रूपविभागम्' 'वर्णपद-वाक्यलक्षणरूपविभागम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः । रूपविभागे वर्णपदवाक्यलक्षणत्वं विधाय तद्विशिष्टस्य रूपविभागस्य प्राप्तिर्वागुद्देशेन विधीयते इति रीत्या हि प्रथमपाठस्य युक्तता । द्वितीये पाठे हि समासे विशिष्टार्थोपस्थित्या समस्यमानपदार्थयोः परस्परम्—उद्देश्यविधेयभावाप्रतीतिः ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'श्रुतिरूपत्वेन परिणमन्ते' 'श्रुतिरूपेण परिणमन्ते' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । प्रथमपाठे त्वप्रत्ययस्य वैयर्थ्यात् । स्वार्थे त्वप्रत्ययस्य विधानाच्च इति ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'एके कार्यकारणभावमेव' 'एककार्यकारणभावमेव' 'बाह्ये कार्यकारणभावमेव' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव साधुः, अर्थसंगतेः। द्वितीयतृतीयपाठयोस्तु नार्थसंगतिः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते क्वाचित्के पद्ये चतुर्थे पादे—'प्रागिवान्ये' 'प्रागेवान्ये' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव साधुः। तृतीयपादवाक्यार्थ-स्वारस्येनास्यैव पाठस्यौचित्यप्रतीतेः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'वाचकत्वाद्' 'बोधकत्वाद्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, असाधोरपि बोधकत्वेन—'व्यवस्थितसाधुभावः' इति अग्रिम-ग्रन्थविरोधात्। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'शब्दसमूहोऽभिधीयते' 'शब्दसमूहोऽभि-सन्धीयते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, 'परमो रसः' इत्यनेन व्यवस्थितसाधुभावस्य शब्दसमूहस्याभिसन्धीयमानत्वसंभवात्', 'परमो रसः' इत्यनेन शब्दसमूहस्य शक्त्यभावेनाभिधातुमशक्यत्वाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते वाक्ये—'ऋजीषमेतद् वाचः' 'मृषोद्यमेतद् वाचः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, संस्कारहीनस्य शब्दस्य वाङ्-मलत्वसंभवात्। द्वितीयपाठे तु मृषोद्यपदस्य पुंस्त्वं स्यात्, 'परमो रसः इत्यत्र पुंस्त्वानु-रोधात्। मृषोद्यपदस्य विशेष्यनिघ्नत्वं तु दृष्टम्, 'उच्छ्रायसौन्दर्यगुणमृषोद्या' इति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते क्वाचित्के वाक्ये—'प्रकाशाप्रकाशयोः' 'प्राकशयोः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव। अत्रैव वाक्ये—'यावत्स्थास्नु चरिष्णु च' इति, 'यावद् वस्त्वस्तु च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, चराचरात्मकस्य जगतः शब्दप्रभ-वत्वाभ्युपगमात्। द्वितीयपाठे तु अवस्तुनः शशशृङ्गादेः शब्दप्रभवत्वाभावेन शब्दो-पनिबद्धत्वाभावाद् अयुक्तता।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'सामान्यविशेषवद्धि लक्षणम्' 'सामान्यविशेषाद् विलक्षणम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्याऽयुक्तः। अत्रैव स्वोपज्ञवृत्तौ—लक्षणप्रपञ्चाभ्याम्' 'लक्षणप्रकाशाभ्याम्', 'लक्षणप्रवचनाभ्याम्' 'प्रपञ्चाभ्याम्' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः, लक्षणम्—असाधारणधर्मपुरस्कारेण बोधनम्। प्रपञ्चनम्—लक्षणेन उद्दिष्टस्य असा-धारणधर्मस्य तद्धर्मिणश्च युक्त्या विस्तरेण प्रतिपादनमित्यर्थसंगतेः। इतरस्मिन् पाठत्रये तु अर्थासंगतिः स्फुटैव।

अत्रैव वाक्ये स्वोपज्ञवृत्तौ—'लघुनोपायेन' 'प्रवचनोपायेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अत्रैव स्वोपज्ञवृत्तौ—'उपदेशञ्चान्तरेण' उपदेश-मन्तरेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। एवकारार्थश्चकारो भिन्नक्रमः। आचार्योपदेशमन्तरेणैव इत्यर्थसंगतेः। द्वितीयपाठे तु नियमेनोपदेशव्यवच्छेदा-प्रतीत्यार्थासंगतिः।

अत्रैव स्वोपज्ञवृत्तौ—'संस्कारवति निरपभ्रंशे' 'संस्कारवर्तिनि रूपभ्रंशे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्या न युक्तः।

अत्रैव वाक्ये स्वोपज्ञवृत्तौ—'लब्धप्रतिष्ठानाम्' 'लब्धप्रतिष्ठम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। अस्य शिष्टविशेषणत्वेनार्थसंगतेः, एतद् विशेषणेन शिष्टेषु प्रमातृत्वसंप्रत्यये तत्कर्तृकानुमाने प्रामाण्यप्रतिपत्तेश्च। द्वितीयपाठे तु अस्यानुमानविशेषणत्वेन शिष्टेषु भ्रान्तत्वस्यापि संभवेन अनुमाने लब्धप्रतिष्ठत्व-रूपस्य प्रामाण्यस्य समर्थनाभाव इत्युक्तता द्वितीयपाठस्य। क्वचित्तु 'लब्धप्रतिष्ठानाम्' इत्यस्य स्थाने—'लब्धज्योतिषाम्' इति पाठो दृश्यते। अयमपि पाठो न युक्तः। अस्मिन् पाठे शब्दब्रह्मणि लब्धप्रकाशानामित्यर्थलाभेऽपि शब्दब्रह्मणि लब्धनिश्रया-नामिति प्रथमपाठार्थस्यालाभात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'शिष्टप्रयोगत्वात्' 'शिष्टप्रयोगार्थम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः। नहि शिष्टप्रयोगार्थमेव पृषोदरप्रकाराव्याकरणेन निपात्यन्ते। किन्तर्हि, शिष्टानामशिष्टानाञ्च प्रयोगार्थमिति। अत्रैव स्वोपज्ञवृत्तौ समुद्धृते पद्ये द्वितीयपादे—'सांधवसाधून्' 'साध्व-साधुवत्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। छन्दसः शुद्धेश्च। द्वितीयपाठे तु वतिप्रत्ययेऽर्थासंगतिः, मतुप्प्रत्यये शब्दाशुद्धिः। उभयथापि छन्दसोऽ-शुद्धिरिति। अस्यैव पद्यस्य तृतीये पादे—'साधुप्रयोगानुमितांश्च' 'साधुप्रयोगानुचितांश्च' इति पाठद्वयं दृश्यते। तत्रापाठ एवार्थसंगत्या युक्तः। द्वितीयपाठस्तु न युक्तोऽर्थासंगतेः। नहि साधुशब्दप्रयोगेण साधवः शब्दा अनुमीयन्ते इति श्लिष्यते इति॥१२॥

**अर्थप्रवृत्तितत्त्वानामिति कारिका ॥१३॥**

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'विवक्षाप्रापितसंनिधानेषु अभिधेयेषु' 'विवक्षा-प्रापितसाधुभावेषु अभिधेयेषु' इति पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः। अर्थ-संगतेः। द्वितीयपाठस्तु न युक्तः, अभिधेयानां शब्देभ्य उपस्थितिरूपस्य संनिधानस्यै-वात्र विवक्षितत्वात्। अविधेयानां साधुभावस्य विवक्षाप्रापितत्वासंभवात्—इह तस्यानुपयोगाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तत्त्वं व्यवहारे यन्निमित्तम्' 'तत्त्वव्यवहारे यन्निमित्तम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। 'प्रवृत्तौ तत्त्वमि'त्यस्य 'व्यवहारे यन्निमित्तम्' इति व्याख्यायामर्थसंगतेः। तत्त्वव्यवहारे इति पाठे तु अर्थासंगतिः स्फुटैव। अत्रैव पाठे तत्त्वपदाव्याख्यानात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ निमित्तानिमित्तवत्स्वार्थेषु' 'निमित्तानिमित्तवत्स्त्रार्थेषु' इति पाठद्वयमुपलभ्यते। तत्र प्रथमपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु स्वपदानर्थक्यं स्फुटमेव। अत्रैवानन्तरे वाक्ये—'न तु संसर्गिरूपान्तरविवेके 'नतु

संसर्गविरूपान्तरविवेके' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तोऽर्थसंगतेः, द्वितीयपाठे तु विपदवैयर्थ्यमर्थासंगतिश्च स्फुटैव। अत्रैव पदे—'विवेके' 'व्यतिरेके' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। संसर्गिणो रूपान्तरस्य—प्रकृत्यर्थापेक्षयाऽन्यस्य रूपस्य प्रत्ययार्थस्य व्यतिरेकेऽभावे इत्यर्थसंगतेः। द्वितीयपाठे तु संसर्गिणो रूपान्तरस्य प्रत्ययार्थस्य विवेके पृथग्भावे इत्यर्थसंभवेऽपि विवेकपदस्य प्रायेण निर्णयपरतयाऽत्र पाठेऽर्थसंदेह इत्ययुक्तता। किञ्च विवेके इत्यस्य पृथग्भावे तत्त्वेन ज्ञाने वा इत्यर्थकरणेऽपि—पृथग्भूते तत्त्वेन ज्ञाते वा प्रत्ययार्थे प्रकृत्यर्थस्यान्वयसंभवेन न तु प्रकृत्यर्थकैवल्यविषयो व्यवहारो विद्यते ईत्यग्रिमग्रन्थसंगतिः। किञ्च—यदा हि प्रत्यय उत्पद्यते तदाऽर्थेन व्यवहर्तुं शक्यते, न तु प्रत्ययोत्पत्त्यभावेन प्रत्ययार्थाभावे प्रकृत्यर्थकैवल्यविषयो व्यवहारो विद्यते इत्यर्थ एव प्रकृतवाक्यद्वयस्य स्वारस्यप्रतीतेश्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'शब्दनिबन्धनत्वमास्थीयते' 'शब्दनिबन्धनत्वमाख्यायते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, सहेतुकाख्यानेनास्थानस्यार्थप्राप्तत्वात्। यत्सहेतुकमाख्यायते तदभ्युपगम्यते इति नियमात्। अत एव च प्रथम पाठो न युक्तः। आस्थानेन तु आख्यानस्य नाक्षेपः। कस्यचित् स्वीकृतस्यापि केनचित्कारणेनाख्यानाभावस्य लोके सुबहुशो दर्शनात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'संसर्गः। विच्छिन्नरूपेष्विव' 'संसर्गाविच्छिन्नरूपेष्विव' 'संसर्गविच्छिन्नरूपेष्विव इति पाठत्रयं दृश्यते। तत्र प्रथमः पाठ एव युक्तः, व्यवहारे वा तत्त्वम्—निमित्तं संसर्ग इत्यर्थसंगतेः। 'विच्छिन्नरूपेष्विव' इत्यादिकन्तु द्वितीयं वाक्यम्। द्वितीयतृतीयपाठयोस्तु अर्थासंगतिः स्फुटैव।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रत्यवभासमानेषु व्यवहारो वाक्यनिबन्धनः 'प्रत्यवभासमानेषु वाक्यनिबन्धनः' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, वाक्यनिबन्धन इति विशेषणस्य विशेष्यप्रसिद्ध्याऽर्थसंगतेः। द्वितीयपाठे तु तद्विशेष्याप्रसिद्ध्या स पाठो न युक्तः। अध्याहारे गौरवमध्याह्रियमाणपदे संदेहश्चेति।

अत्रैव वाक्ये—'वाक्यनिबन्धनः। नहि' इति, 'वाक्यनिबन्धनभावे' इति, 'वाक्यनिबन्धनं न भावत्वे'. इनि, 'वाक्यनिबन्धनं नहि भावत्वे' इति पाठचतुष्टयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। व्याख्यातश्चायमेव पाठो वृषभदेवेन, मयापि अम्बाकर्त्र्याम्। इतरत्र पाठत्रयेऽर्थासंगतिस्तु पूर्वापरपदसंदर्भानुसंधाने स्फुटैव।

अत्रैव वाक्ये—'संसर्ग' 'विशेषावच्छिन्नसंसर्ग' 'दर्शनप्रत्यस्तमये' 'भेदप्रत्यस्तमये' 'प्रत्यस्तमये' 'प्रत्यस्तमयेषु' प्रति पाठभेदा उपलभ्यन्ते। तत्र प्रथमे पाठद्वये प्रथम एव पाठः साधुः। 'संसर्गदर्शनप्रत्यस्तमये इति' इति प्रतीकं धृत्वा वृषभदेवेन 'आश्रयविशेषावच्छिन्नक्रियासाधनसंसर्गाभावे' इत्येवं व्याख्यातत्वात्। अत एव द्वितीये पाठद्वयेऽपि प्रथम एव साधुः। किञ्च संसर्गभेदप्रत्यस्तमयः, संसर्गविशेषा-

भावः। स च पदार्थगतव्यवहारव्यवस्थानाभावस्य न प्रयोजकः। विद्यमानेऽपि संसर्गविशेषे तद्दर्शनाभावे पदार्थगतव्यवहारव्यवस्थानाभावस्य दर्शनात्। अतः संसर्गभेदपदस्य तद्दर्शने लक्षणाभ्युपगमे स एव दोषः। तृतीयपाठद्वयेऽपि प्रथमः पाठ एव युक्तः। बहुवचनान्तं पाठाभ्युपगमे हि—'कश्चिदपि पदार्थगतव्यवहारो व्यवतिष्ठते' इति अग्रिमेषु सुप्तिङन्तपदेषु सर्वेषु अपि बहुवचनोपादानमापद्येत। जात्येकत्वाभ्युपगमे तु पूर्वत्र व्यक्तिबहुत्वाभ्युपगमः, उत्तरत्र तु जात्येकत्वाभ्युपगम इत्युक्तमर्धजरतीयं समाश्रितं स्यात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'वस्तु त्यदादीनाम्' 'वस्तुत्यदादीनाम्', 'वस्तुत्वादीनाम्' इति पाठत्रयं दृश्यते तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। वृषभदेवेन टीकायां तस्यैव व्याख्यातत्वाच्च। इतरत्र पाठद्वये तु अर्थासंगतिः पूर्वापरपदार्थानुसंधानेन स्फुटैव।

अत्रैव वाक्ये–'वस्तूपलक्षणानाम्' 'सत्त्वलक्षणानाम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। बुद्धिविशेषरूपं वस्तु उपलक्षणं येषामर्थेषु तानि वस्तूपलक्षणानि त्यदादीनि सर्वनामानि तेषां केवलं वस्तु घटत्वादि तत्तद्धर्मावच्छिन्नं घटादिकम्' न तु बुद्धिविशेषविशिष्टम्' विषयमात्रम्, अविद्याया विषय एव, न तु बुद्धिविशेषवत्तस्या अविषय इति अर्थसंगतेः। द्वितीयपाठे तु सत्त्वस्य द्रव्यस्य लक्षणानां बोधकानामिति षष्ठी तत्पुरुषे, सत्त्वं लक्षणं येषामिति बहुव्रीहौ वा अर्थासंगतिः स्फुटैव स्फुरति।

अत्रैव स्वोपज्ञवृत्तौ—'तस्य प्रवृत्तितत्त्वं संसर्गः' 'तस्य तु संसर्गः प्रवृत्तितत्त्वम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, तस्य–'त्यदादिसर्वनामविषयस्य केवलस्य वस्तुनः, प्रवृत्तितत्त्वम्—व्यवहारनिमित्तम्, संसर्ग इत्येवमर्थसंगतेः। द्वितीयपाठे तु प्रवृत्तितत्त्वं संसर्ग इत्येवं पाठव्यत्यासकल्पनया व्यवहितेन संबन्धः कृतः स्यादित्यनौचित्यं तस्य पाठस्य। यथावस्थितस्य सम्बन्धे तु कस्य प्रवृत्तितत्त्वम् इत्याकांक्षावाक्यार्थबोधविरोधिनी न निवारिता स्याद्। अत्रैव—'संसर्गः' 'संसर्गस्य' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'क्रमरूपोपग्रहः कालाभिव्यक्तिहेतुत्वम्' इति, 'क्रमरूपोपग्रहकालाभिव्यक्तिहेतुत्वम्' इति, 'क्रमरूपोपसंग्रहः कालाभिव्यक्तिहेतुत्वम्' इति पाठत्रयं दृश्यते। तत्राद्यः पाठ एव युक्तः। वृषभदेवकृतटीकायां तस्यैव पाठस्यादृतत्वात्। द्वितीयपाठस्तु अर्थासंगत्याऽयुक्तः। तृतीयपाठे तु संपदवैयर्थ्यम् इति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अथवाऽर्थप्रवृत्तेः' इति क्वचित्पाठः। क्वचित्तु 'अथवापदरहितः 'अर्थप्रवृत्तेः' इत्येव पाठो दृश्यते। तत्राद्यः पाठ एव युक्तः, 'अर्थप्रवृत्तितत्त्वानामित्यस्य व्याख्यान्तरपरतयाऽस्य ग्रन्थस्य प्रवृत्तत्वात्। अत्रैवाग्रे स्वोपज्ञवृत्तौ—बाह्येषु वस्तुषु' इति, 'बाह्येषु च वस्तुषु' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। चशब्दपाठस्य वैयर्थ्यात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'शब्दस्य तत्त्वमविकल्पम्' 'शब्दस्य तत्त्वमवैकल्यम्' 'शब्दस्य तत्त्वमवैकल्या' इति पाठत्रयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। तद्बयस्याविकलम् इत्यग्रिमग्रन्थानुरोधात्। यद्यपि प्रथमपाठेऽपि विकल्पः कल्पना तद्रहितम्, परमार्थभूतमित्यर्थः संभवति, तथापि नायं पाठो युक्तः, तद्बयस्याविकलम् इत्युत्तरग्रन्थानानुरूप्यात्। तृतीयपाठोऽपि न युक्तः, अवैकल्यम् इत्यस्य अनपगतसंस्कारमित्यर्थ इति स्वीकारस्यैवौचित्येन पृथक्पदस्यैव युक्तत्वात्।

अत्रैव वाक्ये—'अनपगतसंस्कारम्' 'अभ्युपगतसंस्कारम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, संस्कारापगमे हि शब्दस्वरूपस्य वैकल्यम्, अपभ्रंशरूपत्वात्, तदभावस्तस्यावैकल्यमित्यर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, असंस्कृतस्यापि भ्रान्त्या संस्काराभ्युपगमसंभवेन अभ्युपगतसंस्कारत्वस्य शब्दतत्त्वावैकल्यस्वरूपत्वायोगात्।

अत्रैव वाक्ये 'साधुस्वरूपम्' साधुत्वरूपम्' 'साधुत्वस्वरूपम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अनपगतसंस्कारम् इति विशेषणसंबन्धसंभवात्। द्वितीयतृतीयपाठविशेषणत्वे तु अपगतसंस्कारत्वमिति पाठः स्यात्॥ १३॥

## तद्द्वारमपवर्गस्येति कारिका॥ १४।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'शब्दपूर्वं हि' 'शब्दस्वरूपं हि' 'शब्दा पूर्वं हि' इति पाठत्रयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकानुसारित्वात्। द्वितीयपाठे वाक्येऽनन्वयो दोषः। तृतीयपाठेऽर्थसंगतिः, पूर्वदोषोऽपि। अत्रैव वाक्ये—'शब्दस्वरूपस्याभेदतत्त्वज्ञः' 'शब्दस्वरूपमस्याभेदतत्त्वज्ञः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, पूर्वापरानुसन्धाने सत्यर्थसंगतेः। तदभावादेव च द्वितीयपाठोऽयुक्तः। अत्रैव वाक्ये—'अभेदतत्त्वज्ञः' 'अभेदतत्त्वज्ञाने' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे हि—'योगं लभते' इत्यत्र कर्तृस्वरूपाकांक्षाया अनुच्छेदः स्यात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'वैकरण्यम्' 'वैयधिकरण्यम्' इति पाठद्वयमुपलभ्यते। तत्राद्य पाठ एव युक्तः। वैकरण्यम्, करणसाहित्यरूपं मोक्षं प्राप्नोति इत्यर्थसंगतेः। वैयधिकरण्यं प्राप्नोति इति पाठे तु अर्थासंगतिः स्पष्टैव।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'सो व्यतिकीर्णाम्' 'सोऽतिव्यतिकीर्णाम्' 'सोऽतिव्यतिकीर्णवागवस्थाम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठो न युक्तः। तथाहि—तत्र पाठे सः अव्यतिकीर्णम् इति च्छेदः। व्यतिकीर्णामितिच्छेदे तु सव्यतिकीर्णामिति पाठः स्यात्। एतत्तादोरिति सुलोपात्। ध्वनिभिरव्यतिकीर्णत्वमसंकीर्णत्वरूपं न वैखर्या अपि तु प्रतिभायाः परायाश्च वाच इति अव्यतिकीर्णाम् वागवस्थामधिगम्य अनुवाक् विकाराणां प्रकृतिं प्रतिमां परैति इति वाक्ययोजनानुपपत्तिः। अत्र च वागवस्थापदेन वैखरीरूपावस्थैव पूर्वपरानुसम्बन्धानेन गृह्यते। द्वितीयपाठस्तु युक्तः, वैखर्याध्वनि-

भिरतिव्यतिकीर्णत्वात्। एतद्वाक्ययोजनायामर्थसंगतेश्च। तृतीयपाठस्तु न युक्तः। या वागवस्था अव्यतिकीर्णा तामधिगम्येति रीत्या वागवस्थाया उद्देश्यत्वम्, अति व्यतिकीर्णत्वस्य च विधेयत्वं यत्प्रतीयते, समस्ते पाठे तस्याप्रतीत्यापत्तेः। समासे विशिष्टविषयिकयोः शक्त्युपस्थित्योः स्वीकारात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रतिभाख्याच्छब्दपूर्वयोगभावनाभ्यामाक्षेपात्' इति, 'प्रतिभाख्यशब्दाच्छब्दपूर्वयोगभावनाभ्यासाक्षेपात्' इति, प्रतिभाख्यशब्दाच्छब्द-पूर्वयोगभावनाऽर्थप्रवृत्त्योर्वाक्यतत्त्वाक्षेपात्' इति पाठत्रयं दृश्यते। एष्वेकोऽपि न साधुः, अर्थासंगतेः। किन्तु—'प्रतिभाख्याच्छब्दाच्छब्दपूर्वयोगभावनाभ्या-सापेक्षात्' इति पाठः साधुः प्रतिभाति। अत्र पाठे शब्दादिति विशेष्यानुपादाने प्रतिभाख्यादिति विशेषणस्याविशेष्याकांक्षाया अविनिवृत्तिः। पूर्वत्र पाठत्रये आक्षेपादिति पाठेऽर्थासंगतिः स्फुटैव। अत्र चतुर्थे पाठे—'शब्दपूर्वेण योगेण भासन्ते प्रतिबिम्बवत्' इति कारिकार्थानुसारेण—शब्दपूर्वो यो योगस्तद्रूपा या भावना तस्या योऽभ्यासस्तदपेक्षात्प्रतिख्याच्छब्दादिति पदानां योजनायामर्थसंगतिः स्फुटैव।

यत्तु शब्दपूर्वो योगो व्याख्यातः, तस्य भावनाप्राप्तिः, तस्यावृत्तिरभ्यासः, तस्याक्षेपः, स्वकार्योत्पादनाभिमुख्यमिति व्याख्यातं वृषभदेवेन तत् क्लिष्टमिति स्फुटमेव। पूर्वत्र पाठत्रये तृतीये पाठे बहुप्रक्षिप्तं भाति तत्सुधीभिरूह्यम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तस्य शरणम्' 'तस्य शरीराणाम्' इति पाठद्वयमुप-लभ्यते। तत्राद्य पाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठेऽर्थासंगतिस्तु स्पष्टमेव प्रतिभाति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तन्निमित्तत्वात्संस्कारस्य' 'तन्निमित्तत्वात्संस्काराणाम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। संस्कारस्य सामान्यरूपेणोपात्तत्वात्सा-मान्ये एकवचनस्यैव युक्तत्वात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते पद्ये—'परमं पृथिव्याम्' 'परमं पृथिव्या' इति पाठद्वयं दृश्यते। तत्र द्वितीय पाठ एव युक्तः। अग्रे पादद्वये अवध्यवध्यमद्भावरूपस्य संबन्धस्य संबन्धत्वेन रूपेण षष्ठ्यैव प्रतिपादनादत्र प्रथमपादेऽपि पृथिव्या इति षष्ठी निर्देशस्यैवौचित्यात्। अस्यैव पद्यस्य द्वितीये पादे—'अपामिति' 'अद्भ्य' इति पाठ-द्वयम्, 'मन्त्राः' इति, 'मन्त्रः' इति च पाठद्वयं दृश्यते। तत्राद्ये पाठद्वये प्रथमपाठ एव युक्तः। षष्ठीनिर्देशौचित्यस्य प्राक् प्रदर्शनात्। उत्तरत्रापि पाठद्वये प्रथमपाठ एव युक्तः। जलापेक्षया सर्वेषां मन्त्राणां परमपवित्रत्वप्रतिपादनस्यौचित्यात्।

अत्रैव पद्ये चतुर्थपादस्याग्रे 'महर्षयो व्याकरणम् निराहुः'। इत्यस्याग्रे यद्यपि—इति पदं क्वचिद् श्रूयते क्वचिन्न, तथापि उद्धृतपद्यस्यान्ते इति पदप्रयोग एव सर्वत्र दृष्ट इति स एवोचितः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अतश्चाधिविद्यं प्रकाशते' इति, 'अधिविद्यं प्रकाशते'

इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। अस्य पाठस्य प्रतीकरूपत्वात्। 'सर्वो हि प्रायेण' इत्यादि ग्रन्थस्यैतदुपपादनायैव प्रवृत्तत्वेन उपपादकानपेक्षत्वात्। 'आपः पवित्रमि'त्यादिपद्येनास्योपपादनासंभवाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'सर्वो हि प्रायेण स्वस्याम्' इति, 'सर्वो हि स्वस्याम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। यतो हि नैयायिकाः स्वस्यां विद्यायां कर्मकरणाधिकरणादिविभक्त्यर्थं इति सिद्धान्तसमर्थकम्, कर्त्ता लकारार्थ इति सिद्धान्तोपपादकञ्च व्याकरणं नानुगच्छन्ति इति प्रायपदोपादानमावश्यकमेव। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अपभ्रंशप्रयोगेण च' 'अपभ्रंशे च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अपभ्रंशप्रयोगस्यैवापत्रपाहेतुत्वात्। अपभ्रंशस्य बुद्धिस्थस्यापत्रपाहेतुत्वाभावाच्च ॥ १४-१६ ॥

**अत्रातीतविपर्यास इति कारिका ।। १७ ।**

'अत्राहितविपर्यासः' इत्यपि पाठः क्वचित् दृश्यते, स तु न युक्तः। 'केवलामनुपश्यति' इत्यग्रिमग्रन्थविरोधात्।

अस्या एव कारिकायास्तृतीये पादे—'छन्दस्यश्छन्दसाम्' 'छन्दस्यं छन्दसाम्' 'छन्दस्यच्छन्दसाम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। इतरस्मिन् पाठद्वये तु अर्थासंगतिः स्फुटैव प्रतिभाति ॥१७॥

**प्रत्ययस्तमितभेदाया इति कारिका ।। १८ ।**

'प्रत्यस्तमितरूपाया' इत्यदि पाठः क्वचिद् दृश्यते। तत्राद्य पाठ एव युक्तः, भेदप्रत्यस्तमयस्यैवात्र विवक्षितत्वात्। द्वितीयपाठे यद्वाचोरूपमुत्तममिति अग्रिमग्रंथविरोधात्। अस्या एव तृतीये पादे—'यदस्मिन्नेव' 'यदग्निनेव' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। द्वितीयपाठे तृतीयान्तस्यानन्वयः, अर्थासंगतिश्च। अस्या एव चतुर्थे पादे—'विवर्तते' 'प्रवर्तते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। तमो नाशार्थं तमसि ज्योतिषः प्रवृत्तेरेव दर्शनात्। तत्र तस्य विवर्तादर्शनाच्च॥१८॥

**वैकृतं समतिक्रान्ता इति कारिका ।। १९ !**

अस्या द्वितीये पादे—'मूर्तिव्यापारदर्शनम्' मूर्तिर्व्यापारदर्शनम्'—इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, मूर्त्याः क्रियायाश्च दर्शनमनुभवस्तं ये समतिक्रान्ता इति वृषभदेवेन व्याख्यातत्वात्। द्वितीयपाठे सर्वथाऽर्थासंगतेश्च। अस्या एव चतुर्थे पादे—'यमुपासते' 'यदुपासते' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, यत्पदेन परामृश्यमानस्य प्रकाशस्य पुंस्त्वेन यमिति निर्देशस्यैवौचित्यात्। ॥ १९ ॥

**यत्र वाचो निमित्तानि इति कारिका ।। २० ।**

अस्या द्वितीये पादे—'चिह्नानीवाक्षरस्मृतेः' 'चिह्नानीवाक्षरस्मृतौ' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, उपमेयदले यत्रेति सप्तम्यन्तार्थनिर्देशे

उपमानदलेऽपि सप्तमीनिर्देशस्यैवौचित्यात् । उपमानोपमेययोः समानविभक्तिकत्व-नियमात् ॥ २० ॥

**अथर्वणामङ्गिरसामिति कारिका ॥ २१ ।**

अस्याश्चतुर्थे पादे—'पृथक्स्थितिपरिग्रहाः' 'पृथक् स्थितिपरिग्रहाः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव साधुः । द्वितीयस्तु अपपाठ इति स्पष्टमेव ॥ २१ ॥

**यदेकं प्रक्रियाभेदैरिति कारिका ॥ २२ ।**

अत्र 'यदेकं प्रक्रियावाक्यैः' इति पाठोऽपि क्वचिदुपलभ्यते । स तु न युक्तः, प्रक्रियाभेदानां बहुधाप्रविभागे साक्षाद् हेतुत्वात्, प्रक्रियावाक्यानां तु प्रक्रियाभेदज्ञापकत्वेन तत्र करणत्वमिति व्यवधानात् । अस्या एव द्वितीये पादे—'बहुधा प्रविभज्यते' 'बहुत्वे प्रविभज्यते' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठेऽर्थासंगतिः । कथंचिदर्थसंगतावपि क्लिष्टता इति हेयः सः । अत्रैव पादे—'प्रविभज्यते' 'प्रतिलभ्यते' इति पाठद्वयं दृश्यते । तत्राद्य पाठापेक्षया द्वितीयस्यापकर्षः स्फुट एव । किन्त्वेकस्य बहुधा प्रविभागोऽनुपपद्यमानो प्रक्रियाभेदैरिति हेतुना उपपाद्यते इति युक्तम् । एकस्य बहुधा प्रतिलम्भस्तु भ्रान्त्याऽपि संभवति, दृगन्तचिपिटीकरणादौ निमित्ते सति चन्द्रद्वयप्रतिलम्भवद् इति नोपपादकमत्यन्तमपेक्षते इति प्रक्रियाभेदैरिति अत्र पक्षे मन्दप्रयोजनम् । किञ्च प्रक्रियाभेदो बहुधा प्रविभागे हेतुः, बहुधा प्रविभागस्तु बहुधा प्रतिलम्भे हेतुरिति रीत्याऽपि आद्यपाठ एव युक्तः, प्रक्रियाभेदस्य बहुधा प्रतिलम्भेऽन्यथासिद्धत्वात् । अस्या एव चतुर्थे पादे—'परं ब्रह्माधिगम्यते' 'परं ब्रह्माभिगम्यते' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः, व्याकरणज्ञानस्य परम्परया परावाग्रूपपरंब्रह्माधिगमहेतुत्वात् । द्वितीयपाठे तु व्याकरणज्ञानस्य परब्रह्मज्ञानव्यवधानेन परब्रह्मप्राप्तिहेतुत्वमिति विशेषात् ॥ २२ ॥

**नित्याः शब्दार्थ सम्बन्धा इति कारिका ॥ २३ ।**

अस्या द्वितीये पादे—'तत्राम्नाताः' 'समाम्नाताः' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः, स्वोपज्ञवृत्तौ तस्यैव पाठस्य प्रतीकत्वेनोपन्यासात् । अस्या एव तृतीये पादे—'सानुतन्त्राणाम्' 'अनुतन्त्राणाम्' इति पाठद्वयं दृश्यते । तत्र द्वितीय-पाठ एव युक्तः । स्वोपज्ञवृत्तौ—'सूत्रादीनां प्रणेतृभिः' इति व्याख्यादर्शनात् । किञ्च, नहि सानुतन्त्राणां सूत्राणां प्रणेता कश्चन महर्षिर्दृश्यते । किञ्च द्वितीयपाठे पदलाघवमपि, सह शब्दस्य व्यर्थत्वात् । पञ्चदशपद्यमारभ्य त्रयोविंशपद्यपर्यन्तस्य पद्यजातस्य कुलकस्यैकत्रैव व्याख्यानं स्वोपज्ञवृत्तौ तत्र 'विरुद्धैकार्थसमवायिनीभिः' 'विरुद्धैकार्थसमवायिभिः' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः । 'आकृतिभिः सर्वाभिः' इति स्त्रीलिङ्गविशेष्यनिर्देशात् । अत्र—'आकृतिभिः' इति पाठः क्वचिद् दृश्यते, क्वचिन्न, एवमपि आकृतिभिरिति पाठ आवश्यक एव । विशेष्यानिर्देशे वाक्यार्थबोधासंभवात् ।

अत्रैवाग्रे—'वृक्षशब्दत्वादयः सति वस्तुसंप्रमोहे' 'वृक्षशब्दत्वादयः सन्ति वस्तुसंप्रमोहे' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। द्वितीयपाठे हि सन्ति इत्यत्र वाक्यसमाप्तौ—'वृक्षशब्दत्वादयः' इत्यस्य 'निमित्तसरूपतामापन्ना अभिव्यक्ताः शब्दा इत्यपदिश्यन्ते' इत्यग्रिमवाक्ये सम्बन्धानुपपत्तेः। अत्रैव—'निमित्तसरूपतामापन्नाभिव्यक्तिर्व्यक्ताः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। वृषभदेवकृतटीकायाम्—'अभिव्यक्ता इति। स्वाश्रयेणाभिव्यक्ताः' इति व्याख्यादर्शनात्। अत्रैवाग्रे—'द्रव्यत्वपृथिवीत्वघटत्वादीनाम्' 'द्रव्यत्वघटत्वादीनाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्रव्यत्वपृथिवीत्वयोः, पृथिवीत्वघटत्वयोश्च साक्षात् व्याप्यव्यापकभावात्। द्रव्यत्वघटत्वयोस्तु व्याप्यव्यापत्वव्यापकव्यापकत्वाभ्यां तत्त्वात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'तैस्त्वसमजन्मभिः' 'तैस्तु क्रमजन्मभिः' 'तेषु क्रम जन्मभिः' इति पाठत्रयं दृश्यते। तत्र तृतीय पाठ एव युक्तः। आद्यपाठे हि—'न समं युगपद् जन्म येषाम्' इति व्युत्पत्त्या अयुगपत्कालैरित्यस्योपपादकमिति सार्थक्यसंभवेऽपि तैरित्यनेन पूर्वोक्तानां शब्दव्यक्तिविशेषाणां परामर्शेनार्थासंगतिरापद्यते। नहि शब्दव्यक्तिविशेषा वृक्षशब्दादय एवावयवाः, किं तर्हि, तेषु स्थिता अवयवा इति। अत एव तृतीयपाठे सर्वथाऽर्थसंगतिः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रत्यवयवं परिसमाप्यते' 'प्रत्यवयवं प्रतिसमाप्यते' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, परिसमाप्तेः पर्याप्तिरूपाया एवात्र विवक्षितत्वात्। प्रतिसमाप्तिस्तु न पर्याप्तिरूपेति विशेषात्। अग्रे 'परिसमाप्तिर्यदि प्रतिज्ञायते' इति परिसमाप्तिपदस्यैव पाठदर्शनाच्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'वृक्षादिशब्दविशेषाकारावग्रहा' इति 'वृक्षादिविशेषाकारावग्रहा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, बुद्धौ शब्दविशेषाकारावग्रहस्यैवात्र विवक्षितत्त्वात्। अत्रैव वाक्ये 'वकारादिषु' 'ककारादिषु' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठे पदच्छेदे—अकारादिषु इति पाठः संपद्यते। तत्राद्यपाठ एव युक्तः। प्रागुपात्ते वृक्षशब्दे वकारस्यैवादित्वात्। अत्रैव वाक्ये-'बुद्धिः प्राप्नोति' 'बुद्धिमाप्नोति' इति पाठद्वयं वर्तते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। तदभावाच्च द्वितीयपाठो न युक्तः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'उत्पन्नापवर्गिणाम्' उत्पन्नापवर्गाणाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—'उत्पन्नापवर्गिणाम्' इत्यस्य उत्पन्नविनाशिनामित्यर्थः। स चात्र विवक्षितः, संगच्छते च इति पूर्वापरानुसन्धानेन प्रतीयते। द्वितीयपाठे तु उत्पन्नापवर्गाणामित्यस्य उत्पन्नविनाशानामित्यर्थः। न चातः कर्मविशेषाणां क्षणिकत्वं लभ्यते। स्थिराणामपि उत्पन्नानां कदाचिद् विनाशसंभवात्। अत उपेक्ष्योऽयं पाठः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'न च कर्मत्वव्यतिरेकेण' 'न च कर्मव्यतिरेकेण' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। तथाहि—व्यतिरेकोऽत्र भेदः, वैशिष्ट्यं तृतीयार्थः। कर्मत्वभिन्नानामित्यर्थः फलति। स एव चात्र विवक्षित इत्यवधायावधार्यते। द्वितीयपाठे तु कर्मव्यतिरिक्तानामिति कर्मव्यतिरिक्तेषु इति वाऽर्थकरणेऽपि नार्थसंगतिरित्यवधेयम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'न च कर्मावयवमात्रदर्शने' 'नहि कर्मावयवमात्रदर्शने' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। पूर्वस्य वाक्यद्वयस्य 'न च' इत्यव्ययद्वयेनैवोपक्रमात्, अत्रापि तेनैवोपक्रमस्यौचित्यात्। अत्रैव वाक्ये—'भ्रमणादिकर्मविशेषाकारावग्रहाः' 'भ्रमणत्वमात्रादिकर्मविशेषाकारावग्रहाः, इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। भ्रमणादीनां कर्मविशेषाकारत्वात्, भ्रमणत्वादीनाञ्च तदभावेनार्थासंगतेः। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अवग्रहाः प्रत्यया उत्पद्यन्ते' 'अवग्रहः प्रत्यय उत्पद्यते' इति पाठद्वयं दृश्यते। अत्र यद्यपि टीकायामेकवचनान्तपाठ एवादृतो व्याख्यातश्च तथापि बहुवचनान्तपाठ एव युक्तः। भ्रमणादिकर्मविशेषाकाररूपविषयभेदेन तदवग्रहप्रत्ययानामपि भेदात्। अत्रैव वाक्ये प्रत्यया इत्यस्यानन्तरम्—'क भाति' इति पाठः क्वचिद् दृश्यते। स चापपाठः।

अत्रैवाग्रे—'प्रतिपद्यमानानि' 'प्रतिपद्यमानानि च' इति पाठभेदः क्वचित् क्वचिद् दृश्यते। किन्तु अत्राद्यपाठ एव युक्तः। इतः प्राक्तेनेन अपिशब्देन च शब्दस्य गतार्थत्वात्।

अत्रैवाग्रे—'अनभिव्यक्तोपव्यञ्जनविशेषपरिग्रहा' 'अभिव्यक्तोपव्यञ्जनविशेषपरिग्रहा' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयस्तु तदभावादयुक्तः। अत्रैव—'विशेषपरिग्रहा' 'विशेषणपरिग्रहात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। बुद्धिविशेषणत्वेनार्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः।

अत्रैवाग्रे—'यदा तु' 'यथा तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे तदा इत्यर्थकेन अथशब्देन सह सम्बन्धसंभवात्। द्वितीयपाठे तु अग्रे तथाशब्दाभावादर्थासंगतिः। अत्रैवाग्रे—'दिग्विशेषावधि' 'यदि विशेषावधि' 'विशेषावधि' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। इतरस्मिन् पाठद्वये तु अर्थासंगतिः स्फुटैव। अत्रैव वाक्ये—'कर्मणाम्' इति पदं क्वचिद् दृश्यते, क्वचिन्न। तत्र 'कर्मणाम्' इत्यस्य पाठ एव युक्तः। तदभावे दिग्विशेषावधीत्यादिविशेषणस्य विशेष्यानिर्धारणात्।

अत्रैव वाक्ये—'प्रबन्धः' 'प्रतिबन्धः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, प्रबन्धपदस्य निरन्तरसम्बन्धार्थकत्वेन प्रकृतार्थसंगतेः। प्रतिबन्धपदस्य तु नात्र कथमपि अर्थसंगतिः।

अत्रैवाग्रे—'जातिविशेषोपाधियुक्ता व्यवहाराः' 'जातिविशेषोपाधियुक्त-

व्यवहाराः' इतिपाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे--'अथ जातिविशेषोपाधियुक्ता व्यवहारा अवतिष्ठन्ते' इत्यग्रिमग्रन्थसाम्यात्। अत्रैव वाक्ये—'प्रकल्पन्ते' 'प्रकल्प्यन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शुद्धधातुप्रयोगेणैव विवक्षितार्थबोधोपपत्तौ णिच्पर्यन्तानुधावनस्य व्यर्थत्वात्। किञ्चात्र प्रयोजककर्तुरनिर्देशेनापि कर्मणि लकारो न युक्तः। यद्यपि क्वचित्पुस्तके—'यदा तु' इत्यारभ्य 'व्यवहाराः प्रकल्पन्ते' इत्यन्तः पाठो न दृश्यते, तथापि स पाठ आवश्यकः। तथा वृक्षादिष्वपि इत्याद्युत्तरग्रन्थस्य दृष्टान्तभूतत्वात्।

अत्रैवाग्रे—'अपरिगृहीतानेकोपव्यञ्जन' 'अपरिगृहीतानेकाभिव्यञ्जन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। पूर्वत्रोपव्यञ्जनशब्दप्रयोगादत्रापि तत्प्रयोगस्यैव युक्तत्वात्। टीकायामत्रोपव्यञ्जनशब्दपाठस्यैवाभिप्रेतत्वाच्च। अत्रैवाग्रे—'शब्दाकृतिभिर्व्यवहर्तुम्' 'शब्दाकृतिर्व्यवहर्तुम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, पूर्वत्र विशेषणपदद्वये तृतीयाविभक्तिदर्शनात्। अन्यस्याः शब्दाकृतेर्वृक्षादिशब्दाकृतिभिरव्यवहार्यत्वाच्च।

अत्रैवाग्रे—'अभिव्यञ्जकैरुपव्यञ्जनो व्यक्तिविशेषपरिग्रहो' इति पाठो यद्यप्युपलभ्यते। तथापि तत्र—'अभिव्यञ्जकैराश्रितानामेवाभिव्यक्तिः' इति पाठः साधुः। अत्रत्य वृषभदेवटीकास्वारस्यात्, अर्थसंगतेश्च। क्वचित्तु—'अभिव्यञ्जकैराश्रितानाम्' इत्यस्य स्थाने—'अभिव्यञ्जकसंनिहितानाम्' इति पाठो दृश्यते। स तु न युक्तः, टीकास्वारस्याभावात्।

इत्थं हि अत्रत्या टीका—'यथा घटादीनामभिव्यञ्जकैः प्रदीपालोकेन्द्रियादिभिरनाश्रितानामेवाभिव्यक्तिः क्रियते' इति।

अत्रैवाग्रे—'शब्दव्यक्तिसमवाये' 'शब्दसमवाये' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शब्दाकृतेः शब्दव्यक्तिसमवायनिर्देशस्यैवौचित्यात्। अत्रैवाग्रे—'पूर्वमगृहीता' 'पूर्वमेव गृहीता' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। टीकायामस्यैव पाठस्य प्रतीकीकृत्य व्याख्यातत्वात्। यद्यपि 'अव्यक्तं गृहीता वा' इति पाठः क्वचिद् दृश्यते, क्वचिन्न, तथापि अयं पाठो युक्त एव। टीकायां प्रतीकीकृत्य व्याख्यातत्वात्।

अत्रैवाग्रे—'स एवायमिति प्रत्ययाभेदाद्' 'स एवायमिति प्रत्यभिज्ञानात्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। प्रथमपाठे तु अर्थासंगतिः। प्रत्ययसारूप्येऽपि प्रत्ययाभेदाभावात्। अभेदप्रत्ययाद् इत्यस्यैव वक्तुमौचित्याच्च। अत्रैव वाक्ये—'अनुमीयते' 'अनुमन्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अनुमानस्यैवात्र शब्दस्वारस्येन विवक्षितत्वात्, अनुमतेरविवक्षितत्वाच्च।

अत्रैवाग्रे—'पारम्पर्याविच्छेदात्' 'श्रुतिपारम्पर्याविच्छेदात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। एतद् वाक्योपसंहारे 'नित्याः शब्दाः' इत्युक्तेरेव

शब्दपारम्पर्याविच्छेदस्य लाभे लाघवात्, श्रुतिपदस्यानेकार्थकत्वेन भ्रामकत्वाच्च। अत एवैतद् व्याख्याने टीकायाम्—श्रुतिपारम्पर्याविच्छेदात् इति प्रतीकं धृत्वापि—'अनादौ संसारे पारम्पर्येण व्यवस्थितोऽयं शब्दव्यवहारः' इति श्रुतिपदरहित एव पारम्पर्यशब्दप्रयुक्तः।

अत्रैव वाक्येऽग्रे— 'अलब्धप्राथम्या' इति, 'अलब्धप्राथम्याद्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अग्रे—शब्दा इति विशेष्योपलब्धेः। द्वितीयपाठे तु विशेष्यानुपलब्धेरयुक्तता। अत्रैव वाक्ये—'व्यवहारनित्यतया' नित्यव्यवहारतश्च नित्यतया' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। लाघवात्, अर्थसंगतेश्च। द्वितीयपाठे तु शब्दगौरवम्, अर्थासंगतिश्च। तथाहि- व्यवहारस्य नित्यतया नित्या इति वक्तव्ये—नित्यव्यवहारतश्च नित्यतया नित्या इति पाठे नित्यतया इति पदस्य वैयर्थ्यमपरिहार्यमेव। किञ्च नित्यव्यवहारतश्च नित्या इत्युक्तावपि न शोभनत्वम्। व्यवहारनित्यत्वस्यैव शब्दनित्यत्वे प्रयोजकत्वेन नित्यत्वविशिष्टव्यवहारस्य शब्द-नित्यत्वेऽप्रयोजकत्वात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते वार्तिकभाष्ये 'सिद्धे शब्देऽर्थे सम्बन्धे चेति' इत्यस्यानन्तरम्—'आकृतावित्याह' इति पाठो दृश्यते। तत्र—'अथ कं पुनः पदार्थं मत्वैष विग्रहः क्रियते, आकृतिमित्याह' इति पाठो युक्तः, भाष्यसंवादात्। अत्रैवाग्रे—'सोऽयमिति यः सम्बन्धः' इत्यत्र यत् शब्दपाठः क्वचिन्न दृश्यते। तथापि यच्छब्द-पाठ एव युक्तः। अग्रे तच्छब्दस्य पाठदर्शनात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'औत्पत्तिकः स्वभावसिद्धः' 'अनुत्पत्तिकः स्वभावसिद्धः' इति पाठद्वयं दृश्यते। तत्राद्यः पाठ एव युक्तः। स्वभावसिद्धे औत्पत्तिकशब्दप्रयोगस्य सम्प्रदायसिद्धत्वबोधनार्थं तत्प्रयोगस्यैवौचित्यात्। तथाच जैमिनिः—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति। अत्रैव वाक्ये—'न केनचित्कर्त्ता कश्चित्' 'न केनचित्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, करणादिव्युदासार्थं कर्तृपदप्रयोगस्यौ-चित्यात्। प्रतिपत्तिविशेषावद्योतनार्थं कश्चिदित्येतत्प्रयोगस्यापि औचित्याच्च।

अत्रैव वाक्ये—'प्रत्यज्ञातपूर्वः' 'प्रत्यभिज्ञानपूर्वम्' 'प्रत्यज्ञानपूर्वम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्त', अर्थसंगतेः। द्वितीयपाठे तु सर्वथाऽर्थासंगतिः स्फुटैव। तृतीयपाठे—अज्ञानपूर्वमित्यस्य तत्प्रथममित्येतद् विशेषणत्वाभ्युपगमेन कृत इत्येत-त्प्रधानक्रियाविशेषणविशेषणत्वेनानौचित्यात्। प्रथमपाठे तु प्रधानीभूतार्थसम्बन्धः स्फुट एवेति। अत्रैव—'तत्प्रथमं कृतः' 'प्रथमतः कृतः' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। तथाहि—आद्यपाठे 'प्राथम्यविशेषस्याभिधानम्' 'द्वितीयपाठे तु प्राथम्यसामान्यस्य' तत्र सामान्येनार्थस्याभिधानेऽर्थस्य न स्फुटा प्रतीतिः, विशेषणे-नाभिधाने तु स्फुटा इति रीत्या आद्यपाठस्य युक्तत्वमिति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ— 'एकविषयत्वेऽभ्युपगम्यमाने' 'एकविषयत्वमुपगम्य'

इति पाठद्वयं दृश्यते । तत्र यद्यपि पाठद्वयस्यापि—'कार्यकारणभावः शब्दार्थयोः सम्बन्धः सिद्धः' इति सिद्धपदमध्याहृत्योपपत्तिः संभवति, तथापि प्रागुपवर्णितस्वरूपाणां प्रत्ययानां कार्यकारणभावरूपशब्दार्थसम्बन्धसिद्धिहेतुत्वं यथा सप्तम्यन्तपाठे उपपद्यते न तथा ल्यबन्तपाठे। ल्यबन्तपाठे हि एकविषयत्वोपगमस्य पूर्वकालिकत्वमात्रमवगम्यते, न त्वन्वयव्यतिरेकौ। पूर्वकालिकत्वन्तु अन्यथासिद्धिसमानाधिकरणमपि संभवति इति न तेन हेतुत्वावसायः। सप्तम्यन्तपाठे तु सति सप्तम्या अन्वयोऽवगम्यते। तेन च व्यतिरेक आक्षिप्यते। संभवद्व्यतिरेकयोरन्वये व्यतिरेकाविनाभावाद् इति रीत्या अन्यथासिद्धिशून्यस्तादृशाभ्युपगमतादृशसम्बन्धसिद्ध्योः संपद्यते हेतुत्वावसाय इति सप्तम्यन्तपाठ एव युक्तः।

अत्रैव वाक्ये—'अविच्छिन्नपारम्पर्यः' 'विच्छिन्नवृत्तिपारम्पर्यः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। तथाहि—व्यवहारस्यानादित्वेन शब्दार्थयोः सम्बन्धस्यापि अनादित्वेनाविच्छिन्नपारम्पर्यत्वस्यौचित्यात्। एवं च द्वितीयः पाठोऽसंगत इति स्पष्टमेव। किञ्च द्वितीयपाठे वृत्तिपदवैयर्थ्यमपि स्फुटमेवेति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—समुद्धृते भाष्यवाक्ये—'बुद्धिर्व्याचक्षाणाः' 'वृद्धीर्व्याचक्षाणाः, 'ऋद्धीर्व्याचक्षाणाः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। व्याख्यातश्चैष एव पाठोऽम्बाकर्त्र्यामिति तत एवार्थसंगतिरवधार्या। इतरत् पाठद्वयन्तु असंगतमिति संपूर्णवाक्यार्थालोचनयाऽवधार्यम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'एतदनर्थकम्' 'एतदानर्थक्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। एकवाक्यत्वाच्च। द्वितीयपाठे तु अर्थासंगतिः। तदुपपत्तिप्रयासे तु वाक्यभेद इति हेयः स पाठः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते भाष्यवाक्ये—'खदिरवुर्वुरौ' 'खदिरकर्बुरौ' 'खदिरबर्बुरौ' इति पाठत्रयं दृश्यते। तत्र तृतीयपाठ एव युक्तः। द्वयोर्वृक्षवाचिनोः पदयोरितरेतरयोगद्वन्द्वसंभवात्। प्रथमपाठे तु वुर्वुरपदस्य बर्बुरार्थेऽप्रसिद्ध्याऽसाधुत्वम्। द्वितीयपाठे तु कर्बुरपदस्य चित्रवर्णवाचितया वृक्षविशेषवाचित्वाभावेन च सहविवक्षाया अभावे द्वन्द्वानुपपत्तिः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रत्यक्षधर्मभिः' 'प्रत्यक्षकर्मभिः' इति पाठद्वयं दृश्यते। तत्र कर्मणां प्रत्यक्षस्य स्वाभाविकत्वाद् अदृष्टरूपधर्मस्याप्रत्यक्षत्वात् शिष्टानां माहात्म्यातिशयख्यापनार्थं प्रथम एव पाठः समादर्तव्यो, न द्वितीयः ॥ २३-२५ ॥

## ते लिङ्गैश्च स्वशब्दैश्चेति कारिका ॥ २६ ।

अस्या द्वितीये पादे—'शास्त्रेऽस्मिन्नुपवर्णिताः' 'शास्त्रेऽस्मिन्नुपदर्शिता' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। लिङ्गैरुपदर्शनसंभवेऽपि लिङ्गैरुपवर्णना-[illegible] । [illegible] ये इत्यादिकस्य श्लोकत्रिकस्य विशेषकरूपस्यैकत्रैव

व्याख्यानं स्वोपज्ञवृत्तौ कृतम्। तत्रारम्भ एव-प्रकृतप्रविवेकः' 'कृतप्रविवेकः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। कृतप्रविभाग इत्यर्थस्यैवात्र संगतिसम्भवेन विवक्षितत्वात्। आद्यपाठे तु प्रकृतपदस्य प्राग्व्यार्थकतया विवक्षितार्थासिद्धिः। प्रकृतपदस्य प्रकर्षेण कृत इत्यर्थस्तु विवक्षालभ्योऽपि न प्रसिद्ध इति क्लिष्टः। अत्र पाठे प्रशब्दस्य वैयर्थ्यमपि इति दिक्।

अत्रैवाग्रे—'प्रविविक्तस्य' 'प्रविभक्तस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'कृतप्रविवेक इति प्रविविच्चिता' पूर्वमुपक्रमेऽपि प्रविविच्चितेन निर्देशेऽर्थैक्य-प्रतीत्या तन्निर्देशस्यैवौचित्यात्। भिन्नधातुनिर्देशे हि अर्थभेदः सम्भाव्येतेति। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'स्वप्रत्ययानुकारेण' 'प्रत्ययानुकारेण' इति पाठद्वयं दृश्यते। तत्र स्वपदोपादानमावश्यकम्। तदनुपादाने परप्रत्ययानामपि ग्रहणापत्तेः। अग्रे—'भावनाभ्यासवशात्' इत्यत्र स्वपदार्थस्य प्रतीत्यनुपपत्तेश्च। किन्तु—अनुकारपदमपहाय अनुसारपदमत्र पठितव्यम्। स एव पाठोऽत्रार्थसङ्गत्या साधुः, व्याख्यानश्च स एव पाठोऽम्बाकर्त्र्यामिति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'समुदायादपोद्धृतानाम्' 'समुदायाक्षेपोद्भूतानाम्' इतिपाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। द्वितीयपाठे तु समुदायात्-पदसमुदायात्, आक्षेपेण=अपोद्धारेण, उद्भूतानाम्=आविर्भूतानाम् इत्यर्थमाश्रित्य कथंचिदर्थसंगतावपि आक्षेपपदस्यापोद्धाररूपार्थकल्पने क्लेशः। तथाहि—तत्रार्थे तस्य शक्त्यभ्युपगमेऽप्रसिद्धिर्दोषः। शक्त्यभावे तु लक्षणैव दोषः। किञ्चात्र पाठे समुदायाक्षिप्तानामित्यनेनैव सामञ्जस्ये उद्भूतपदवैयर्थ्यमपि।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'सोऽयमपोद्धारपदार्थः' 'सोऽयमपोद्धारपदार्थः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठेऽर्थासङ्गतेः। अत्रैवाग्रे 'सत्यासत्यभावेनानुपाख्येय.' 'सत्यासत्येनानुपाख्येय.' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसङ्गतेः। द्वितीयपाठे तु समाहारद्वन्द्वसमाश्रयणेनैकवचनोपपत्तावपि सत्यासत्यसमूहेन अनुपाख्येय इत्यर्थासंगतिः स्फुटैव।

अत्रैवाग्रिमवाक्ये—'इत्यनुपसंहृते हि' 'इत्यनुसंहृते हि' इतिपाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसङ्गतेः। प्रकृतिप्रत्ययविभागमाश्रित्य शब्दसंस्कारमनुप्रकृत्यर्थप्रत्ययार्थप्रविभागसंहारवति वृक्षादिपदे इति हि प्रकृतवाक्यार्थप्रतीतेः। प्रथमपाठे तु प्रकृत्यर्थप्रत्ययार्थोपसंहारशून्ये वृक्षादिपदे इत्यर्थः स्यात्, स चायुक्तः। तत्र तदुपसंहारस्यैव सत्त्वात्। अत्रैव—'अनुसंहृते हि' 'अनुसंहृतेऽपि' इति पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। हि शब्दस्य पूर्ववाक्यार्थे प्रकृतवाक्यार्थस्य हेतुत्वावद्योतकत्वात्। अपि शब्दस्य तु समुच्चयार्थस्य नात्र कथमपि सङ्गतिः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'शब्दोपग्रहाणामर्थात्मनाम्' इति, 'शब्दोपग्रहणमर्थात्मनाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। द्वितीयपाठे तु

संनिहितेन अर्थात्मनामित्यनेन सम्बन्धो न स्यात्, भिन्नविभक्तिकत्वात्। अर्थात्मनां शब्दोपग्रहणं निरूपणं न विद्यत इत्येवंसम्बन्धेऽपि अर्थासङ्गतिः स्फुटैव निरूपणे शब्दोपगृह्यमाणत्वाभावात्। किञ्चास्मिन् पाठे उपग्रहणपदवैयर्थ्यम्। तृतीयान्तेन शब्दपदेनैव गतार्थत्वसंभवात्। अत्रैवाग्रिमवाक्ये—'अस्तित्वं न निवर्तयन्ति' 'अस्तितत्त्वमनुवर्तयन्ति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्मिन् पाठे हि अस्य वाक्यस्योत्तरवाक्येन सह समन्वयः संभवति। द्वितीयवाक्ये तु न कथमप्यर्थसङ्गतिः। न ह्यपवादभूताः क्रियाविशेषा अस्तितत्त्वमनुवर्तयन्ति। किन्तु निवर्तयन्त्येवेति।

अत्रैवाग्रिमवाक्ये—'एकपदमरूपाणि' 'एकपदसारूप्याणि' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अत्र भावप्रत्ययस्य प्रयोजनाभावात्। अत्रैव वाक्ये—'वाक्यानीति' 'वाक्यपदानीति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। द्वितीयपाठे पदशब्दप्रक्षेपस्य वैयर्थ्येन प्रमादजत्वम्। अत्रैवाग्रिमवाक्ये—'धात्वर्थः प्रत्ययार्थ इति' 'धात्वर्थ इति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रातिपदिकार्थधात्वर्थयोः प्रकृत्यर्थयोर्निर्देशे प्रत्यार्थनिर्देशस्यापि आवश्यकत्वात्। अत्रैव वाक्ये—'एकपदवाच्योऽप्यनियतावधिः' 'एकपदवाच्योऽपि सनियतावधिः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—अत्र नञः परित्यागेऽनिष्टार्थापत्तिरपरिहार्या स्यात्, बहुधा प्रविभज्यमानस्य नियतावधित्वासम्भवात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ–'स्थितलक्षणस्तु वाक्यरूपोपग्रहः' 'स्थितलक्षणस्तु वाच्यो वाक्यरूपोपग्रहः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, प्रथमपाठे विशेष्याप्रतीतेः। अत्रैव वाक्ये–'चर्वयति' 'अर्चयति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, चर्वयति इत्यस्य दन्तैः पुनः पुनः खण्डयति इत्यर्थेन कारकस्य क्रिययोपसंग्रहात्। अर्चयति इत्यस्य तु पूजयति इत्येवार्थः। न त्वत्र कारकस्य कस्यचित् क्रिययोपसंग्रहः। पूजासाधनानां पत्रपुष्पादीनामनियतत्त्वेन साधनवाचकपदोपादानं विना धातुमात्रेणान्तर्भावितसाधनायाः क्रियाया अप्रतीतेः। चर्वयति इत्यत्र तु चवर्णसाधनानां दन्तानां नियतत्वेन धात्वर्थेनोपसंग्रहोऽस्त्येव। अत्रैव वाक्ये–'प्रतिभोपसंहारकाले' 'प्रतिभोपसंग्रहकाले' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रतिभारूपवाक्यार्थबोधौपयिकतया पार्थक्येन भासमानानां पदार्थानामखण्डबुद्धिरूपायां प्रतिभायामुपसंहारस्य प्रविलयरूपस्यैवात्र विवक्षितत्वात्। उपसंग्रहस्तु विद्यमानानामपि भेदेन प्रतीयमानानामपि सामानाधिकरण्येन स्थित्यनुकूलव्यापाररूपः संभवति, स च नात्र विवक्षितोऽखण्डबुद्धिरूपायां प्रतिभायामेतादृशोपसंग्रहस्यासंभवात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'उपसंहृतक्रियमत्रपदम्' 'उपसंहृतक्रमवदत्रपदम्' 'उपसंहृतक्रमं यत्तदत्रपदम्' 'उपसंहृतक्रियं यत् तदत्रपदम्' इति पाठचतुष्टयमत्रोपलभ्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। प्रदर्शिता चार्थसंगतिर्व्याख्यानेनाम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगतिर्विवक्षितार्था सिद्धिरूपा, न कर्मधारयान्मत्वर्थीयो

बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकर इति न्यायविरोधश्चेति दूषणद्वयम्। तृतीयपाठेऽपि विवक्षितार्था सिद्धिर्यत्तत्पदयोर्वैयर्थ्यञ्चेति दोषद्वयम्। चतुर्थपाठे तु यत्-तत्पदयो-वैयर्थ्यरूप एको दोषः। व्यर्थीभूतपदद्वयोपादानेन वाक्ये गौरवञ्चेत्यपरोऽपि दोषः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते भाष्यवाक्ये–'कृत्तद्धितान्तञ्चैव ह्यर्थवत्' कृत्तद्धि-तान्तस्यैव ह्यर्थवत्त्वम्' 'कृत्तद्धितान्तस्यैव सार्थवत्त्वम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। न केवलाः कृत्तद्धिताः इत्यग्रिमवाक्ये वचनविपरिणामेनार्थ-वदित्यस्यान्वयसंभवात्। द्वितीयपाठे तु 'न केवलाः कृत्तद्धिताः' इत्यत्र अर्थवन्त इत्यपूर्वमध्याहर्तव्यं स्यात्, अर्थवत्त्वमित्यस्यैव वा तादृशो विपरिणामः कल्पयितव्यः स्यादिति गौरवम्। तृतीयपाठे तु द्वितीयपाठोक्तदोषसत्त्वेऽपि सार्थवत्त्वमिति सहपदानर्थक्यमप्यपरो दोषः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'सामान्यमात्रे' 'सामान्ये' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विशेष्यव्यवच्छेदार्थमात्रपदोपादानस्यौचित्यात्। अस्मिन्नेव वाक्ये-'पदान्तरसंबन्धप्राप्तसंनिधानेष्वर्थेषु' 'पदान्तरसंबन्धप्राप्तसंनिधा-नेष्वेतेषु' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु अर्थस्य प्रागनुपादानाद् तत्पदेन तत्परामर्शो न स्यात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ-'समुदायसंस्कारप्रक्रमे' 'समुदायसंस्कारप्रज्ञाने' इति पाठद्वयमुपलभ्यते। तत्र द्वितीयपाठ एव युक्तः, प्रज्ञानपदेन स्वार्थोपस्थापनद्वाराऽ-व्यवधानेनैव समुदायसंस्कारपक्षस्याक्षेपात्। प्रथमपाठे तु प्रक्रमेण प्रस्तावस्य प्रस्तावेन च पक्षस्याक्षेप इति व्यवधानेन पक्षपदार्थस्योपस्थितिरित्यनौचित्यं तस्य पाठस्येति।

अत्रैव वाक्ये–'न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात्' इति, 'बह्वर्थत्वात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अत्र पाठे निराकांक्षस्य वाक्यार्थस्य समाप्तेः। द्वितीयपाठे तु विवक्षितार्थानवगतिरिति हेयः सः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ–'कार्यकारणभावेनार्थाकारनिर्भासमात्रानुगतस्य' 'कार्य-कारणभावेनाकारनिर्भासमात्रानुगतस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, आकारपदस्य विषयसामान्यार्थकतया विषयविशेषनिर्देशस्यावश्यकत्वात्। निर्भासस्य विषयो ज्ञानं शब्दोऽर्थश्चेति रीत्याऽर्थस्य विषयविशेषत्वात्।

अत्रैव वाक्ये–'प्रत्ययस्यार्थेषु प्रत्यस्तरूपस्य' 'प्रत्ययस्यार्थेषु प्रत्यस्तमिति रूपस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, 'प्रत्यस्तरूपस्य' इत्यस्यारोपितरूपस्येत्यर्थेन तस्य औचित्यात्। द्वितीयपाठे तु प्रत्यस्तमित रूपस्य इत्यस्य विनष्टरूपस्येत्यर्थेऽविद्य-मानस्यार्थत्वेनाध्यवसायो नोपपद्यते इत्ययुक्तत्वं तस्य पाठस्येति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ–'इन्द्रियविषयवत्तु' 'इन्द्रियविषयविषयत्वं तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरस्माकत्र्यां व्याख्यानेन। द्वितीयपाठे तु न कथमप्यर्थसंगतिरिति सुधीभिरूह्यम्।

अत्रैव वाक्ये--'नित्यमकर्तृव्यापारसाध्यम्' 'कर्तृव्यापारसाध्यम्' इति पाठद्वय-मुपलभ्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अत्र पाठेऽकर्तृव्यापारसाध्यमिति नित्यत्वे हेतुविधया विशेषणम्। द्वितीयपाठस्तु 'सिद्धे शब्दार्थसंबन्धे' इत्यादि-वार्त्तिकतद्भाष्यविरुद्धः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ–'साधोर्यः सम्बन्धः' साधोर्यत्र सम्बन्धः' 'साध्योऽर्थः सम्बन्धः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। इतरत् पाठद्वयं तु अर्थासंगत्याऽयुक्तम्।

अत्रैव वाक्ये–'सञ्ज्ञाने' 'संज्ञाने' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, तत्पदेन यत्पदार्थस्य परामर्शोपपत्तेः। द्वितीयपाठे तु न तत्परामर्शसंभव इत्यनौचित्यं तस्य पाठस्येति।

अत्रैवाग्रे स्वोपज्ञवृत्तौ–'अङ्गभावमुपगच्छन्ति' अङ्गभावमुपगच्छन्तीति' पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अत्रैवैतद्वाक्यपरिसमाप्तेस्तत्सूचकेति पदोपादानस्य युक्तत्वात्।

अत्रैवाग्रे–'ते लिङ्गैश्च' इति श्लोकप्रतीकः क्वचिद् दृश्यते। क्वचित्तु सम्पूर्णः श्लोकोऽत्र पठितो दृश्यते, किन्तु प्रतीक एक केवल इष्यते इति स एव युक्तः, एतद्व्याख्याने स्वोपज्ञवृत्तौ—'विकल्पभेदः' 'भेदविकल्पः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'अवधिर्मर्यादा, सा च पुरुषविकल्पभेदाद् भिन्नेति वीप्सा तं तमिति, इति वृषभदेवटीकानुरोधात्।

किञ्च—'कथमिदं विज्ञायते' इत्याद्यग्रिमग्रन्थानुरोधादपि एष एव पाठो युक्तोः। तत्रार्थानां कल्पनाभेदरूपस्य विकल्पभेदस्यैव प्रतीयमानत्वात्। अर्थभेदे हि—अर्थानां भेदकल्पना क्रियेत, न चात्र सोऽस्ति इति न युक्तो द्वितीयः पाठः।

अत्रैव–'विकल्पभेदो विरुद्धः संभवति' 'विकल्पभेदः संभवति' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, विरुद्धपदोपादानस्य वैयर्थ्यात्। भेदपदेनैव विरुद्ध-पदार्थस्य सूचनात्। अत एव केचिद् वैधर्म्यं भेद इति वदन्ति। वैधर्म्यञ्च-विरुद्धधर्म-वत्त्वमेवेति।

अत्रैवाग्रे—'एकत्वादयो विभक्त्यर्थाः कर्मत्वादयः' इति पाठो दृश्यते। तत्र केनचिदुक्तम्, कर्मत्वादय इत्यस्यानन्तरं चकारपाठः समुचितः, अन्यथाऽनिष्टार्थापात-प्रसङ्ग इति, तन्न। विकल्पप्रदर्शनावसरे समुच्चयार्थकचकारपाठस्यानौचित्यात्। वाकाराध्याहारस्तु तत्र विकल्पार्थलाभार्थं तत्र कर्तव्य इत्येव युक्तम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते क्वाचित्के वाक्ये-'धातुः साधने दिशि पुरुषे' इति, 'धातुः साधने पुरुषे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेव-टीकानुरोधात्। व्याख्यातश्चैष एव पाठोऽस्वाकर्त्र्यामित्यर्थसंगत्यैष एव युक्तः।

अत्रैव वाक्ये-'पुरुषे चिति च' 'पुरुषोऽपीति' 'पुरुषेति च' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। इतरत् पाठद्वयं तु अर्थासंगत्या हेयम्। दर्शिता चाद्यपाठेऽर्थसंगतिरम्बाकर्त्र्यामिति तत एवावगन्तव्या।

अत्रैव वाक्ये-'लिङ्गे किमिति' 'लिटि किति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव वृषभदेवटीकासंमतः। अस्य पाठस्यार्थसंगतिरपि प्रदर्शिताऽम्बाकर्त्र्यामित्येष एव युक्तः। द्वितीयपाठस्तु अर्थासंगत्या हेयः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ--'प्रतिपत्तिक्रमो ह्ययं श्रोतुरभिधातुर्वा न व्यवस्थितः' 'प्रतिपत्तिक्रमो ह्ययं भागवान्न व्यवस्थितः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिर्व्याख्यानेनाम्बाकर्त्र्यामिति। द्वितीयपाठस्तु न युक्तः, अर्थासंगतेः। नहि क्षणिकत्वादभागे प्रतिपत्तिक्रमे भागवत्त्वस्य संभावनाऽपि इति। अत उत्तरवाक्ये-'इच्छन्' 'इच्छद्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, विशेष्यस्य पुरुषपदार्थस्य पुंस्त्वाद्।

अत्रैव वाक्ये-'बुद्ध्यन्तरैः' 'पुरुषान्तरैः' 'बुद्ध्यन्तरे' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकायाम्-अनुमित्यादिबुद्धिभिरिति व्याख्यानात्। इतरस्मिन् पाठद्वये तु अर्थासंगतिर्दुर्वारैवेति।

अत्रैव वाक्ये—'प्रविभज्यते' इति 'प्रविभजते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, इच्छन् इति कर्तृपदस्य प्रथमान्तस्योपन्यासात्। कर्तरि लकारे सत्येव तत्संभवात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ-'प्रत्यासत्त्या' 'प्रतिपत्त्या' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्यामिति तत एवावधार्या सा।

किञ्च प्रत्यासत्त्यादयः पञ्चसंसृष्टार्थसंनिधाने क्रमावगतिनिमित्तमित्युक्तं टीकायां वृषभदेवेन। अतोऽप्याद्य- पाठ एवयुक्तः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ-'मात्रास्वनियमेन' 'मात्रासुनियमेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्यैव पाठस्य वृषभदेवेन व्याख्यातत्वादत्रैवार्थसंगतेश्च।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते पद्ये—'एकोऽयम्' 'एकोऽपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, जात्यादिसंसृष्टस्य तत्तत्पदार्थरूपस्य भावात्मन इदंपदेन परामर्शादर्थसंगतेः। द्वितीयपाठे तु भावात्मन एकत्वं नोपपादितं भवति इति अनुपपन्नार्थबोधकत्वं दोषः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते भाष्यवार्त्तिके—'न वा पदस्यार्थे प्रयोगाद्' 'पदस्यार्थे प्रयोगात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, भाष्यवार्त्तिकेऽस्यैव पाठस्य दर्शनात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते संग्रहपद्ये तृतीयपादे—'पदानां रूपमर्थो वा' 'पदानामर्थरूपं वा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगतिर्वा शब्दासंगतिश्च स्फुटैव।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रकृतिप्रत्ययादीनां विभागे रूपपरिग्रहानियमः' 'प्रकृति-प्रत्ययादीनां विभागरूपपरिग्रहा नियमः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगतिः।

अत्रैव वाक्ये—'श्रोत्रियक्षत्रियादिषु' 'श्रोत्रियादिषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठएवयुक्तः, क्षत्रियशब्देऽपि विवक्षितार्थोपपत्तेः। उपपत्तिश्चाम्बाकर्त्र्यां द्रष्टव्या।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते भाष्यवाक्ये—'बुद्धीर्व्याचक्षाणाः' ऋद्धीर्व्या-चक्षाणाः' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्त इति निर्णीतं प्राक्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृते संग्रहपद्ये प्रथमपादे—'शब्दार्थयोरसंभेदे' 'शब्दार्थयोरसंबन्धे' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरस्य पाठस्य व्याख्यानेनाम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगति-र्दुष्परिहरेति विभावनीयं सूरिभिः॥ २६॥

## शिष्टेभ्य आगमात् सिद्धा इति कारिका॥ २७।

शिष्टेभ्यश्चागमात् सिद्धा इति पाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः, चकारस्य वैयर्थ्यात्। आगमाः सिद्धा इत्यपि क्वचित् पाठः। सोऽपि न युक्तः, वाक्यार्थेऽनन्वयात्। 'आगमाविच्छेदेनागतानि' 'आगमाविच्छेदे चागतानि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, शिष्टोपदेशपारम्पर्यस्य आगमाविच्छेदे तस्य चागतत्वे हेतुत्वेनार्थसंगतेः। द्वितीयपाठे तु सति सप्तम्या अन्वयलाभेन कथञ्चिद् हेतुत्वलाभ इति क्लेशः, चकारस्य वैयर्थ्यञ्चेति हेयः सः।

अत्रैव वाक्ये—'अनभिशङ्कनीयानि' 'अशङ्कनीयानि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थाधिक्यात्। तथाहि—अस्मिन् पाठे अभि इत्यस्य अभितः, सर्वत इत्यर्थः। तथा चानभिशङ्कनीयानि इत्यस्य सर्वतः अशङ्कनीयानि इत्यर्थः। द्वितीयपाठे तु न तदर्थलाभ इति हेयः सः।

अत्रैवाग्रिमवाक्ये—'अशिष्टाप्रतिषिद्धानि' 'अपि शिष्टाप्रतिषिद्धानि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एवोपादेयः, अर्थसंगतेरुदाहरणसंगतेश्च। द्वितीयपाठे तु तयोर-भाव इत्युपेक्ष्यः सः।

अत्रैव वाक्ये—'हिक्कितश्वसितकण्डूयितादीनि' 'हसितकण्डूयितादीनि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, बुद्धिवैशद्यार्थमधिकोदाहरणलाभात्।

अत्रैवाग्रिमवाक्ये—'तथा साध्वसाधुव्यवस्थानमप्यनवच्छिन्नपारम्पर्यम्' 'तथा साध्वसाधुव्यवस्थानमव्यवस्थितपारम्पर्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव

युक्तः, अनभिशङ्कनीयमित्यत्रान्वयाविरोधात्। द्वितीयपाठे तु तत्रान्वयविरोधः स्पष्ट एव, अव्यवस्थितपारम्पर्यस्य अभिशङ्कनीयत्वात्।

अत्रैव वाक्ये–'अनभिशङ्कनीयम्' 'अनभिशङ्कितम्' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव शोभनः। तथाहि–आद्यपाठे शाश्वतिकाभिशङ्काविषयत्वनिषेधलाभः। द्वितीयपाठे तु अतीतकालिकाभिशङ्काविषयत्वमात्रस्य निषेध इत्युपेक्ष्यः सः।

अत्रैव वाक्ये—'यथागमादेव' इति पाठो दृश्यते। स चाव्ययीभावसमासेऽपि नाशुद्धः। नाव्ययीभावादतोऽम्त्वपञ्चम्या इति पञ्चम्या अम्भावनिषेधात्॥ २७।

**नित्यत्वे कृतकत्वे वा इति कारिका॥ २८।**

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ-'शब्दानामभिव्यक्तिर्जन्मादिविक्रियापत्तिर्वा' 'शब्दानाभभिव्यक्तिः शब्दत्वादिविक्रियापत्तिर्वा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। द्वितीयपाठेऽर्थासंगतिस्तु स्फुटैव। अत्रैव वाक्ये—'कोटिर्न विद्यते' 'कोटिर्विद्यते' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव साधुः। प्रथमपाठे विवक्षितार्थसिद्धेः। द्वितीयपाठेऽनर्थापातात्। अत्र–'प्रथमा कोटिर्न दृश्यते' इत्यस्यानन्तरम्—'न परा' इति पाठः क्वचिद् दृश्यते क्वचिन्न। तत्र 'न परा' इति पाठ आवश्यकः, शब्दव्यवहारस्य नित्यत्वसमर्थनार्थमप्रवृत्तशब्दव्यवहारायाः परस्याः कोटेरपि निषेधस्यौचित्यात्।

अत्रैवाग्रिमवाक्ये—'ये चेश्वरकालपुरुषविद्याक्षेत्रज्ञान् विभक्तनत्त्वानाहुः' 'ये चेश्वरकालपुरुषविद्याक्षेत्रज्ञाद् विभक्तनत्त्वानाहुः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे विभक्तत्वान् इत्यस्य विशेष्यालाभात्। प्रथमपाठे तु ईश्वरादय एव विशेष्यभूता इति युक्तत्वं तस्य।

अत्रैवाग्रे—'ये चैकत्वानतिक्रमेण' 'ये चैककालतत्त्वानतिक्रमेण' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। विभक्तनत्त्वानाहुः' इति पूर्वग्रन्थानुरोधेन, 'अपूर्वापरं विश्वम्' इत्युत्तरग्रन्थानुरोधेन चास्यैव पाठस्यौचित्यात्।

अत्रैव वाक्ये—'समुच्चित' 'संमूर्च्छित' 'अपरिणाम' 'अपरिमाण' इति पाठचतुष्टयमुपलभ्यते। तत्राद्ये पाठद्वये द्वितीये च पाठद्वये द्वितीय एव पाठो युक्तः, अर्थसंगतेः। वृषभदेवटीकायां संमूर्छितपदस्यैव व्याख्यानाच्च। शक्तीनामपरिणामत्वस्यादर्शनाच्चात्रापरिणामेति पाठो न युक्तः। दर्शिता चार्थसंगतिरत्र पाठे व्याख्यानेनाम्बाकर्त्र्याम्। प्रथमपाठे तु पाठद्वयेऽपि अर्थासंगतिरवधानेन द्रष्टव्या।

अत्रैव वाक्ये—'अपूर्वापरम्' 'अपूर्वमपरम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वन्द्वपदार्थस्य निषेधे शब्दतोऽर्थतश्च लाघवात्। तत्तत्पदार्थनिषेधे तु तद्वैपरीत्यात्।

अत्रैव वाक्ये—'विश्वम्' 'कारणम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, विश्वकारणस्यापूर्वापरत्वेऽप्रवृत्तप्राणिव्यवहारस्य प्रथमस्य कालाध्वनः प्रतिषेधानुपपत्तेः। कारणस्यापूर्वापरत्वेऽपि विश्वस्य तत्त्वाभावात्।

अत्रैवाग्रिमवाक्ये— प्रथमो नाम कालाध्वा। सा चेयमनादिः' 'प्रथमो नाम कालाध्वनोरनादिः'। तत्राद्यपाठ एवार्थसंगत्या युक्तः, द्वितीयस्तु तदभावादयुक्तः। दर्शिता चाद्यपाठेऽर्थसंगतिर्व्याख्यानेनाम्बाकर्त्र्याम्।

अत्रैव वाक्ये—'प्रवृत्तिनित्यता' प्रवृत्तिरनित्यता' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठेऽर्थासंगत्या प्रथमपाठ एवोपादेयः। द्वितीयपाठेऽर्थासंगतिस्तु स्फुटैव। नहि प्रवृत्तिरेवानित्यता नित्यता वा, किन्तु प्रवृत्तिधर्मः, एवञ्चैकत्वव्यपदेशोऽनुपपन्न इति॥ २८॥

## नानर्थिकामिमां कश्चिद् इति कारिका ॥ २९ ।

अस्यास्तृतीये पादे—'तस्मान्निवध्यते शिष्टैः' 'तस्मान्निबद्धा तैः शिष्टैः' 'तस्यां निबध्यते शिष्टैः' 'तस्मान्निवध्यते नित्या' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'तस्मादनादिर्गुरुपूर्वक्रमागता स्मृतिर्निबध्यते' इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। शिष्टपदप्रयोगोऽपि अत्र व्याख्यायां कृत एव। द्वितीयपाठस्तु प्रागुक्तस्वोपज्ञवृत्त्यनुरोधादुपेक्ष्यः। यैरित्यस्याभावे तैरित्यस्य वैयर्थ्यञ्च। तृतीयपाठे तस्यामित्यत्र सत्सप्तमीमाश्रित्यान्वयलाभेन हेतुत्वकल्पनापेक्षया क्लृप्ता पञ्चमी श्रुतिरेव युक्ता। अधिकरणसप्तम्यां तु अर्थासंगतिः। चतुर्थपाठे कर्तृपदलोपः। शिष्टपदाप्रयोगे निबध्यमानायाः स्मृतेः प्रामाण्यालाभश्च। अस्या एव कारिकायाश्चतुर्थे पादे-'साधुत्वविषया स्मृतिः' 'सा साधुविपया स्मृतिः' इति पाठद्वयमुपलभ्यते। तत्र प्रथमपाठेऽर्थसंगतिर्दोषाभावश्चेति संग्राह्यः। द्वितीयपाठे तत्पदवैयर्थ्यम्। किञ्चात्र विषयत्वं विधेयत्वम्। तथा च साधुत्वविशिष्टशब्दविधौ गौरवाद् लोकव्यवहारतः प्राप्तान् शब्दानुद्दिश्य लाघवेन साधुत्वमेव व्याकरणस्मृत्या विधीयते इति प्रथमपाठ एव युक्तः।

अस्या एव कारिकाया व्याख्याने स्वोपज्ञवृत्तौ-'लोकं प्रत्यनभिनिविष्टः' 'लोकं प्रत्यभिनिविष्टः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। कथं नामायं लोकः खेदायासाभ्यां युज्येतेति यो लोकं प्रत्यभिनिवेशस्तच्छून्यस्य व्याकरणं विना शब्दानां स्वरसंस्कारादिनियमव्यवस्थापने उत्साहासंभवेन प्रकृतवाक्यार्थोपपत्तेः। द्वितीयपाठस्तु प्रकृतवाक्यार्थविरोधित्वादुपेक्ष्यः।

अत्रैव वाक्ये-'दुरध्येयम्' 'दुरवधेयम्' 'दुरध्ययनम्' इति पाठत्रयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। व्याकरणज्ञानं विना दुरुच्चारमित्यर्थस्यात्रौचित्यात्। द्वितीयपाठे तु यतो दुरवधेयम् अतो दुरध्येयमित्यर्थे एव पर्यवसानेनापि प्रथमपाठस्यैव युक्तत्वम्। तृतीयपाठे बहुव्रीहावन्यपदार्थप्राधान्यं प्रथमपाठे तु तत्पुरुषे वर्तिपदार्थप्राधान्यमिति आद्य एव पाठः समुचितः।

अत्रैव वाक्ये-'स्वरसंस्कारादिनियमम्' 'स्वरूपसंस्कारादिनियमम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वरस्याधिकस्य संग्राहकत्वात्। द्वितीयपाठे तु स्वरूपपदं व्यर्थम्। संस्कारपदसत्त्वेऽपि शब्दस्वरूपसंस्कारस्य प्रकरणादेव लाभात्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ-'लोके न स्यादिति' 'लोको न स्यादिति' पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव। अत्रैवाग्रिमवाक्ये—'अव्यभिचारालक्षणप्रपञ्चाभ्याम्' 'अव्यभिचारलक्षणप्रपञ्चाभ्याम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकानुरोधात्। एवं हि वृषभदेवटीका-'अव्यभिचारेति। लक्षणस्यान्यथा प्रणयनेऽपि सारभूतप्रतिपाद्यसाधुशब्दरूपाव्यभिचारात्' इति। द्वितीयपाठे तु वृषभदेवटीकाविरोधोऽर्थासंगतिश्च।

अत्रैव वाक्ये-'चाशब्दा च' 'चापशब्दा च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शब्दवती च इति पूर्वग्रन्थस्वारस्यात्। शब्दवती इत्यस्य हि प्रमाणभूतशब्दवती इत्यर्थः। अशब्दा इत्यस्य तु तद्रहिता इत्यर्थः। अपशब्दा च इति पाठे तु अपशब्दरूपा इत्यर्थेऽसाधुत्वम्' अर्थासंगतिश्च। अपगतः प्रमाणभूतः शब्दो यस्या इत्यर्थे तु असंदिग्धप्रतिपत्तये लाघवार्थञ्च अशब्दा इत्येव पाठ्यम्॥ २९॥

**न चागमादृते इति कारिका॥ ३०।**

अस्यास्तुर्ये पादे-'तदप्यागमपूर्वकम्' 'तदप्यागमहेतुकम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। आगमेषु ऋषिज्ञाननिरूपितपूर्वत्वस्यैव संभवात्। तेषु तन्निरूपितहेतुत्वस्य तु न संभवः। आरादुपकारकत्वेन (दूरतः प्रयोजकत्वेन) अन्यथासिद्धत्वात्, अतो हेय एव द्वितीयः पाठः।

अस्या एव, कारिकाया व्याख्याने स्वोपज्ञवृत्तौ-'आगमप्रतिबन्धम्' इति पाठो यद्यपि दृश्यते, तथापि तत्र-'आगमप्रतिबद्धा' इति पाठो युक्तः। स्वभावसंविद्विशेषणत्वेनार्थसंगतेः। यथाश्रुतपाठे तु अर्थासंगतिर्दुष्परिहरा।

अत्रैवाग्रे स्वोपज्ञवृत्तौ-'तर्कातीतः पृथग् विद्याचरणपरिग्रहेषु' 'तर्कातीतपृथग्विद्याचरणपरिग्रहेषु' इति पाठद्वयं दृश्यते पृथग्। तत्राद्यपाठ एव युक्तः। तत्र पाठे तर्कातीत इत्यस्य पुरुषधर्म इत्यनेन प्रधानेन संबन्धात्। द्वितीयपाठे तु तस्य विशेषणसम्बन्ध इत्यनौचित्यम्। अत्रैवानन्तरवाक्ये-'तदर्थज्ञानमार्षमृषीणाम्' 'तदर्थज्ञानमृषीणाम्' इति पाठद्वयमुपलभ्यते। तत्र प्रथमपाठ एव ज्यायान्। तथाहि---अस्मिन् पाठे आर्षम् इत्यस्य वैदिकमित्यर्थः। ऋषिर्वेदस्तस्येदमार्षम्। द्वितीयपाठे तु तदर्थज्ञानस्य वेदप्रभवत्वं न विज्ञाप्यते इति हेयः स पाठः॥ ३०॥

**धर्मस्य चाव्यवच्छिन्ना इति कारिका॥ ३१।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ-'चरणेषु सन्ति साधारणा.' 'चरणेषु साधारणा.' इति पाठद्वयं दृश्यते। तत्रास्तिर्भवन्तीपरः सर्वत्र प्रयुज्यते इति न्यायेनाध्याहारापेक्षया तत्पाठ एव युक्तः। अत्रैव वाक्ये-'प्रसिद्धाः पुरुषहितप्रतिपत्तिमार्गाः' 'पुरुषप्रसिद्धपुरुषगीतप्रतिपत्तिमार्गाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयस्तु अर्थासंगत्या हेयः। अत्रैवाग्रे स्वोपज्ञवृत्तौ-'केचिद् विनिन्दितमपि लोकसमाचारविरुद्धाचरणं प्रतिपद्यन्ते' 'कश्चिन्नियतमपि लोकसमाचाराद् विरुद्धचरणं

प्रतिपद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। दर्शिता च व्याख्याने-नार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु अर्थासंगतिः स्फुटैव ॥ ३१ ॥

**अवस्थादेशकालानामिति कारिका ॥ ३२ ।**

अस्याश्चतुर्थे पादे-'प्रसिद्धिरति दुर्लभा' 'प्रतीतिरतिदुर्लभा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्या व्याख्याने स्वोपज्ञवृत्तौ-'प्रसिद्धिर्दुरवसाना' इति व्याख्यादर्शनात्। अस्या व्याख्याने स्वोपज्ञवृत्तौ-'संबन्धिनः तत्सदृशस्य वा' 'संबन्धिनःसदृशस्य वा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। सादृश्यज्ञानार्थं प्रतियोगिवाचकपदोपन्यासस्यावश्यकत्वात्। अत्रैवाग्रे-'विनिश्चितबलसत्त्वादीनाम्' 'विनिश्चिततत्त्वबलत्वादीनाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु महता क्लेशेनापि नार्थसंगतिः। क्वचित्तु 'विनिश्चितबलसत्त्वानाम्' इति पाठ उपलभ्यते। सोऽपि आदिपदाभावेन प्रज्ञामेधादीनामसंग्राहकत्वेनोपेक्ष्यः। उपेक्षितश्च वृषभदेवटीकायाम्। अत्रैवाग्रे-'अवस्थान्तरेषु पुरुषगम्येषु' 'अवस्थान्तरेषु पुरुषे गम्येषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे-'अपुरुषगम्येषु' इति समस्तपाठस्यैव दर्शनात्। व्यस्तपाठे उपस्थितिभेदेन कार्यकारणभावे गौरवात्। पुरुषाणां प्रत्यक्षविषयेषु इति विवक्षितार्थालाभाच्च। अत्रैवाग्रे 'स्वभावाव्यभिचारिणः' स्वभावव्यभिचारिणः' इतिपाठद्वयं दृश्यते।

तत्राद्यपाठ एव युक्तः। समस्तपाठे विशेष्याप्रतीत्यावाक्यार्थापरिसमाप्तेः। अत्रैव—'स्वभावा व्यभिचारबाह्यानामपि' 'स्वभावाव्यभिचार। बाह्यानामपि' इति पाठद्वयं दृश्यते। तदिदं पाठद्वयमपि न साधु। तथाहि—आद्यपाठे स्वभावानां नोत्तरत्रान्वयः। अयोग्यत्वात्। पूर्वत्र शिकर्मत्वेनान्वयेऽपि तेषु विधेयस्य कस्यचिदप्रतीत्या वाक्यार्थासंगतिः। द्वितीयपाठेऽपि—'स्वभावाव्यभिचार' इत्यत्र व्यासेऽर्थासंगतिः। समासेऽपि अर्थासंगतिः, दृश्यन्ते इत्यत्रानन्वयश्च। दृश्यते इति एकवचनान्तपाठकल्पने तु मानाभावः।

अत्रैवाग्रे—'तथा देशभेदादपि' 'तथा देशभेदा अपि' 'तथा देशभेदोऽपि' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। पूर्वत्र शक्तिव्यभिचारेऽवस्थाभेदस्य हेतुत्वेनोपन्यासेनात्र देशभेदस्य तत्र हेतुत्वोपन्यासस्यैवौचित्यात्। इतरत्र पाठद्वये तु पूर्वत्रोत्तरत्र वा तदन्वययोग्यपदालाभः। अत्रैवाग्रे—'बलाहकाग्निकुण्डादिषु तद्रूपाणामेव' 'बलाहकाग्निकुण्डादिषु भद्रादिषु तद्रूपाणामेव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, उत्तरपाठे 'भद्रादिषु' इत्यस्याधिक्यात्। अनन्वितत्वाच्च। अत्रैवाग्रे—'परोक्षविशेषो' 'परोक्षविशेषैर्' 'परोक्षाविशेषा' 'परोक्षाविशेषाद्' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव वृषभदेवटीकाप्रामाण्यात् साधुः। षष्ठ्यर्थबहुव्रीहावर्थसंगतेश्च। इतरत् पाठत्रयं तु हेयमर्थासंगतेः।

अत्रैवाग्रे—'अर्वाग् दर्शनो' 'अर्वाग् दर्शना' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव

साधुः। प्रपद्यते इति अग्रिमे एकवचनान्ते क्रियापदे एकवचनान्तस्यैव कर्तृपदस्यान्वयसंभवात्। अत्रैव–'दर्शनमात्रेणागम्यम्' 'दर्शनमात्रेण गम्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव समुचितः। अर्थसंगतेः। द्वितीयपाठे तु—'आगमेनैव प्रपद्यते' इति पदान्तरविरोधः स्पष्ट एव। अत्रैवाग्रे-'कूपजलादीनाम्' 'रूपज्वलनादीनाम्' 'रूपजलादीनाम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयतृतीयपाठयोरर्थासंगतिस्तु स्फुटैव। आदिशब्दात् नटाकादीनां ग्रहणं करोतीति टीकादर्शनेन आद्यपाठस्यैव साधुत्वप्रतीतेश्च।

अत्रैवाग्रे—'प्राकृतमप्राकृतगम्यम्' इति 'आप्रकृतं प्राकृतगम्यम्' इति, प्राकृतमित्येतद्रहितं केवलम् 'अप्राकृतगम्यम्' इति च पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। प्राकृतमित्यस्य हि प्रकृतेरिदमित्यर्थः। अप्राकृतगम्यमित्यस्य तु—अपामरगम्यम् इत्यर्थः। द्वितीयपाठे तु नार्थसंगतिः। प्राकृतगम्यस्यागमचक्षुरन्तरेण प्रत्यक्षत्वात्। आप्रकृतपदार्थस्य च न कथमपि प्रकृतवाक्यार्थे उपयोगः। तृतीयपाठे तु प्राकृतपदाभावेन नावस्थानविशेषस्य स्फुटार्थावबोधः। अत्रैव वाक्ये—'आगमचक्षुरन्तेणाप्रत्यक्षम्' 'आगमचक्षुरन्तरेण प्रत्यक्षम्' इति पाठद्वयं दृश्यते। तत्र प्रथम एव पाठः साधुः। अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। अप्राकृतगम्यस्य सूक्ष्मस्यावस्थाविशेषस्यागमचक्षुरन्तरेण प्रत्यक्षत्वायोगात्।

अत्रैव वाक्ये—'अनुमानमात्रेणानिश्चित्य' 'अनुमानमात्रेण निश्चित्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। कस्यचिदर्थस्यानुमानमात्रेण निश्चयोत्तरं सिद्धान्तविधायकः अभावेन भाषणायोगात्॥ ३२॥

**निर्ज्ञातशक्तेर्द्रव्यस्येति कारिका॥ ३३।**

तत्र 'विज्ञातशक्तेर्द्रव्यस्येत्यपि क्वचित् पाठः। तत्राद्यपाठ एव युक्तः। 'निर्ज्ञातशक्तेरिति निर्ज्ञातसामर्थ्यस्य' इति वृषभदेवटीकादर्शनेनाद्यस्यैव पाठस्य सांप्रदायिकत्वावगमात्। अस्या एव कारिकायास्तृतीये पादे—'विशिष्टद्रव्यसंबन्धे' इति विशिष्टधर्मिसंबन्धे' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः। गुणक्रिययोरपि धर्मित्वसंभवात्। तयोरर्थक्रियाशक्तेः अनिबन्धकत्वादर्शनात्। टीकायां द्रव्यस्यैवार्थक्रियां प्रति प्रतिबन्धकत्वेनोदाहृतत्वाच्च। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अग्न्यादीनां काष्ठादिविकारोत्पादने' 'अग्न्यादीनां विकारोत्पादने' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विकारस्य विकार्यविषये निराकाङ्क्षत्वेन काष्ठादिपदोपादानस्यात्यन्तमावश्यकत्वात्।

अत्रैव वाक्ये—'सामर्थ्यं प्रतिषिध्यते' 'सामर्थ्यं प्रतिबध्यते' 'सामर्थ्यं प्रतिपद्यते' इति पाठत्रयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। कारिकायामस्य पाठस्य निर्विवादत्वात्। इतरस्य पाठद्वयस्य एतत्पर्यायत्वाभावाच्च। इतरस्मिन् पाठद्वये तु नार्थसंगतिः। नहि अभ्रपटलादिषु अग्न्यादीनां दाहशक्तिः प्रतिषिध्यते, अन्यत्र तेषामेव

दाहकत्वात्, किन्तु प्रतिबध्यते । प्रतिपद्यते इति पाठेऽपि नार्थसंगतिः । अग्न्यादीनाम-भ्रपटलादिषु दाहकत्वादर्शनात् ॥ ३३ ॥

**यत्नेनानुमितोऽप्यर्थ इति कारिका ॥ ३४ ।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ-'अन्यद् द्रव्यं गुणेभ्यो व्यपदेशात्' 'अन्यद् द्रव्यं गुणेभ्यो व्यपदिश्यते' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः । अनुमानरूपतयाऽर्थ-संगतेः । दर्शिता च तथाऽर्थसंगतिरम्बाकर्त्र्यामिति सा तत एवावधेया । द्वितीयपाठे तु नानुमानरूपता सिध्यति इति न पूर्वापरसंगतिरत्र पाठे इति हेयोऽयं पाठः ।

अत्रैवाग्रे-'विशेष्यते वा चन्दनेन गन्धः' 'विशेष्यते चन्दनेन गन्धः' इति पाठ-द्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । टीकाप्रामाण्यात् । अर्थसंगतेश्च । अत्रैव वाक्ये-'न रूपादि' 'न रूपादिभिः' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । विधौ विशेषणे तृतीयादर्शनेन निषेधेऽपि तृतीयाया एवौचित्यात् ।

अत्रैवाग्रे—'विशिष्टाविशिष्टाभिधेयनिबन्धनत्वात्' 'विशिष्टोऽपि विशिष्टाभिधेय-निबन्धनत्वात्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु न कथमप्यर्थसंगतिः । अत्रैव—'शब्दानाम्' इति, 'कथम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । द्वितीयपाठे तु न कथमप्यर्थसंगतिः । अत्रैवाग्रिमवाक्ये—'अर्थवद्गन्धादीनाम्' 'अर्थवत्संबन्धादी-नाम्' इति पाठद्वयं दृश्यते । तत्र पूर्वापरवाक्यार्थालोचनयाऽऽद्यपाठ एव प्रामाणिकः प्रतीयते । अर्थसंगतेः । द्वितीये तु नार्थसंगतिरिति अम्बाकर्त्रीदर्शनेनावसेयम् । अत्रै-वाग्रे—'पदसमूहैकदेशभावेऽपि' 'पदानां समूहैकदेशभावेऽपि' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अत्र पाठे हि दर्शितार्थसंगतिरम्बाकर्त्र्याम् । पदार्थैकदेशेऽन्वया-भावश्च । द्वितीयपाठे तु एतद्द्वयाभावः ।

अत्रैवाग्रे—'श्रुतिविशेषसंनिधानासंनिधानकृतस्तु' इति, 'श्रुतिविशेषसन्निधान-कृतस्तु' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । व्याख्यानेनोपपादितश्चाम्बा-कर्त्र्याम् । द्वितीयपाठे तु नाम्बाकर्त्रीविवृतविवक्षितार्थसिद्धिः ।

अत्रैवाग्रे—'क्रियाविशेषेषु प्रतिनियतानि' 'क्रियाविशेषप्रतिनियतानि' इति पाठद्वयं दृश्यते । तत्राद्ये व्यस्तपाठे उद्देश्यविधेयभावसिद्धिर्न तु समस्ते द्वितीयपाठे, वृत्तावेकार्थीभावाभ्युपगमेन विशिष्टार्थोपस्थितेरिति आद्यपाठ एव युक्तः ।

अत्रैव वाक्ये—'कैश्चित् कथञ्चिदुपादीयन्ते' 'कैश्चिदुपादीयन्ते' इति पाठद्वयं दृश्यते । तत्र कथञ्चित्पदघटितः पाठ एव युक्तः । अत्र पाठेऽभिप्रेतार्थसिद्धेः । दर्शितश्च कथञ्चित्पदस्यार्थं उदाहरणोपन्यासमुखेनाम्बाकर्त्र्याम् ॥ ३४ ॥

**परेषामसमाख्येयमिति कारिका ॥ ३५ ।**

अस्यास्तृतीये पादे—'मणिरूप्यादिविज्ञानम्' 'मणिरूप्यादिषु ज्ञानम्' इति

पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विज्ञानपदस्य विशेषधर्मप्रकारेण ज्ञानपरत्वात्, तस्यैवार्थस्यात्रौचित्येन विवक्षितत्वात्। ज्ञानपदस्य तु सामान्यरूपेण ज्ञानमर्थः प्रसिद्धः, यः सर्वज्ञः सर्वविदित्यादिश्रुतिषु। किञ्च ज्ञानपदस्य परोक्षज्ञानम्, विज्ञानपदस्य तु अनुभवरूपमपरोक्षज्ञानमर्थः। प्रसिद्धश्चायमर्थः, ज्ञानविज्ञाननाशनमित्यत्र गीतायाम्। अतोऽपि अत्र विज्ञानपदपाठ एव युक्तः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अभियुक्ताः प्रणिधानवन्तोऽपि' इति, अभियुक्तप्रणिधानवन्तोऽपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। अत्राभियुक्ता इत्यस्य तत्परा इत्यर्थः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव। किञ्चात्र पाठे अपिशब्देन नाभियुक्तसमुच्चयः संभवति इति॥ ३५॥

**प्रत्यक्षमनुमानञ्चेति कारिका॥ ३६।**

अस्यास्तृतीये पादे—'पितृरक्षःपिशाचानाम्'' रक्षःपितृपिशाचानाम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। पिशब्दघटितत्वेन द्वयोरपि पितृपिशाचपदयोः सहोच्चारण एवौचित्यात्। रक्षःपिशाचापेक्षया पितृणामभ्यर्हितत्वेन सर्वतः पूर्वनिपातेन प्रथमपाठस्तु न युक्तः। पितरश्च पिशाचाश्चेति द्वन्द्वे कृते रक्षांसि च पितृपिशाचाश्चेति द्वन्द्वे रक्षःपदस्य लघ्वक्षरत्वेन पूर्वनिपातसंभवात्। अस्या एव कारिकायाश्चतुर्थे पादे—'कर्मजा एव सिद्धयः' 'कर्मान्ता एव सिद्धयः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शक्त्या विवक्षितार्थप्रतिपत्तेः। द्वितीयपाठे तु अन्तपदस्य परिणामे लक्षणा वाच्येति सैव दोषः, निरूढलक्षणां विहायान्यत्र प्रयोजनाभावे लक्षणाया असम्भवाच्च।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'घनसंनिविष्टावयवानाम्' 'संनिविष्टावयवानाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वार्थे परिपूर्णत्वेनार्थपरिसमाप्तेः। द्वितीयपाठे तु अस्ति उत्तरपदार्थानामालोचनया घनपदार्थापेक्षा इति साकाङ्क्षत्वेनार्थापरिसमाप्तिः॥ ३६॥

**आविर्भूतप्रकाशानाम् इति कारिका॥ ३७।**

अस्या द्वितीये पादे—'अनुपप्लुतचेतसाम्' 'अनुपद्रुतचेतसाम्' 'अनुपस्कृतचेतसाम्' इति पाठत्रयं दृश्यते। 'अनुपप्लवचेतसाम्' इति चतुर्थोऽपि पाठो दृश्यते। तत्राद्यपाठ एव युक्तः। अभिप्रेतार्थोपपत्तेः। तथाहि—येषां चेतांसि स्वाश्रितकिल्विषजन्यदुःखसंतापतप्तानि द्रुतानि स्वेषु उपप्लवमानैर्नानाविधैः किल्विषैर्नाक्रान्तानि तेषामिति अनुपप्लुतचेतसामित्यस्यार्थः। अनुपद्रुतचेतसाम् इत्यस्य तु—येषां चेतांसि स्वसमीपस्थितनानाविधकिल्विषजन्यदुःखसंतापेन न द्रुतानि तेषामित्यर्थः। तत्र प्रथमपाठे चेतसोऽत्यन्तं द्रवीभावः, तत्र किल्विषाणामुपप्लवमानत्वञ्च प्रतीयते। द्वितीयपाठे तु चेतसो द्रुतत्वमात्रं प्रतीयते न तु तत्र किल्विषाणामुपप्लवनम् इति रीत्या प्रथमपाठेऽभिप्रेतार्थाधिक्यसत्त्वेन स एव पाठो युक्तः। तृतीयपाठस्तु प्रकृतार्थविरोधितयोपेक्ष्यः।

ऋषीणां तपसा उपस्कृतचेतस्कत्वात् । यत उपस्कारो नाम संस्कारविशेष: शोधनाख्य: । चतुर्थपाठोऽपि न युक्त: । प्रथमपाठेनञ्-तत्पुरुषे वर्तिपदार्थप्राधान्यम्, चतुर्थपाठे तु अनुपप्लवपदे बहुव्रीहिसमासेऽन्यपदार्थप्राधान्यमिति रीत्याऽस्य पाठस्य निकृष्टत्वात् ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ— 'अदृष्टाप्रतिनियतकारणशक्तिपरिग्रहम्' अदृष्टाप्रतिनियतकारकशक्तिपरिग्रहम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्त: । अत्र कार्यस्य विशेष्यत्वेन तस्य च कारणांशे एव नित्यसाकाङ्क्षत्वेन कारणपदोपादानस्यैव युक्तत्वात् । क्रियायास्तु कारकापेक्षा तद्द्वारेण चकार्यस्य तदपेक्षा इति स्थिते: ।

अत्रैवाग्रिमवाक्ये—'विशिष्टव्यक्तिरूपतिरोभावाद्' 'विशिष्टशक्तिरूपतिरोभावाद्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्त: । अर्थसंगते: । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु पक्षान्तरे ( सांख्यादिसम्मते सत्कार्यवादे ) विशिष्टशक्तिरूपसत्त्वेन तत्तिरोभावकथनासंगति: ।

अत्रैव—'व्यवहारं प्रति' 'व्यवहार्यं प्रति' इति पाठद्वयं दृश्यते । तत्राद्यपाठेऽर्थसंगत्याऽम्बाकर्त्रीदर्शितया साधुत्वम् । द्वितीयपाठे तु अर्थासंगतिर्निराबाधैवेति विभावनीयं विद्वद्भि: ।

अत्रैवाग्रे—'प्रत्यक्षमिव स्वासुख्यातिषु' 'प्रत्यक्षमिवावस्थासु ख्यातिषु' इति पाठद्वयं दृश्यते । तत्र द्वितीयोऽपपाठ:, अर्थासंगते: । प्रथमस्तु अम्बाकर्त्रीदर्शितयाऽर्थसंगत्या युक्त: । अत्रैव—'संक्रान्ताकारपरिग्रहम्' 'संक्रान्ता: परिग्रहम्' इति पाठद्वयं दृश्यते । तत्र द्वितीय: पाठोऽनर्थकोऽपपाठश्च । प्रथमस्तु युक्तोऽर्थसंगते: । अत्रैव—'संक्रान्ताकारपरिग्रहम्' 'संक्रान्ताकारपरिगृहीतम्' इत्यपि पाठद्वयं दृश्यते । द्वितीयपाठ एवायुक्त: । अर्थासंगते: । प्रथमपाठस्तु अर्थसंगतिमाश्रित्य व्याख्यातोऽम्बाकर्त्र्याम् ॥ ३७ ॥

## अतीन्द्रियानसंवेद्यान् इति कारिका ॥ ३८ ।

अस्याश्चतुर्थे पादे—'नानुमानेन बाध्यते' इति—'स्फोटसिद्धौ तु एकविंशश्लोकव्याख्यायाम्—'कोऽतिक्रमितुमर्हति' इत्येवं पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्त: । तर्काप्रतिष्ठितत्वे द्वितीयपाठस्य अनुपयोगात् । अस्या व्याख्याने स्वोपज्ञवृत्तौ— 'अभिजातिनिमित्तनिबन्धनमनभिव्यक्तम्' 'अभिज्ञानिमित्तनिषेधनमनभिव्यक्तम्' 'अभिजातिनिबन्धनमनभिव्यक्तम्' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तोऽर्थसंगते: । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठस्तु अर्थासंगत्याऽपपाठ एव । तृतीयपाठोऽपि पदन्यूनत्वप्रयुक्तया विवक्षितार्थासिद्धयाऽयुक्त एव ।

अत्रैवाग्रे—'इन्द्रियैरग्राह्यान्' इन्द्रियैरर्थान् ग्राह्यान्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्त: । अत्रत्य-पूर्वग्रन्थे पर्यालोचनयाऽस्य पाठस्यैवौचित्यप्रतीते: । द्वितीयपाठे तु नार्थसंगति: । प्रागुक्तानामर्थानामिन्द्रियग्राह्यत्वाभावात् । अत्रैव

वाक्ये—'प्रत्यात्ममसंवेद्यान्' 'प्रत्याख्यमसंवेद्यान्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसगतेः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव।

अत्रैवाग्रे—'व्यभिचारिभिरनुमानैः' 'अनुमानैः शिष्टा एव व्यवहारैः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठे कथमप्यर्थसंगतत्वभावेन प्रथमपाठ एव युक्तोऽर्थसंगतेः। अत्रैव—'अनुमानैरपाकर्तुमशक्यम्' 'अनुमानैः स्वीकर्तुमशक्यम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठो न युक्तः। नानुमानेन वाध्यते इति प्रकृतकारिकातृतीयपादेन व्याख्येयेन विरोधात्। अतस्तदविरोधात् प्रथमपाठ एव युक्तः। अत्रैवाग्रिमवाक्ये—'रूपग्रहणम्' रूपादिग्रहणम्' इति पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तोऽर्थसंगतेः। द्वितीयपाठे तु पदवैयर्थ्यमिति स हेयः॥ ३८॥

## यो यस्य स्वमिव ज्ञानमिति कारिका॥ ३९।

अस्या द्वितीयपादे—'नातिशङ्कते' 'नाभिशङ्कते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'अत्यन्तमनतिशङ्कनीयम्' इति व्याख्यादर्शनात्। वृषभदेवटीकायाञ्च—'नातिशङ्कते' इति पाठस्यैव दर्शनाच्च। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'एषाञ्चादृष्टमपि' 'एषाञ्च दृष्टमपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शिलाप्लवनादिषु दर्शनकर्मत्वाभावस्यैव संभवात्। अत्रैवाग्रे—'विनापि शास्त्रोपदेशेन' 'विना शास्त्रोपदेशेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव टीकाकृत्संमतः। स एव वक्ष्यमाणश्लोकार्थेन संगच्छतेऽपि इति स एव साधुः॥ ३९॥

## इदं पुण्यमिदं पापमिति कारिका॥ ४०।

अस्याश्चतुर्थे पादे—'अल्पं शास्त्रप्रयोजनम्' 'समं शास्त्रप्रयोजनम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठस्यैव कुमारिलजयन्ताभ्यामुपादानादर्थसंगतेश्च स एव युक्तः। दर्शिता चात्र पाठेऽर्थसंगतिरस्माकमस्या व्याख्याने। द्वितीयपाठस्तु—'तस्मात् प्रत्यक्षमार्षञ्च ज्ञानं सत्यपि विरोधे बाधकमनुमानस्य' इति स्वोपज्ञवृत्तिस्थोपसंहारवचनेन विरुध्यते। तेन शास्त्रप्रयोजनाभावस्यैव प्रतिपिपादयिषितत्वाल्लाभात्। अस्या व्याख्याने स्वोपज्ञवृत्तौ—'सत्यपि विरोधे' 'सत्यविरोधे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विरोधे सत्येव बाधकत्वस्य न्यायप्राप्तत्वात्। अत्रैव—'बाधकमनुमानस्य' 'साधकमनुमानस्य' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठो न युक्तः। आर्षज्ञानस्य सर्वतो बलवत्त्वेनाङ्गत्वाभावेनानुमानासाधकत्वात्। तस्मादाद्यपाठ एव युक्तः। अर्थसंगतेः॥ ४०॥

## 'चैतन्यमिव यश्चायमविच्छेदेन' इति कारिका॥ ४१।

अत्र—'चैतन्यविषयश्चायमविच्छेदेन' 'चैतन्यमिव पर्यायविच्छेदेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः। सर्वविषयकस्यागमस्याविच्छेदेन वर्तमानत्वात्। तृतीयपाठे तु अर्थासंगतिः सुदृढा। छन्ददोषश्चाक्षर-

न्यूनत्वेन दुष्परिहरः । अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'एवमादिप्रत्ययानुगतम्' 'एवमादिप्रत्ययरूपानुगतम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठे रूपपदप्रयोगस्य वैयर्थ्यात् ।

अत्रैवाग्रे—'तमित्थंभूतम्' 'कथमित्थंभूतम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । द्वितीयपाठस्तु न युक्तः । विवक्षितार्थविरुद्धार्थप्रत्यायकत्वात् ।

अत्रैवाग्रे—'कैश्चिन्न्याय्यात्' 'कश्चिन्न्याय्यात्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः। आगमविरोधिनां हेतुवादानामल्पत्वस्यैव सत्त्वात् । द्वितीयपाठस्तु न युक्तः। इत्थंभूतमागममुपासीनः सर्वोऽपि न्याय्याद् वर्त्मनो नापनीयते इत्यर्थस्यैव औचित्येन प्रकृते विवक्षितत्वात् ।

अत्रैवाग्रे—'तत्रस्थश्चानिन्द्यो लोके भवति' 'तत्रस्थश्चानियोगो लोके भवति' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः, विवक्षितार्थस्य स्फुटं प्रतिपत्तेश्च । द्वितीयपाठे तु—कथमिदमकार्यं त्वया कृतम् इत्यादि-प्रश्नानामविषयो भवति इत्यर्थेन अनिन्द्यत्वस्यार्थात् प्रतीतावपि न स्फुटा प्रतिपत्तिरिति स पाठ उपेक्ष्यः ॥४१॥

## हस्तस्पर्शादिवान्धेन इति कारिका ॥ ४२ ।

अत्र—'हस्तस्पर्शादिवन्धेन' 'हस्तस्पर्शादिबाधेन' 'हस्तस्पर्शादिनान्धेन' इति पाठत्रयमपि अन्यद् दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । अन्यस्मिन् पाठत्रये तदर्थस्य प्रकृतवाक्यार्थेऽसमन्वयात् । अस्या एव द्वितीये पादे—'विषमे पथि धावता' 'विषमेऽप्यभिधावता' 'विषमे पथि धावताम्' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । द्वितीयपाठे तु अपिशब्दो व्यर्थः । तृतीयपाठे तु षष्ठ्यन्तस्य प्रकृतवाक्यार्थेऽनन्वयः । अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'त्वरया परिपतन्' 'तरसा परिपतन्' । इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । त्वरया परिपतनस्यैव विनाशलामहेतुत्वात् । तरसा परिपतनस्य तदहेतुत्वेन द्वितीयपाठो हेयः । अत्रैव वाक्ये—'हस्तस्पर्शेनावगम्यं, 'हस्तस्पर्शनावगम्यम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । 'हस्तस्य स्पर्शाद् विषमे पथि धावता इति कारिकावाक्यदर्शनेनाद्यपाठस्यैवौचित्यप्रतीतेः । द्वितीयपाठस्तु न युक्तः । हस्तस्पर्शनावगमार्हस्यापि मार्गैकदेशस्य हस्तस्पर्शेनावगमं विनापि समतिक्रमसंभवेन विवक्षितार्थालाभात् । 'तथैव प्रतिपद्यमानः' इत्युत्तरग्रन्थाननुगुणत्वाच्च ॥ ४२ ॥

## तस्मादकृतकं शास्त्रमिति कारिका ॥ ४३ ।

अस्या एव द्वितीये पादे—'स्मृतिश्च सनिबन्धनाम्' 'स्मृतिं तां सनिबन्धनाम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । पूर्वापरपदार्थसंगतेः । द्वितीयपाठस्तु न युक्तः । पूर्वत्र यत्पदाभावेन तत्पदोपन्यासस्यानौचित्यात् । अस्या एव चतुर्थे पादे—'शब्दानामनुशासनम्' 'साधुत्वविषया स्मृतिः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव

युक्तः। एतद्व्याख्याने स्वोपज्ञवृत्तौ—'इदमाचार्यैः शब्दानुशासनं प्रक्रान्तमनुगम्यते' इति व्याख्यायां शब्दानुशासनपदस्यैव पाठात्। द्वितीयपाठस्तु न युक्तः। अस्याः स्मृतेरक्षरसमाम्नायमूलकत्वेन सनिबन्धनस्मृतिमूलकत्वाभावात्।

**तदुक्तं शब्देन्दुशेखरे नागेशेन -**

'श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्' इति। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अविच्छिन्नपारम्पर्येण' 'अविच्छिन्नपारम्पर्यम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। उत्तरपदार्थेऽभेदान्वयसंभवात्। 'संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम्' इति न्यायात्। प्रथमपाठस्तु न युक्तः। विशिष्टपदाध्याहारे प्रकृत्यादित्वकल्पनया वैशिष्ट्यार्थकतृतीयाकल्पने गौरवात्, प्रागुक्तन्यायविरोधाच्च।

अत्रैव—'स्वचरणसमाचारम्' 'स्वस्मरणसमाचारम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। तदभावाच्च द्वितीयपाठो न युक्तः। अत्रैवाग्रे—'दृष्टशब्दशक्तिस्वरूपव्यभिचाराणि' 'दृष्टशब्दस्वरूपव्यभिचाराणि' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। उदाहृतश्च तत्र काले काले शब्दस्वरूपव्यभिचारः। न्याङ्कवम्, नैयङ्कवम् इति। प्रथमपाठस्तु वृषभदेवटीकायां न व्याख्यातः, न च तदुदाहरणं प्रदर्शितम् इति हेयः सः।

अत्रैव वाक्ये—'प्रक्रान्तम्' 'प्रस्तुतम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। टीकायामस्यैव पाठस्य व्याख्यानेन ममादृतत्वात्। किञ्च प्रथमपाठे प्रक्रान्तशब्दस्य प्रारब्धार्थे योगरूढिः। प्रथमः क्रमः प्रक्रमस्तद्वत् इत्यवयवार्थसंभवात्। द्वितीयपाठे तु प्रस्तुतशब्दस्य तत्र रूढिर्वक्तव्या। अवयवार्थाननुगमात्। योगरूढिसंभवे च रूढिपरिग्रहोऽन्याय्यः। अवयवार्थपरिग्रहसंभवे तत्परित्यागस्यानुचितत्वात्। प्रस्तुतपदस्य प्रारब्धे लक्षणायान्तु सैव दोषः॥ ४३॥

**द्वावुपादानशब्देषु इति कारिका॥ ४४।**

अस्याश्चतुर्थे पादे—'प्रयुज्यते' 'नियुज्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। तथाहि—नियोगस्य अवधारणरूपस्य द्वितीयप्रेरणारूपस्य वाऽत्र परिग्रहेऽर्थासंगतिः स्पष्टैव। किञ्चात्र स्वोपज्ञवृत्तौ—'अर्थेषु प्रयुज्यते' इत्येव पाठ उपलभ्यते इत्यतोऽपि स पाठो हेयः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ धृते संग्रहवाक्ये—

'वाचक उपादानः स्वरूपवानव्युत्पत्तिपक्षे' 'वाचक उपादानस्वरूपवानव्युत्पत्तिपक्षे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चात्रार्थसंगतिरम्बाकर्त्र्याम्। अयमेव च पाठः प्रतीकरूपेण धृतो वृषभदेवटीकायामित्यतोऽपि स एव पाठो ग्राह्यः। यद्यप्यत्र—'अव्युत्पत्तिपक्षे' इति पाठः क्वचित् पुस्तके न दृश्यते। तथापि अस्य पाठ एव युक्तः। 'व्युत्पत्तिपक्षे तु' इत्यग्रिमग्रन्थानुगुण्यात्।

अत्रैव—'त्वर्थविहितं समाश्रितम्' 'त्वर्थाश्रितम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। तथाहि—अर्थेऽवहितम्—अवधानेन-अप्रमादेन-अव्यभिचारेण स्थितम्। यावद्वस्तुसत्ता तावत् स्थितमिति यावत्। एतदेव च समाश्रितपदेन व्याख्यातम्। सम्यक्त्वञ्चाव्यभिचारेण स्थितिरेवेति। द्वितीयपाठे तु समोऽप्रयोगेण न तदर्थलाभ इति न्यूनार्थकत्वेन उपेक्ष्यः स पाठः। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'कारणव्यापारात्तु' इत्यतः प्राक्—'अपरोऽर्थे' इति प्रतीकं क्वचिद् दृश्यते क्वचिन्न। तथापि प्रतीकोपन्यास एव युक्तः। सर्वटीकाकारशैलीसिद्धत्वात्। व्याख्यानव्याख्येयभावस्य स्फुटतया प्रतिपत्तेश्च। अत्रैव—'कारणव्यापारात्तु' 'कारकव्यापारात्तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शब्दस्याक्रियात्वेन कारकव्यापारानपेक्षत्वात्, कारणव्यापारसापेक्षत्वाच्च।

अत्रैव वाक्ये—'प्रतिलब्धविक्रियाविशेषः' 'प्रतिबन्धविक्रियाविशेषः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अत्रैव वाक्ये—'प्रत्याय्यपरतन्त्रोऽर्थेषु' 'प्रत्याय्यपरतन्त्रेष्वर्थेषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रथमान्तस्य शब्दविशेषणत्वेनार्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। तथाहि—प्रत्याय्या अर्था न च तत्पारतन्त्र्यं तेषु युज्यते दृश्यते वा।

अत्रैवाग्रे—'क्रमरूपप्रत्ययस्तमयेनैव' 'क्रमरूपप्रत्ययसमयेनैव' इति पाठद्वयम्, 'प्रतिपत्तिषु' 'प्रतिपत्तृषु' इति च पाठद्वयं दृश्यते। तत्र प्रथमे पाठद्वये प्रथमः पाठ एव, द्वितीये तु पाठद्वये द्वितीयः पाठ एव युक्तः। अर्थसंगतेः। दर्शिता च तत्र तत्र पाठेऽर्थसंगतिरम्बाकर्त्र्याम्। तदितरपाठद्वये तु न कथमप्यर्थसंगतिरित्यवधाय विज्ञेयम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'क्रमवानक्रमनिमित्तम्' 'क्रमवानक्रमोपायभूतत्वान्निमित्तम्' 'क्रमवानक्रमकं निमित्तम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न साधुता। अक्रमोपायभूतत्वाद्—अक्रमनिमित्तत्वाद् अक्रमस्य निमित्तमित्यर्थासंगतेः। एकस्मिन् हेतुहेतुमद्भावासंभवात्। तृतीयपाठे तु अर्थासंगतिरतिस्फुटा दुष्परिहरा च।

अत्रैवाग्रिमवाक्ये—'अक्रमे तु वागात्मनि' 'अक्रमेऽन्तरात्मनि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। दर्शिता चास्य युक्तताऽम्बाकर्त्र्यां सम्यग् व्याख्यानेन। द्वितीयपाठे तु न कथमप्यर्थसंगतिर्विभाव्यते ॥ ४४ ॥

**आत्मभेदस्तयोः केचिदिति कारिका ॥ ४५ ।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'वाक्यस्वरूपानुकरणे तु प्रथमा' 'वाक्यस्वरूपानुकारेषु प्रथमा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। एकस्यैव वाक्यस्वरूपानुकरणस्यात्र सत्त्वेन सप्तम्येकवचनान्तप्रयोगस्यैव युक्तत्वात्।

अत्रैवाग्रिमवाक्ये—'पक्षान्तरे तु एकस्यैव आत्मनः' 'पक्षान्तरे तु आत्मनः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'बुद्ध्यवच्छेदान्नानात्वकल्पना' इत्युप-

संहारे दर्शनेनात्र एकस्यैव पाठस्यौचित्यप्रतीतेः। अत्रैव वाक्ये—'शक्तिद्वयप्रविभागरूप-परिग्रहकृताद् बुद्ध्यवच्छेदाद्' 'शक्तिद्वयप्रविभागरूपपरिग्रहकृताद् बुद्ध्यवच्छेदाद्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बा-कर्त्र्यामत्र। यद्यपि द्वितीयपाठेऽपि अर्थसंगतिर्दर्शिता वृषभदेवटीकायाम्, तथापि तत्र पाठे निमित्तत्वप्रत्यायकत्वरूपशक्तिद्वयस्यालाभादर्थन्यूनता तत्र पाठे इति प्रथमपाठ एवादर्तव्यः। अत्रैव वाक्ये—'बुद्ध्यवच्छेदाद्' 'शब्दबुद्ध्यवच्छेदाद्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'एकस्यैवात्मन' इति प्रागुपात्तस्य विषयस्य बुद्धि-पदार्थेऽवश्यं सम्बन्धे आश्रयितव्ये शब्दपदोपादानस्य वैयर्थ्यात्, विरुद्धमतिकृत्त्वाच्च।

अत्रैवाग्रिमवाक्ये—'शब्दाकृतिव्यक्तिभेदाभेदव्यपाश्रयः' शब्दाकृतिभेदाभेद-व्यपाश्रयः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकायामम्बा-कर्त्र्याञ्च तस्यैव समाश्रयणेन व्याख्यानात्। द्वितीयपाठे तु अर्थासंगतिः सुदृढेति सुधी-भिरवधानेनावधारणीयम्॥ ४५॥

## अरणिस्थं यथा ज्योतिरिति कारिका॥ ४६।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'यथान्तरेण' 'यथोत्तरेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठो न युक्तः। अर्थासंगतेः। द्वितीयपाठे तु साध्वी अर्थसंगतिरम्बा-कर्त्रीदर्शनेन प्रतीयते। अत्रैव वाक्ये—'स्वपररूपप्रतिपत्तिकारणत्वम्' 'स्वरूपप्रतिपत्ति-कारणत्वम्' 'पररूपप्रतिपत्तिकारणत्वम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः,। वृषभदेवटीकोपात्तत्वात्, अर्थसंगतेश्च। द्वितीयतृतीयपाठयोस्तु अर्थन्यूनतेति तावुपेक्ष्यौ।

अत्रैवाग्रिमवाक्ये—'शब्दभेदभावनानुगते' 'शब्दभेदबीजानुगते' 'दृश्यशब्दभेद-भावनानुगते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। भावनारूपस्य बीजस्य स्वरूपतः शब्देनोपादाने वाक्यार्थस्य स्फुटं प्रतिपत्तेः। बीजशब्देन सामान्यत उपादाने तु बीजविशेषस्य भावनारूपस्य स्वरूपावधारणार्थं हेतत्वन्तरापेक्षायां प्रतिपत्तिगौर-वात्। तृतीयपाठे तु दृश्यपदं व्यर्थम्। दृश्यशब्दविषयाणामेव भावनानां संभवात्। दर्शनस्य भावनाजनकत्वादिति।

अत्रैवाग्रिमवाक्ये—'व्यवच्छिद्यमानोद्देशः पौर्वापर्यवान्' 'व्यवच्छिद्यमानो-द्देशपौर्वापर्यवान्' 'व्यच्छिन्नोद्देशः पौर्वापर्यवान्' इति पाठत्रयं दृश्यते। तत्र यद्यपि प्रथमं पाठद्वयं वृषभदेवटीकायामुपलभ्यते, व्याख्यातञ्च। तथापि द्वितीयपाठ एव युक्तः। अक्रमे शब्दे स्वतः पौर्वापर्यरूपस्य क्रमस्याभावात्। अतो व्यवच्छिद्यमाना-नामुद्देशानां यत् पौर्वापर्यं तस्यैव तत्रारोप इत्येव सम्यक्। अतो द्वितीयपाठस्यैवौ-चित्यम्। तृतीयपाठस्तु न युक्तः। अग्रेऽत्रैव उपलभ्यमान इत्यस्य दर्शनेन व्यवच्छिद्यमानपदप्रयोगस्यैवौचित्यप्रतीतेः। किञ्चायं पाठो न टीकायां व्याख्यानेन समादृत इत्यतोऽप्ययुक्तः॥ ४६॥

## वितर्कितः पुरा बुद्ध्या इति कारिका ॥ ४७ ।

अस्यास्तृतीये पादे—'करणेभ्यः' 'कारणेभ्यः' विवृत्तेन' 'निवृत्तेन' इति पाठभेदा उपलभ्यन्ते। तत्र प्रथमे पाठद्वये आद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'करणेभ्यो विवृत्तेन' इति प्रतीकस्योपलभ्यमानत्वात्। 'करणव्यापारेण प्रचीयमाने' इति व्याख्यावाक्यान्तर्दर्शनाच्च। पुण्यराजीयेऽपि—'करणेभ्यः' इति प्रतीकमुपादाय 'स्थानकरणजेन ध्वनिना' इति व्याख्यादर्शनाच्च। प्रागुक्तस्वोपज्ञवृत्तिधृतप्रतीक-दर्शनादेव च 'निवृत्तेन' इति पाठस्यायुक्तता प्रतीयते। विवर्तमानमिव गृह्यते इति स्वोपज्ञवृत्तौ तद्व्याख्यादर्शनादपि विवृत्तन इति पाठस्यैव युक्तता प्रतीयते। अस्या एव कारिकायाश्चतुर्थे पादे—'सोऽनुगृह्यते' 'सोऽनुगम्यते' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। 'विवर्तमानमिव गृह्यते' 'अनुगृह्यते अभिव्यज्यते' इति यथाक्रमं स्वोपज्ञवृत्तौ पुण्यराजीये च व्याख्यादर्शनात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'इह शब्दार्थयोः सोऽयमिति संबन्धानुगमे' 'इह शब्दार्थभेदेषु न संबन्धानुगमं' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बा-कर्त्र्याम्। द्वितीयपाठे तु सुदृढाऽर्थासंगतिः। अत्रैवाग्रिमवाक्ये—'उपयोगेनानुप्रवेशं लभते' 'उपयोगेपु नानुप्रवेशं लभते' 'उपयोगे नानुप्रवेशं लभते' 'उपयोगेन व्यावेशं लभते' इति पाठचतुष्टयं दृश्यते। तत्रोपयोगेनेति तृतीयान्तपदघटितः प्रथमपाठ एव युक्तः। अर्थसंगतेः। 'उपयोगेनेति व्यापारेण स्वरूपसमर्पणाख्येन' इति वृषभदेवेन व्याख्यातत्वाच्च। द्वितीयपाठे तु अर्थसंगतिः सुदृढा। तृतीये सप्तम्येकवचनान्तोपयोग-पदघटिते पाठेऽपि अर्थासंगतिः सुदृढैव। चतुर्थे पाठे तु यद्यपि नार्थासंगतिः, व्यावेशा-नुप्रवेशपदयोः समानार्थकत्वेन वृषभदेवेन व्याख्यातत्वात्, तथापि प्रसिद्धार्थकमनु-प्रवेशपदमेव प्रयोक्तव्यम्, न तु व्यावेशपदं तत्र तस्याप्रसिद्धत्वादिति।

अत्रैवाग्रिमवाक्ये—'तत्पूर्वं बुद्धिनिरूपणया' 'तत्पूर्वं बुद्धिरूपतया' 'तत्पूर्वं बुद्धिप्ररूपणया' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्यां व्याख्यानेन। प्रतीकीकृत्य व्याख्यातश्चायमेव पाठो वृषभदेवे-नापि। द्वितीयस्तु अर्थसंगत्यापपाठः। तृतीयपाठोऽपि न युक्तस्तथाहि—प्ररूपणा-पदस्य प्रथमं प्रथमा वा रूपणा अर्थः। अथवा प्रकृष्टा रूपणा प्ररूपणा इति। नाद्यमर्थद्वयम्, पूर्वपदवैयर्थ्यापत्तेः। न तृतीयः। बुद्धिस्थस्य शब्दस्य बुद्ध्या प्रकृष्टरूपणाया अभावात्। बहिष्ठस्य हि तस्य श्रोत्रसाहाय्येन बुद्ध्या प्रकृष्टा रूपणा भवति न बुद्धिस्थस्येत्यस्यानुभवसिद्धत्वात्। अत्रैव वाक्ये—'रूपविपर्यासेनेव' 'रूपविपर्यासवशे-नेव' 'रूपविपर्यासेनैव' इति पाठत्रयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। तृतीययैव रूपविपर्यासस्य रूपान्तरोपग्रहणं प्रति हेतुत्वबोधनसंभवे द्वितीयपाठे वशशब्दप्रयोगस्य वैयर्थ्यात्। क्वचित्तु तृतीयया सहापि वशशब्दस्य प्रयोगो दृश्यते। तत्र समुच्चित्यार्थाव-बोधनान्नान्यतरवैयर्थ्यम्। तदुक्तम्—संभेदेनान्यतरवैयर्थ्यमिति। तथापि वशशब्दस्य

प्रयोगे गौरवमपरिहार्यमेव। वृषभदेवेन तु एष पाठः पाठान्तरालाभेन गौरवमुपेक्ष्य व्याख्यातः। इवशब्दप्रयोगस्तु तत्र न दृश्यते। तथापि अर्थौचित्येन स उपादेयः। तृतीयपाठस्तु सर्वथाऽयुक्त एव। एवकारार्थस्य प्रकृतवाक्यार्थेऽन्वयसंभवात्। अत्रैव वाक्ये—'रूपान्तरोपग्राहि' 'रूपान्तरोपग्रहम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। कर्तरि णिनेः संभवेनार्थसंगतेः। द्वितीयपाठस्तु न युक्तः। रूपान्तरस्योपग्रहो यत्र येन वा इति विग्रहेऽनिष्टस्य व्यधिकरणबहुव्रीहेः स्वीकारात्। उपग्रहपदेऽचस्तु संभव एव नास्तीति। अत्रैवाग्रे—'सूक्ष्मे व्यापिनि ध्वनौ' 'सूक्ष्मेऽपि व्यापिनि ध्वनौ' 'सूक्ष्मे व्यापिध्वनौ' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवेन तं पाठमेव प्रतीकीकृत्य व्याख्यानात्। द्वितीयपाठेऽपि शब्दप्रयोगो न युक्तः। नादभागानामणुत्वेन सकलव्योमव्यापित्वेन च सूक्ष्मत्वव्यापित्वयोर्विरोधाभावस्य वृषभदेवेन प्रदर्शितत्वात्। तृतीयपाठस्तु वृषभदेवटीकापाठविरोधेन हेयः। किञ्चात्र पाठे सूक्ष्मत्वस्य व्यापित्व-विशिष्टे ध्वनौ अन्वयासंभवः। व्यापित्वरूपे विशेषणेऽन्वयानुपपत्तेः। अत्रैव वाक्ये—'करणव्यापारेण' 'करणव्यापारप्रचयेन' 'करणव्ययेन' इति पाठत्रयं दृश्यते तत्राद्य-पाठे जातावेकवचनम्। द्वितीयपाठस्तु युक्त एव। तृतीयपाठस्तु अर्थासंगत्याऽयुक्तः। अत्रैव—'प्रचीयमाने' 'प्रलीयमाने' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अभ्र-संघातवद् इति दृष्टान्तानुरोधात्। 'उपलभ्येन' 'उपलब्धेन' इति पाठद्वयमत्रैव वाक्ये दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। ध्वनिप्रचयात् प्राक् अभ्रसंघातवत् नादात्मन उपलब्धत्वाभावात्। अत्रैव—'नादात्मना' 'नात्मना' इति पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु तदभावाद-संगतः॥ ४७॥

## नादस्य क्रमजन्मत्वादिति कारिका ॥४८, ४९।

अत्र—नादस्य क्रमजातत्वाद् इति पाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः। आद्यपाठस्यैव वृषभदेवेन समादृत्य व्याख्यातत्वात्। किञ्च क्रमजातत्वादिति 'भेदवानिव जायते' इत्यत्र हेतुर्वाच्यः। तथाच जायते इत्यत्र वर्तमानकालः, जातपदे च भूतकाल इति कालविरोधेन विरुद्धार्थकत्वान्नायं पाठो युक्तः। अस्याः कारिकाया द्वितीयपादे—'न पूर्वो न परश्च सः' इति, 'न पूर्वो नापरश्च सः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवेन समादृतत्वात्। किञ्च यथा पूर्वत्वपरत्वयोर्वैयधि-करण्य रूपो भेदो न तथा पूर्वत्वापरत्वयोरिति भेदेन निर्देशोपपत्त्यर्थं प्रथमपाठ एवोपा-देयः। अस्या एव कारिकायास्तृतीये पादे—'अक्रमः क्रमरूपेण' 'सक्रमः क्रमरूपेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स तु स्वतोऽक्रम एवेति वृषभदेवोक्तेः। तस्य तु क्रमयौगपद्ये नित्यत्वैकत्वाभ्यां विरोधान्न विद्येते इति स्वोपज्ञवृत्तौ हृद्युक्तेश्च। अस्या एव चतुर्थे पादे—'भेदवानिव जायते' 'भेदवानिव गृह्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, वृषभदेवेन समादृतत्वात्। क्रमजन्मत्वादित्यस्य जन्मन्येव साक्षाद्

हेतुत्वसंभवाच्च । ग्रहणे तु तस्य हेतुत्वं भेदवत्त्वेन जन्मसमारोपद्वारा इति रीत्या प्रथम एव पाठो युक्तः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'तस्य तु क्रमयौगपद्ये' 'तस्य क्रमयौगपद्ये' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। पूर्वत्र—'विभक्तोद्देशावच्छेद इव' इत्युक्त्या क्रमवत्तायाः प्रतीतौ अत्र तत्प्रतिषेधपरे वाक्ये पूर्ववैलक्षण्यप्रतिपादनाय तु शब्दप्रयोगस्यौचित्यात् । अत्रैव वाक्ये—'विरोधान्न विद्येते' 'विरोधो न विद्यते' 'विरोधिनि विद्यते' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । 'यतः क्रमयौगपद्ये न स्तः' इति वृषभदेवव्याख्यानदर्शनाच्च । इतरत्तु पाठद्वयं प्रकृतवाक्यार्थेऽन्वयायोग्यार्थकतया निरस्तम् ।

अतोऽग्रिमवाक्ये—'तथाहि असौ' तेनासौ' इति पाठद्वयं दृश्यते । तत्र यद्यपि आद्यपाठ एव वृषभदेवसंमतः । तथाहि इति प्रतीतं कथयति इति तदुक्तेः, तथापि द्वितीयपाठ एव युक्तः । तथाहि इति पाठे प्रतीतकथनस्य प्रकृतेऽनुपयोगेन तस्य हेतुत्वविधयैव फलितया उपयोगो वाच्य इति तदपेक्षया तेनेति साक्षाद् हेतुत्वोपन्यासस्यौचित्यात् । अत्रैवाग्रिमवाक्ये—'संसर्गिधर्म एव' 'संसर्गिभेदधर्म एव' 'संसर्गधर्म एव' इति पाठत्रयमुपलभ्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । इतरत् पाठद्वयन्तु सुदृढयाऽर्थासंगत्या हेयम् ॥ ४८-४९ ॥

## आत्मरूपं यथाज्ञाने इति कारिका ॥ ५० ।

अस्या व्याख्यानारम्भे स्वोपज्ञवृत्तौ—'यथाज्ञानम्, 'तथाहि ज्ञानम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । कारिकायां यथाज्ञाने इति पाठस्य दर्शनात् । अत्रैव वाक्ये—'ज्ञानान्तरस्येव भिन्नम्' 'ज्ञानान्तरस्येव भिन्नस्य' इति पाठद्वयं दृश्यते । तत्राद्यपाठो न युक्तः । उपमानोपमेययोर्भिन्नविभक्तिकत्वस्यानुचितत्वात् । अतो द्वितीयपाठ एव युक्तः ।

अत्रैवाग्रिमवाक्ये—'तथाह्यतीतम्' 'तथाऽतीतम्' इति पाठद्वयं दृश्यते । तत्र यद्यपि आद्यपाठ एव वृषभदेवेन समर्थ्यते । तथाहि इति उक्तं द्रढयति इति तदुक्तेः । तथापि हिशब्दरहितः पाठः तथाशब्दश्च पूर्वसमुच्चायक एव युक्त इति शब्दस्वारस्यात् प्रतीयते । अत्रैव वाक्ये—'स्मृतिविषयत्वम्' 'श्रुतिविषयत्वम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । स्मृतिशब्दस्य स्मृतिरूपज्ञानपरत्वेन अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु श्रुतिशब्दस्य भावसाधनत्वे कर्मसाधनत्वेऽन्यार्थकत्वे वा न कथमप्यर्थसंगतिः, प्रकृतवाक्यार्थेऽन्वयासंभवात् । अत्रैवाग्रे—'संनिहितप्रत्ययवभासाऽपि' 'सहिते प्रत्ययवभासेऽपि' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठस्तु प्रकृतवाक्यार्थेऽन्वयायोग्यत्वेन कथमप्यर्थसंगतिर्नास्ति ।

अत्रैवाग्रिमवाक्ये—'अर्थस्य कार्यविरोधित्वात्' 'अर्थस्य विरोधिकार्यत्वात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। षष्ठीतत्पुरुषे उत्तरपदार्थप्राधान्यात्। द्वितीयपाठे तु बहुव्रीहिसमासाभ्युपगमेनार्थगतं नाभाति अन्यपदार्थप्राधान्यात्। अत्रैव वाक्ये—'कार्यैर्योगः' 'कार्ययोगः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। प्रथमपाठे कार्यैः सह योगोऽविरुद्ध इत्यन्वये कार्याणि अविरुद्धानि योगोऽपि अविरुद्ध इत्येवमपि अर्थस्य भानसंभवात् ॥ ५० ॥

## आण्डभावमिवापन्न इति कारिका ॥ ५१ ।

अत्र 'अण्डभावमिवापन्न' इति क्वचित् पाठः। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। अण्डे भवो रसस्तद् भावम् इति वृषभदेवव्याख्यादर्शनाच्च। अस्या एव द्वितीये पादे—'यः क्रतुः शब्दसंज्ञकः' 'यः क्रतुः क्रमसंज्ञकः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'शब्दोऽपि अर्थान्नातिक्रामतीति क्रतुः' इति व्याख्यादर्शनेन तस्यैवौचित्य-प्रतीतेः। अस्या एव तृतीये पादे—'क्रियारूपा' 'क्रियाभूता' इति पाठद्वयं दृश्यते। तत्र यद्यपि द्वितीयपाठ एव वृषभदेवसंमतः प्रतीयते। 'क्रियाभूता इति, भूतशब्द इवार्थे' इति व्याख्यादर्शनात्। तथापि परिणामरूपाया वृत्तेः क्रियारूपत्वमेव न तु क्रियासदृशत्वमिति क्रियाभूतेति पाठो न युक्तः। भूतशब्दस्य स्वरूपार्थकत्वेऽपि स पाठो हेयः। अनेकार्थकत्वेन संदिग्धार्थकत्वात्। अस्या एव चतुर्थे पादे—'भागशो भजते क्रमम्' 'भागशो लभते क्रमम्' इति पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। क्रमशक्तिं परिगृह्णाति इति स्वोपज्ञवृत्तौ व्याख्यानात्। किञ्च भज्धातोः सेवायां शक्तिर्लाभे तु लक्षणेति आद्ये पाठे लक्षणैव दोषः। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ-'सर्वविभागोद्ग्राहप्रतिसंहारेण' 'अण्डभागोद्ग्राहप्रतिसंहारेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। 'सर्वविभागोद्ग्राहप्रतिसंहारेण बाह्यो व्यावहारिकः' 'सर्व-विभागोद्ग्राहप्रतिसंहारेण व्यावहारिकः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। व्यावहारिकपदार्थान्यथानुपपत्त्यैव बाह्यपदार्थस्य लाभसंभवे बाह्यपदोपादा-नस्य वैयर्थ्यात्। यद्यपि वृषभदेवेन 'बाह्यः श्रोत्रानुपाती' इति व्याख्यातं तथापि एष आर्थिकोऽर्थः किञ्चास्याप्यर्थस्य व्यावहारिकपदेनैवाक्षेपसंभवः। अत्रैवाग्रे स्वोपज्ञ-वृत्तौ—'दाशतयादीनामपि' 'दाशतय्यादीनामपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः, न वा पदसाधुत्वम् इति हेयः स पाठः। अत्रैवाग्रिमवाक्ये—'प्रतिलीनः प्रत्यस्तमित-भागः' 'प्रतिलीनप्रत्यस्तमितभागः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रतिलीनत्वस्य शब्दविशेषणत्वसंभवात्। समस्तपाठे तु भागविशेषणत्वेन पुनरुक्तिः।

वस्तुतस्तु 'प्रतिलीनः प्रत्यस्तमितविभागः' इति पाठो युक्तः। अत एवाम्बा-कर्त्र्याम्—'प्रत्यस्तसर्वविभागः' इति व्याख्यातम्। अत्रैव वाक्ये—'वाक्यपदविवर्त-

धर्ममुद्गृह्य' 'वाक्यपदादिवत्तद्धर्ममुपगृह्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिताचार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। अत्रैव वाक्ये—'अवयवोद्ग्राहेण' 'अवयवोद्ग्राहे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तृतीयया क्रमशक्तिपरिग्रहे करणत्वस्य बोधनसंभवात्। सत्सप्तम्यन्तु अन्वयावगमनद्वारा कथंचिद् हेतुत्वबोधनमिति सप्तम्यन्तपाठो न युक्तः। अत्रैव वाक्ये—'परिगृह्णाति'' 'प्रतिगच्छति' 'प्रतिगृह्णाति' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। परिग्रहस्य स्वीकारसामान्यरूपत्वेनार्थसंगतेः। तृतीयपाठस्तु न युक्तः। दीयमानवस्तुस्वीकारस्यैव प्रतिग्रहपदार्थत्वात्। द्वितीयपाठोऽपि न युक्तः। शब्दकर्तृकस्य क्रमशक्त्याभिमुखगमनरूपस्य अनभिप्रेतार्थस्य प्रत्यायकत्वात्॥ ५१॥

**यथैकबुद्धिविषया मूर्तिरिति कारिका ॥ ५२।**

अत्रैकस्थाने एव पदपाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः। स्वोपज्ञवृत्तौ—'एकबुद्धिनिबन्धनत्वं प्राप्ता' इति व्याख्यादर्शनात्। वृषभदेवटीकायाम्—'यथैकेति' इति प्रतीकदर्शनाच्च। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'एकबुद्धिनिबन्धनत्वं प्राप्ता' 'एकबुद्धिनिबन्धनोऽप्राप्ता' 'एकबुद्धिनिबन्धनप्राप्ता' 'एकबुद्धिनिबन्धत्वमप्राप्ता' इति पाठचतुष्टयं क्वचिद् दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयचतुर्थयोस्तु न कथमप्यर्थसंगतिः। तृतीयपाठे तु यद्यपि—एकबुद्धिरूपं निबन्धनं प्राप्ता इति कर्मधारयाश्रयणेनार्थसंगतिः संभवति तथापि षष्ठीतत्पुरुषस्यापि संभवेन अर्थसन्देहापादकत्वेन सोऽपि पाठो न युक्तः। क्वचित् पुस्तके तु—'एकबुद्धिनिबन्धनत्वं प्राप्ता' इत्यारभ्य—'एकबुद्धिनिबन्धनो भूत्वा' इत्यन्तः पाठो न दृश्यते। किन्तु स उपादेय एव। अर्थसंगतेः।

अत्रैवाग्रिमे स्वोपज्ञवृत्तौ—'ग्राह्यग्राहकभावं नातिवर्तते' 'ग्राह्यग्राहकभावनया विवर्तते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। द्वितीयपाठे तु केन रूपेण विवर्तते इत्याकाङ्क्षाया न निवृत्तिरिति स एव दोषः॥ ५२॥

**यथा प्रयोक्तुः प्रागबुद्धिरिति कारिका ॥ ५३।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'प्रयत्नमभिपद्यमानः' 'प्रयत्नमभिपत्स्यमानः' 'प्रयत्नमारभभाणः' 'प्रयत्नमारप्स्यमाणम्' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अभिपद्यमान इत्यस्य च आभिमुख्येन प्राप्नुवन् इत्यर्थः। इतरस्मिन् पाठत्रये तु न कथमप्यर्थसंगतिरिति तत्पाठत्रयं हेयम्। अत्रैव वाक्ये—परिच्छिन्नाशब्दानाञ्छन्दात्मन इति पाठ उपलभ्यते, टीकानुरोधेन तु 'परिच्छिन्नाञ्छब्दात्मन' इति पाठो युक्तः प्रतीयते।

अत्रैवाग्रिमवाक्ये—'मन्यमानस्तं तं शब्दम्' 'मन्यमानस्तत्त्वं शब्दम्' 'मन्यमानस्तं तु प्रकारशब्दम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। इतरस्मिन् पाठद्वये तु न कथमप्यर्थसंगतिः।

अत्रैवाग्रिमवाक्ये—'अर्थप्रतिपत्तिभावनाभ्यागात्' इति, 'अर्थप्रतिपत्तिभावनाभ्यां साधु' इति पाठस्य स्थाने युक्तः प्रतिभाति अर्थसंगतेः। अत्रैव वाक्ये—'शब्दरूपपरिच्छेदावस्था न चित्रीक्रियते' 'शब्दरूपपरिच्छेदावस्थानं विक्रियते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। न चित्रीक्रियते इति वृषभदेवटीकायां प्रतीकदर्शनात्। अर्थसंगतेश्च। द्वितीयपाठे तु नार्थसंगतिरिति हेयः सः॥ ५३॥

## अर्थोपसर्जनीभूतान इति कारिका ॥५४।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'शिष्टत्वात् प्रतीयते' 'शेषत्वं प्रतीयते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरस्मा-कन्यत्र। वृषभदेवसंवादाच्च। यद्यपि—'अन्यत्राशिष्टत्वात् प्रतीयते' इति काचित्कः पाठोऽपि व्याख्यातो वृषभदेवेन तथापि प्रकरणादिसापेक्षार्थविशेषप्रतिपत्तिगौरवाद् नञ्घटितत्वेन पदमात्रागौरवाच्च स पाठ उपेक्ष्यः। 'विशिष्टत्वात् प्रतीयते' इति पाठस्तु अर्थसंगत्या सर्वथाऽयुक्त एव। द्वितीयपाठोऽपि ( शेषत्वम् इति पाठोऽपि ) अर्था-संगत्याऽयुक्त एव ॥ ५४ ॥

## ग्राह्यत्वं ग्राहकत्वं चेति कारिका ॥ ५५ ।

अत्रैव ग्राह्यत्वं ग्रहणत्वं च' इति पाठोऽपि दृश्यते। तथापि—अस्या व्याख्याने स्वोपज्ञवृत्तौ—'प्रतिपाद्यप्रतिपादकशक्ती' इति पाठदर्शनेन प्रथमपाठस्यैव युक्तत्वं प्रतिभाति। यतश्च इति प्रतीकमुपादाय—'यस्माद् ग्राह्यग्राहकशक्ती तस्य तस्माद्' इति वृषभदेवटीकायां ग्राहकेति कर्तृपदप्रयोगस्यैव दर्शनाच्च। एतत्कारिकाव्याख्यान-स्वोपज्ञवृत्तिव्याख्यानावसरे—'यद्यपि शब्दो ग्राह्यग्राहकभावेन स्थितः' इति वृषभदेव-टीकादर्शनाच्च। द्वितीयपाठस्य तु भावकरणव्युत्पत्त्योः सन्देहापादकत्वेनायुक्तत्वम्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'व्यवस्थिता इति' 'व्यवस्थिताः ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। इतिशब्दस्य हेत्वर्थकत्वेन पूर्ववाक्यार्थस्योत्तर-वाक्यार्थं प्रति हेतुत्वप्रतिपादकत्वात्। किञ्चेतिशब्दपाठे हेतुहेतुमद्भावापन्नार्थबोध-कतया पूर्वोत्तरवाक्ययोरेकवाक्यता, द्वितीयपाठे तु अपरिहार्यो वाक्यभेदः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'बाह्यस्य विषयस्य' 'ग्राह्यस्य विषयस्य' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। विषय ग्राह्यत्वविशेषणस्य प्रकृत-वाक्यार्थानुकूलत्वात्। प्रथमपाठे तु विषये बाह्यत्वविशेषणोपादानस्य वैयर्थ्यमेव।

अत्रैवाग्रिमवाक्ये—'अनुग्राहकत्वेन' 'अनुनिष्पादकत्वेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्मिन् पाठे वाक्यार्थस्यापूर्वत्वेन विधेयत्वात्। द्वितीयपाठे तु निष्पादकस्येव अनुनिष्पादकस्यापि कारणत्वेन न वाक्यार्थस्यापूर्वत्वमिति अनुवादरूप-त्वं वाक्यस्येति दोषः।

अत्रैवाग्रिमवाक्ये—'शब्दोऽपि भावान्तरविरोधिना शब्दान्तरविरोधिना च

स्वरूपेणावध्रियमाणभेदः' 'शब्दोऽपि भावान्तरविरोधिनाऽवध्रियमाणभेदः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्य पाठस्य प्रकृतवाक्यार्थानुकूलत्वात्। द्वितीयपाठस्तु न युक्तः। भेदद्वयासंग्रहाद्, विशेष्यासंग्रहाच्च। अत्रैव—'अवध्रियमाणभेदः' 'अवह्रियमाणो भेदः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव॥ ५५॥

## विषयत्वमनापन्नैः इति कारिका॥ ५६।

अस्या द्वितीये पादे—'प्रकाश्यते' 'प्रतीयते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'विषयत्वमनपेक्षमाणाः स्वं स्वमर्थं प्रत्याययेयुः, न तु प्रत्याययन्ति' इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। अस्या एव उत्तरार्धे—'न सत्तयैव तेऽर्थानामगृहीताः' 'न सत्तयैव शब्दानामगृहीताः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। ते शब्दा अगृहीताः सत्तयैव अर्थानां प्रकाशका न भवन्ति इति अन्वयेऽर्थसंगतेः। द्वितीयपाठे तु नास्त्यर्थसंगतिः। पूर्वार्धेऽगृहीतानां शब्दानामर्थप्रकाशकत्वाभावस्यैव प्रतिज्ञातत्वेन उत्तरार्धे तदुपपादनस्यैवावश्यकत्वात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'शेषिभावमप्रतिपन्नाः' 'शेषभावमप्रतिपन्नाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, ग्राह्यत्वेन शब्देषु अर्थनिरूपितशेषिभावस्यैवौचित्यात्।

अत्रैवाग्रिमवाक्ये—'ते सत्तासम्बन्धमात्रेणोपलब्धा अनुपलब्धाश्च विषयत्वमनपेक्षमाणाः' इति, 'ते सत्तासम्बन्धमात्रेणोपलब्धाश्च विषयत्वमनपेक्षमाणाः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अन्यथा चकारः किं समुच्चिनुयात्।

अत्रैवाग्रिमवाक्ये—'प्राधान्यमात्रारूपेण' 'प्राधान्यमात्ररूपेण' 'प्राधान्यमात्रं रूपेण' इति पाठत्रयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। प्रथमतृतीयपाठयोस्तु नार्थसंगतिरिति सुधियो विभावयन्तु॥५६॥

## अतोऽनिर्ज्ञातरूपत्वात् इति कारिका॥ ५७।

अत्र क्वचित्पुस्तके–'स्वतोऽनिर्ज्ञातरूपत्वादिति पाठो दृश्यते। स तु न युक्तः। "यतश्च गृहीतानामङ्गभावोऽर्थप्रत्यायने, अतः=इत्यस्माद्धेतोः" इति वृषभदेवटीकायां व्याख्यादर्शनात्। यद्यपि अस्याः कारिकाया व्याख्यानभूतायाः स्वोपज्ञवृत्तेः 'शब्दस्वरूपसंप्रत्ययाधीनम्' इत्यादिर्भागः क्वचित्पुस्तके लेखकेन वक्ष्यमाणकारिकाया व्याख्याने प्रक्षिप्तो दृश्यते, तथापि स तत्रार्थासंगत्या अत्र चार्थसंगत्याऽत्रैव ज्ञेयः, संनिवेशितश्चात्रैव। दर्शिता चार्थसंगतिरस्यात्राम्बाकर्त्र्याम्।

अत्रैवाग्रिमवाक्ये—'शेषभावमुपगच्छन्ति' 'शेषमुपगच्छन्ति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, भावशब्दानुपादानेऽर्थासंगतेः॥ ५७॥

**भेदेनावगृहीतौ द्वौ इति कारिका ॥ ५८ ।**

अत्र—भेदेनोपगृहीतौ, द्वौ इति पाठोऽपि क्वचित्पुस्तके दृश्यते। तत्राद्यपाठ एव युक्तः। 'भेदेनावगृहीतौ, परिच्छिन्नौ' इति वृषभदेवटीकायां व्याख्यादर्शनात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'लोके शास्त्रे च' 'लोके शास्त्रेषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। चकारपाठस्यात्र शब्दस्वारस्येनौचित्यप्रतिपत्तेः। शास्त्रे इत्येकवचनन्तु जात्यभिप्रायेणोन्नेयम्।

अत्रैवाग्रिमवाक्ये—'मुख्यार्थविषयाणीव शास्त्रे' 'मुख्यार्थविषयाणि शास्त्रे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। इवशब्दोपादानेऽर्थसंगतेः। दर्शिता चात्र पाठेऽर्थसंगतिरम्बाकर्त्र्या व्याख्यानेन। किञ्च 'संज्ञासंज्ञिसंबन्धादीनि भेदकार्याणि अभेदेऽपि विधीयन्ते' इत्यग्रिमवाक्यानुरोधेन 'मुख्यार्थविषयाणीव' इतीवशब्दपाठस्यौचित्यं प्रतिभाति ॥ ५८ ॥

**बुद्ध्यादयो यथा शब्दा इति कारिका ॥ ५९ ।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'ततः तत्प्रत्यायितानां तु' 'तत्प्रत्यायितानां तु' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, तत इति पदस्य वैयर्थ्यात्। अत्रैवाग्रे—'स्वरूपाधिष्ठानाः स्वेन रूपेणार्थवन्तः' 'स्वरूपाधिष्ठानास्तेनार्थेनार्थवन्तः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। द्वितीयपाठस्तु न युक्तः। पूर्वत्र यत्पदप्रयोगाभावेनात्र तत्पदप्रयोगस्यानौचित्यात्। किञ्च तत्पदेन स्वरूपाधिष्ठाना इत्यत्र विशेषणस्य स्वरूपस्य परामर्शे सर्वनाम्नां प्रधानपरामर्शित्वमित्युत्सर्गस्योत्सर्गः कृतो भवति इत्ययमपि दोषः।

अत्रैव—'स्वरूपेण' 'स्वेन रूपेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थासंदेहात्। द्वितीयपाठे तु स्वशब्दस्य नानार्थकत्वेनार्थसंदेहः संभवति। अत्रैव वाक्ये—'आदैच्छब्दादिभिः प्रत्यायितैः' 'आदैच्छब्दादिप्रत्यायितैः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, असंदिग्धार्थप्रतिपादकत्वात्। प्रथमपाठस्तु न युक्तः। सामानाधिकरण्येन वैयधिकरण्येन वाऽन्वय इति संदेहसंभवात् ॥ ५९ ॥

**अग्निशब्दस्तथैवायम् इति कारिका ॥ ६० ।**

'अग्निशब्दस्तदर्थेयम्' इति क्वचित्पुस्तके पाठः। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु दुरुद्धराऽर्थासंगतिः। अस्या एव चतुर्थपादे—'अग्निशब्दाभिधेयया' 'अग्निशब्दाभिधेययोः' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अग्निश्रुत्या इति विशेष्येण समन्वयसंभवात्। तदसंभवादेव च द्वितीयः पाठो न युक्तः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'स्वं रूपं शब्दस्य इति' 'स्वरूपं शब्दस्य इति' पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। सूत्रप्रतीकत्वे एव प्रकृतवाक्य-

स्वारस्यात्, टीकाप्रामाण्याच्च। अत्रैव—'संज्ञासंज्ञिनौ भेदेनोपादीयेते' 'भेदेन संज्ञासंज्ञिनावुपादीयेते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। संज्ञासंज्ञिनावुद्दिश्य भेदेनोपादानस्य विधेयत्वेन—'यच्छब्दयोगः प्राथम्यम्' इति न्यायमाश्रित्य संज्ञासंज्ञिनाविति उद्देश्यबोधकपदस्य प्राथम्यस्यैवौचित्यात्।

अत्रैवाग्रे—'तमग्निशब्दान्तराभिधेयस्य' 'न चाग्निशब्दान्तराभिधेयस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्यामत्र पाठे। द्वितीयपाठे तु न कथमप्यर्थसंगतिः॥ ६०॥

**यो य उच्चार्यते शब्द इति कारिका॥ ६१।**

अत्र—'योऽयमुच्चार्यते शब्द' इति पाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः। वृषभदेवटीकायाम्—'यो यः' इति प्रतीकदर्शनात्। नियतमिति नियतपदलभ्याया नियमरूपाया व्याप्तेर्यत्पदार्थवीप्सां विनाऽलाभाच्च। अस्या एव द्वितीये पादे—'नियतम्' इति, 'नियत' इति, पाठद्वयम्। अत्र पाठद्वये आद्यपाठ एव युक्तः। नियतमित्यस्य न कार्यभागित्यत्र क्रियाविशेषणत्वेन नियमेन कार्यभाक्त्वनिषेधे एवार्थसंगतेः। द्वितीयपाठे तु नियतपदार्थस्य शब्दविशेषणत्वेन न तादृशनिषेधप्रतीतिरित्यभिप्रेतार्थासिद्धिः।

अथ 'न स कार्यभाक्' 'स न कार्यभाक्' इति च पाठद्वयं दृश्यते। अत्र पाठद्वये प्रथमपाठ एव युक्तः। स नियतं न कार्यभाक् इत्येवमन्वये कार्यभाक्त्वनिषेधे व्यापकत्वरूपनियतत्वप्रतीतेः। द्वितीयपाठे तु नियतत्वस्य कार्यभाक्त्वे तन्निषेधे वाऽन्वय इति सपदव्यवहितपाठेन संदिह्येत। यत्र यत्र उच्चार्यमाणत्वं तत्र तत्र कार्यभाक्त्वाभाव इति व्याप्तिर्हि अत्र विवक्षिता। न चैवं नियतपदार्थस्य कार्यभाक्त्वनिषेधेऽन्वये क्रियाविशेषणानां कर्मत्वं नपुंसकत्वञ्चेति नियमाप्रवृत्त्या नियतमित्यत्र कर्मत्वनपुंसकत्वयोरनुपपत्तिरिति वाच्यम्। क्रियोपरक्तस्य निषेधस्य क्रियावद् भासमानत्वेन तयोरुपपत्तेः।

अस्या एव कारिकायास्तृतीये पादे—'अन्यप्रत्यायने' 'अर्थप्रत्यायने' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, शास्त्रे उच्चार्यमाणस्याग्निशब्दादेः कार्यभाक्त्वाभावस्य स्वान्यप्रयोगघटकाग्निशब्दप्रत्यायकत्वस्य च प्रत्यक्षसिद्धत्वात्। शास्त्रे उच्चार्यमाणस्याग्निशब्दादेः अर्थप्रत्यायकत्वं तु न सिद्धम्। स्वरूपस्यैव प्रत्यायकत्वात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'यदर्थमुच्चारितः, 'यदर्थमुच्चरति' इति पाठद्वयम्, दृश्यते। प्रथमपाठ एव युक्तः। पूर्वत्र—'परार्थमुच्चारितः' इति उच्चारित पदप्रयोगदर्शनात्। अत्रापि उच्चारितपदप्रयोग एव न्याय्यो न तूच्चरितपदप्रयोगः।

अत्रैव—'तं कार्येषु' 'तत् कार्येषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तत्पदेन शब्दपरामर्शेन पुंस्त्वस्यैवौचित्यात्। अत्रैवाग्रे—'न तस्य प्रत्यायकत्वम्' 'न तस्य प्रत्याय्यत्वम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थ-

सङ्गतेः। द्वितीयस्तु अपपाठः, अर्थासङ्गतेः। अत्रैव—'प्रतिबध्यते' 'प्रतिपद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, कारिकायां प्रतिबध्यते इति पाठस्यैव सर्वसंमतत्वात्, द्वितीयपाठेऽर्थासंगतेश्च ॥ ६१ ॥

## उच्चरन् परतन्त्रत्वात् इति कारिका ॥ ६२ ।

अस्यास्तृतीये पादे—'तस्मात्तदर्थैः कार्याणाम्' 'तस्मात्तदर्थः कार्याणाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'इत्यर्थतन्त्रा श्रुतिः क्रियासु' 'इत्यर्थं तत्र श्रुतिः क्रियासु' 'इत्यर्थतन्त्रश्रुतिक्रियासु' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। इतरत्पाठद्वयं तु प्रमादमूलकम्, अर्थासङ्गतेः। अत्रैव वाक्ये—'तथा शब्दान्तरतन्त्राऽपि' 'तथा शब्दान्तरं तथापि' 'तथा शब्दार्थिकाऽपि' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। द्वितीयपाठे तु न कथमप्यर्थसङ्गतिः। तृतीयपाठे तु यद्यप्यस्ति अर्थसङ्गतिस्तथापि अत्र पाठे शब्दान्तरपरतन्त्रत्वरूपो हेतुर्नोपात्तो भवति इति हेयः स पाठः।

अत्रैवाग्रिमवाक्ये—'पारार्थ्यस्याविशिष्टत्वात्' 'परार्थस्याविशिष्टत्वात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। परार्थत्वरूपस्य धर्मस्योभयत्र तुल्यत्वाद् इत्यर्थसङ्गतेः। द्वितीयपाठे तु नार्थसङ्गतिः। श्रुतिद्वये परार्थस्य शब्दस्य तुल्यत्वाभावात्। नहि प्रकृते श्रुतिद्वये परार्थः शब्दः कश्चन धर्मरूपो वर्तत इति।

अत्रैवाग्रिम-वाक्ये—'तस्मात्सर्वस्य' 'तस्मात्सर्वत्र' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, तत्र पाठे सर्वस्येति षष्ठ्यन्तस्य प्रत्याय्यस्येत्यनेन सह सामानाधिकरण्येनान्वयात्। द्वितीयपाठे तु विजातीयविभक्तिकत्वेन वैयधिकरण्येनान्वयः। स च संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमित्यभ्युपगमविरुद्ध इति द्वितीयपाठो हेयः ॥ ६२ ॥

## सामान्यमाश्रितं यद् यद् इति कारिका ॥ ६३ ।

अत्र—'सामान्येनाश्रितं यद् यद्' इति पाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः, अर्थासङ्गतेः। तथाहि—नहि उपमानोपमेययोः सामान्येन धर्मेण किञ्चिद् धर्मान्तरमाश्रितं भवति, किं तर्हि, धर्मान्तरमेव किञ्चिद् उपमानोपमेययोः सामान्यधर्ममाश्रितं भवति इति लोकप्रसिद्धया स्वोपज्ञवृत्तिदर्शनेन च लभ्यते।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'उपमेये क्षत्रिये श्रूयमाणम्' 'उपमेये श्रूयमाणम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, उपमाने विशेषस्याश्रवणेन उपमेयेऽपि विशेष्यानिर्देशस्यैवौचित्यात्। ब्राह्मणवदधीते क्षत्रिय इति वाक्यतो द्वयोः प्रतीतेश्च ॥ ६३ ॥

**गुणः प्रकर्षहेतुर्यं इति कारिका ॥ ६४ ।**

अत्र--'गुणप्रकर्षहेतुर्यं' इति समस्तपाठोऽपि क्वचित् प्रतीयते। स तु न युक्तः, गुणस्यैव द्रव्यप्रकर्षहेतुत्वेनात्र विवक्षणात्, अन्यस्य च गुणप्रकर्षहेतुत्वेनाविवक्षणात्। तथा चैतत् कारिका व्याख्यायां स्वोपज्ञवृत्तावुक्तम्—'प्रकृष्टः शुक्ल इति शुक्लेन रूपेण सत्यप्युपलक्षणत्वे प्रकर्षं प्रति सव्यापारेण तद्वान् प्रकृष्टाश्रयः प्रकृष्टव्यपदेशं लभते' इति। किञ्चेदं पद्यं हेलाराजेन गुणसमुद्देशे तृतीयकाण्डे सर्वस्यैव प्रधानस्येत्यादि-श्लोकव्याख्यायां संगृहीतम्। तत्र–गुणः प्रकर्षहेतुर्य इत्येव पाठोऽस्ति, न तु पाठान्तरम्।

अस्या एव कारिकाया व्याख्यायां स्वोपज्ञवृत्तौ—'संसर्गिभिर्निमित्तैः' 'संसरद्भिर्निमित्तैः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वाश्रयसंसर्गिणामेव निमित्तानां स्वाश्रयप्रकर्षकत्वात्, न तु संसरतां तेषां स्वाश्रयप्रकर्षकत्वसंभवः। संसरतां स्वाश्रयादन्यत्रापि गमनसंभवात्।

अत्रैव वाक्ये--'प्रकर्षे सव्यापारैः' 'प्रकर्षेण सव्यापारैः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। वृषभदेव-टीकायाम्—प्रकर्षे सव्यापारैरिति प्रतीकदर्शनाच्च। द्वितीयतृतीयपाठयोस्तु प्रकर्षरूप एव व्यापारः प्रतीयते, स तु नात्राभिप्रेतः। द्रव्यगतप्रकर्षानुकूलव्यापारस्य गुणे विवक्षितत्वात्। किञ्च द्वितीयपाठे बहुवचनानुपपत्तिः, प्रकर्षरूपस्य व्यापारस्यैकत्वात्। किञ्च प्रकर्षरूपो व्यापारो न गुणे किन्तु द्रव्ये। किञ्च प्रकर्षव्यापारैरित्यत्र प्रकर्षानुकूलव्यापारपरिग्रहेऽपि अर्थे संशायकत्वादयं पाठ उपेक्ष्यः।

अतोऽग्रिमवाक्ये--'प्रकृष्टः शुक्ल' इति' 'पटः शुक्लः' इति च पाठद्वयं दृश्यते। तत्राद्यः पाठ एव युक्तः, अस्यैव पाठस्य पूर्ववाक्यार्थे स्वार्थद्वारोदाहरणत्वसंभवात्। पटः शुक्ल इति पाठे हि प्रकर्षरूपोऽर्थः पूर्ववाक्यार्थापेक्षितो न कथञ्चिदपि प्रतीयते इति उपेक्ष्य एव द्वितीयः पाठः। अत्रैव वाक्ये--'तद्वानप्रकृष्टाश्रयः' 'तेषां प्रकृष्टाश्रयः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिर्व्याख्याने-नाम्बाकर्त्र्याम्। द्वितीयपाठे तु सुदृढाऽर्थासंगतिः।

अतोऽग्रिमवाक्ये--'शुक्लतरं रूपमस्य 'शुक्लतररूपमस्य' 'शुक्लतरं रूपस्य' 'शुक्लतररूपस्य' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकायाम्–'शुक्लतरं रूपमस्य' इति प्रतीकदर्शनात्, अर्थसंगतेश्च। दर्शिता चार्थसंगतिरम्बाक-र्त्र्याम्। द्वितीयपाठे तु एकार्थीभावेन रूपे शुक्लतरत्वस्य विधेयत्वं न प्रतीयेत। तृतीयचतुर्थपाठयोस्तु तदर्थयोः प्रकृतवाक्यार्थेऽसमन्वय एव सुमहान् दोषः।

अत्रैव वाक्ये—'रूपाश्रितनिमित्ताद्' 'रूपाश्रितान्निमित्तात्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। वृषभदेवटीकायां केवलम्—'निमित्ताद्' इति प्रतीकमुपादाय 'भास्वरत्वाद्' इति व्याख्यादर्शनात्। वाक्य एव विशेष्यनिष्ठस्य

सिद्धत्वरूपोद्देश्यत्वस्य विशेषणनिष्ठस्य चापूर्वबोध्यत्वरूपस्य विधेयत्वस्य प्रतीतेश्च। अत एवाम्बाकर्त्र्यामपि विभक्तमेव पदद्वयं व्याख्यातम् इति ॥ ६४ ॥

**तस्याभिधेयभावेन इति कारिका ॥ ६५ ।**

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'व्यतिरेकव्यवस्थानिदर्शनं कृत्वा' 'व्यवस्थानिदर्शनं कृत्वा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता च व्याख्यानेनार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु व्यवस्थायाः कर्मणो व्यतिरेकस्यानिर्देशाद् वाक्यस्य साकाङ्क्षतैव दोषः। अत्रैव वाक्ये—'पुनरनुसंह्रियते' 'पुनरत्र संह्रियते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अनुसंह्रियते इत्यस्य उपसंह्रियते इत्यर्थकरणेनार्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। "गुणः प्रकर्षहेतुर्यः" इति श्लोकद्वयेन दृष्टान्तः। तस्येत्यनेनोपसंहारः" इति वृषभदेवटीकायां दर्शनाच्च। संह्रियते इत्यस्य उपसंहारार्थत्वन्तु क्लेशेन लभ्यमिति द्वितीयपाठो हेयः।

अत्रैवाग्रिमवाक्ये—'उच्चारणं प्रक्रम्यते' 'उच्चारणं प्रकल्प्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। तथाहि–प्रक्रम्यते इत्यस्य प्रारभ्यते इत्यर्थः क्रियते इति तु फलितम्। एवं सत्येव—'उच्चार्यमाणस्य' इत्यग्रिमपदस्यार्थ-संगतिः। प्रकल्प्यते इति पाठे तु प्रकल्पनस्य बुद्धिधर्मत्वात् 'उच्चार्यमाणस्य' इत्यग्रिम-पदार्थासंगतिः।

अत्रैव—'तदा तदा सर्वस्य' 'तदा सर्वस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, पूर्वत्र 'यदा यदा' इति यत्पदद्विरुक्तौ 'तदा तदा' इति तत्पदद्विरुक्तेरपि औचित्यप्राप्तत्वात्। यत् तत्पदयोरैकार्थ्यात्। अत्रैव वाक्ये–'उच्चार्यमाणस्यैवंधर्मत्वात्' उच्चारणस्यैवं धर्मत्वात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरेतद्वाक्यव्याख्यानेनाम्बाकर्त्र्याम्। द्वितीयपाठे तु नाग्रिमग्रन्थेन सहास्य संगतिरिति अवधेयम्।

अत्रैव वाक्ये—'निबन्धनभूतं रूपान्तरम्' 'निबन्धनरूपान्तरम्' 'निबन्धनरूपम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अर्थसंगतिश्चाम्बाकर्त्री दर्शनेनावगंस्यते। द्वितीयपाठस्तु न युक्तः। रूपे निबन्धनत्वस्य विशेषणत्वेन विधेयत्व-प्रतीतेरौचित्यात्। समासे त्वेकार्थीभावेन न उद्देश्यविधेयभावप्रतीतिः।

किञ्च कारिकायां रूपमित्यस्य श्रवणात् तद्व्याख्यायां रूपान्तरमित्येव पाठो युक्तः। अत्रैव वाक्ये—'अन्यद् विविच्यते' 'अन्यत्प्रतिपिपत्स्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, कारिकायां 'विविच्यते' इत्येव पाठात्। 'प्रतिपिपत्स्यते' इत्यस्य विविच्यते इत्येतत्समानार्थकत्वाभावेन व्याख्यारूपत्वाभावाच्च। एतदग्रिमवाक्ये —'तदेव त्वभिधेयत्वात्' 'भेदवत्त्वमभिधेयत्वात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। वृषभदेवटीकायां 'तदेव तु' इति प्रतीकदर्शनाच्च। द्वितीयपाठे तु नार्थसंगतिः।

अत्रैवोद्धृते संग्रहवाक्ये—'तत्तु नित्यम्' 'तत्तुल्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। दर्शितात्रार्थे संगतिरम्बाकर्त्र्याम्। द्वितीयपाठे चार्थासंगतिर्दुष्परिहरा ॥ ६५ ॥

## प्राक्संज्ञिनाऽभिसंबन्धाद् इति कारिका ॥ ६६ ।

अत्र—'प्राक्संज्ञिताभिसंबन्धात्' इति पाठोऽपि क्वचिद् दृश्यते। स त्वपपाठः, अर्थासंगतेः। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अभिधेयान्तरप्रविवेकेऽप्यभिधानस्य' 'अभिधेयान्तरप्रविवेके ह्यभिधानस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिर्व्याख्यानेनाम्बाकर्त्र्याम्। हिपदस्य सार्थक्यन्तु नोपपद्यतेऽत्र कथञ्चिदिति हेयो द्वितीयः पाठः।

एतदग्रिमवाक्ये च यद्यपि—'स्वरूपाधिष्ठानञ्च' इत्येव पाठः सर्वत्रैवोपलभ्यते, तथाप्यत्र—'स्वरूपाधिष्ठानश्च' इति पाठो युक्तः प्रतिभाति, अर्थसंगतेः। दर्शिता चार्थसंगतिर्व्याख्यानेन वृषभदेवटीकायाम्। यथाश्रुतपाठे तु नपुंसकलिङ्गानुपपत्तिः। अम्बाकर्त्र्यान्तु—स्वरूपमधिष्ठायेति पाठ आश्रितः। तत्राधिष्ठाय इत्यस्याभिधायेत्यर्थ उपवर्णितः।

अस्मिन्नेव वाक्ये—'उपसर्जनीभूतस्वरूपार्थः शब्दः' 'उपसर्जनीभूतस्वरूपार्थशब्दः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, विशेष्यविशेषणयोरुद्देश्यविधेयभावस्य संप्रत्ययात्। द्वितीयपाठे तु समासे एकार्थीभावेन पृथगर्थोपस्थित्यभावात् न तस्य संप्रत्यय इति हेयः सः। अत्रैव वाक्ये—'शब्दोऽर्थान्तिरे वर्तते' 'शब्दान्तरे वर्तते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगतिरूपो दोषो दुरुद्धरः।

एतदग्रिमवाक्ये—'यावत्संज्ञिना तु संज्ञा न संबद्धा' 'यावत्संज्ञिना संबद्धा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः, न वा विवक्षितार्थप्रतीतिरिति हेयः सः।

एतदग्रिमवाक्ये—व्यतिरेकहेतुत्वादित्यारभ्य प्रातिपदिकार्थेत्येतत्पर्यन्तः पाठो नोपलभ्यते। तत्र लिपिकरस्यापेक्षा, कृमिवेधो वा कारणम्। तं पाठं विनाऽर्थासंगतेः ॥ ६६ ॥

## तत्रार्थवत्त्वात् प्रथमा इति कारिका ॥ ६७ ।

अस्यास्तृतीये पादे—'अस्येति व्यतिरेकश्च' 'यस्येति व्यतिरेकश्च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्य—आदैच्समुदायस्य वृद्धिशब्दः संज्ञा इति व्यतिरेकस्यात्र विवक्षितत्वात्। यस्येति पाठे तु तस्येति पदापेक्षा स्यात्। न च तत्र विधेयान्तरं किञ्चित् संभवति तस्य किं स्यादित्याकाङ्क्षाया अनिवृत्तेरिति विचिन्त्य यस्येति पाठो हेयः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'शब्दार्थानां स्वरूपेणाधिष्ठानभूतेन' इति पाठो यद्यप्युपलभ्यते तथापि—'शब्दानां स्वरूपेणाधिष्ठानभूतेन' इति पाठ एव संशोध्य ग्राह्यः। यथाश्रुतपाठेऽर्थासंगतेः। दर्शिता च संशोधिते पाठे व्याख्याने-नार्थसंगतिरम्बाकर्त्र्याम्। अत्रैवाग्रे-'तद्वतां संज्ञाशब्देन योगात्' 'संज्ञाशब्देन योगात्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—तद्वतामित्यस्य अर्थ-वतामित्यर्थः। तच्च संज्ञिशब्दानामित्यस्य विशेषणम्। संज्ञिशब्दानामर्थवत्त्वाभावे च प्रातिपदिकत्वाभावात्तेभ्यः षष्ठी न स्यात्। एवञ्च तद्वतामिति पाठ उपादेय एव।

यद्यपि तद्वता इति तृतीयान्तपाठो वृषभदेवटीकायां दृश्यते, तथापि तद्वतामिति षष्ठ्यन्त पाठ एवोपादेयः। स्वरूपाभिन्नेनार्थवता इत्यनेन तृतीयान्ततत्पाठस्य वैयर्थ्यात्। षष्ठ्यन्तपाठे तु संज्ञिशब्दानामित्येतद् विशेषणत्वं संभवतीति सार्थक्यं षष्ठ्यन्तपाठस्य। अत्रैव वाक्ये-'संज्ञिशब्दानामुपजायते' 'संज्ञाशब्दानामुपजायते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु संज्ञाशब्दानां संज्ञाशब्देन योगात् इत्यर्थो न प्रकृते विवक्षित.। आदैच् वृद्धिसंज्ञं भवति, आदैचां वृद्धिसंज्ञा भवति इत्यर्थद्वयस्यैव प्रकृते विवक्षितत्वात्। नह्यत्रार्थे संज्ञाशब्दानां संज्ञाशब्देन योगो भवति इति॥ ६७॥

## स्वं रूपमिति कैश्चित्तु इति कारिका॥ ६८।

अस्या द्वितीये पादे—'व्यक्तिः संज्ञोपदिश्यते' 'व्यक्तेः संज्ञोपदिश्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'व्यक्तिः संज्ञा। कस्य संज्ञिन इत्याह—जाते-रिति' इति वृषभदेवटीकादर्शनेनाद्यपाठस्यौचित्यप्रतीतेः। जातेरिति तृतीयपादस्यादौ पाठाच्च। 'व्यक्तिसंज्ञा' इति समस्तपाठोऽपि अयुक्त एव। उद्देश्यविधेयभावाप्रतीतेः।

अस्या एव तृतीये पादे 'जातेः' इति, 'व्यक्तेः' इति, पाठद्वयं दृश्यते। 'व्यक्तौ' इति तृतीयोऽपि पाठः क्वचिद् दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्यां वृषभदेवटीकायाञ्च। व्यक्तेरिति पाठो व्यक्ताविति च पाठश्च पूर्वपरग्रन्थप्रातिकूल्येन हेयः।

अस्या एव तृतीयपादे एव-'संसृष्टा' 'संस्पृष्टा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, संसर्गरूपस्य विवक्षितस्यार्थस्य प्रतीतेः। द्वितीयपाठे संस्पर्शः संयोगः, स च न जातिव्यक्त्योः संभवति, द्रव्ययोरेव संयोग इति नियमाद् इति द्वितीयपाठो हेयः। संस्पृष्टापदस्य संसृष्टायां लक्षणास्वीकारे तु सैव दोषः॥ ६८॥

## संज्ञिनीं व्यक्तिमिच्छन्ति इति कारिका॥ ६९।

अस्या द्वितीये पादे—'सूत्रे ग्राह्याम्' 'सूत्रग्राह्याम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। न हि संज्ञिनी व्यक्तिः सूत्रग्राह्या, किन्तर्हि, संज्ञाशब्दग्राह्या इति।

अस्या एव चतुर्थे पादे—'प्रदेशेषूपतिष्ठते' 'प्रदेशेष्ववतिष्ठते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। जातिस्फोटेन व्यक्तिस्फोटेन वा स्वस्वार्थस्योपस्थितेरेवाभ्युपगमात्। अत एवावस्थितिरूपोऽर्थो न विवक्षितो न च प्रकृतिवाक्यानुकूल इति हेयः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ समुद्धृते वृत्तिकारवाक्ये–'शब्दस्य ग्राह्यं द्योत्यं प्रत्याय्यम्' इति, 'शब्दस्य प्रत्याय्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, पूर्वस्मिन् पक्षे ग्राहकम्–द्योतकम्, प्रत्यायकमिति पाठदर्शनादत्रापि तदानुगुण्येन ग्राह्यं द्योत्यं प्रत्याय्यमिति पाठस्यैवौचित्यप्रतीतेः।

अत्रैवाग्रे—'व्यक्तिरेव हि गौः। 'व्यक्तिरेव गौः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे—'गुण एव हि नीलः' इति वाक्ये हिशब्ददर्शनेन अत्रापि हिशब्दपाठस्यैव शब्दस्वारस्यसिद्धत्वात्। वृषभदेवटीकायाम्—'व्यक्तिरेव हि इति' इति प्रतीकदर्शनाच्च।

एतदग्रिमवाक्ये—'आकृतेस्त्वकृतसमवायानामपि' 'आकृतेस्स्वकृतसमवायानामपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, वृषभदेवटीकायाम्—'आकृतेस्तु इति' 'अकृतसमवायानाम् इति' इति च प्रतीकद्वयदर्शनात्।

अत्रैवाग्रिमवाक्ये—'एतद्धि 'एतद्धि तस्याः' 'एतावद्धि तस्याः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिताचार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु न युक्तः। परिमाणस्य प्रकृतवाक्यार्थेऽनुपयोगात्।

अत्रैवाग्रिमवाक्ये—'जातौ प्रतिलब्धस्वरूपाः' 'जातौ प्रतिबद्धस्वरूपाः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। प्रथमपाठे तु न कथमप्यर्थसङ्गतिः। अत्रैवाग्रिमवाक्ये—'सर्वत्रैव हि निमित्तान्निमित्तवत्यर्थे निमित्तस्वरूपः' 'सर्वत्रैव हि निमित्तवत्यर्थे निमित्तस्वरूपः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु हेतोरनुपादानाद् न्यूनता।

अत्रैवाग्रिमवाक्ये—'शब्दप्रत्ययावेकदेशसारूप्येण' 'शब्दप्रत्यया एकदेशसारूप्येण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, स्फुटार्थप्रमितेः। द्वितीयपाठस्तु भ्रामकत्वात्संशायकत्वाच्चायुक्तः। अत्रैवाग्रिमवाक्ये—'तथा च स्वं रूपमिति' 'तथा च स्वरूपमिति' पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। आद्यपाठस्यैव सूत्रे दर्शनात्, अर्थसङ्गतेश्च। द्वितीयपाठस्तु एतद्हेतुद्वयाभावादयुक्तः।

अत्रैवाग्रे—'अर्थवतो रूपार्थसमुदायस्य' 'यत्तद्रूपार्थसमुदायस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। यद्यपि द्वितीयपाठेऽपि 'रूपमात्रमेकदेशो यत्तद्रूपार्थसमुदायस्य संज्ञा इत्येवमर्थसङ्गतिः संभवति, तथापि अस्मिन् पाठे आवश्यकस्य अर्थवत इत्यस्य परित्यागः, अनावश्यकयोर्यत्तत्पदयोरुपादानञ्चेति अवधेयम्।

अत्रैव वाक्ये—'सामान्यविशेषादिशक्तियुक्तस्य' 'सामान्यविरोधादिशक्तियुक्तस्य' इति पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसङ्गतिः।

अत्रैवाग्रिमवाक्ये—'शक्तिभिर्भिन्नः सार्थकः' 'शक्तिभिः सार्थकः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। तथाहि-भिन्न इत्यस्य व्यावृत्त इत्यर्थः। विशिष्ट इति तु फलितार्थः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु शक्तिभिरिति वैशिष्ट्यार्थे तृतीया वा, सार्थकपदार्थप्रयोजिका वा, ग्राहकपदार्थे करणं वेति बहुधा संशयसंभवात्, स न युक्तः। अत्रैवाग्रे—'अस्ति भेदव्यपदेशव्यवहारः' अस्ति भेदव्यपदेशः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। प्रथमपाठे तु व्यपदेशव्यवहारपदयोरन्यतरस्यार्थपुनरुक्तिः।

अत्रैवाग्रे—'अवच्छेदेनोपग्रहे' 'अविच्छेदेनोपग्रहे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसङ्गतिरित्यवधेयम्। वृषभदेवटीकायामपि—अवच्छेदेन इति प्रतीकमुपादाय 'व्यावृत्तेन रूपेण' इति व्याख्यादर्शनात्, प्रथमपाठस्यैव युक्तत्वं प्रतीयते।

अस्मिन्नेव वाक्ये—'वर्तते' इति, 'वगते' इति, 'गते' इति च पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिर्व्याख्यानेनाम्बाकर्त्र्याम्। द्वितीयतृतीयपाठयोस्तु न कथमप्यर्थसङ्गतिः। अत्रैवाग्रिमवाक्ये—'दण्डजातियोगेन' 'जातियोगेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अयं दण्ड इति वाक्ये जातिविशेषनिर्देशात्। अत्रैवाग्रे-'शब्दशब्देन तु' 'शब्दश्रुत्या तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शब्दपदस्यैकार्थ्येनासंदिग्धार्थकत्वात्। तद्वैपरीत्येन श्रुतिपदस्य नानार्थकत्वेनार्थसंदेहहेतुत्वाद् द्वितीयपाठो न युक्तः।

अत्रैवाग्रिमवाक्ये—'तत्र शब्दान्तरार्थः शब्दान्तरार्थस्य' 'तत्र शब्दान्तरार्थस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु कर्तुरनिर्देशात् वाक्यस्य साकाङ्क्षत्वेन निराकाङ्क्षं वाक्यार्थाप्रतिपत्तिरिति हेयः सः।

अत्रैवाग्रिमवाक्ये—'प्रसक्तानुप्रसक्तविचारणाप्रसङ्गनिवृत्त्यर्थम्' 'प्रसक्तानुप्रसक्तमविचारणाप्रसङ्गनिवृत्त्यर्थम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु लेखकप्रमाद एव बुद्धिमध्यमध्यास्ते, न तु कथञ्चिदप्यर्थसङ्गतिः। अत्रैव वाक्ये—'स्वं रूपसूत्रमतभेदाः' 'स्वरूपमात्रभेदाः इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिर्व्याख्यानेनाम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथञ्चिदप्यर्थसंगतिः॥ ६८॥

## कार्यत्वे नित्यतायां वा इति कारिका ॥ ७० ।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'अत्यन्तमुख्यमेकत्वम्, 'अत्यन्तमेकत्वम्' 'अत्यन्तमेव मुख्यमेकत्वम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु न युक्तः, मुख्यपदस्यावश्यकस्यानुपादानात्। मुख्यपदस्यावश्यकत्वन्तु अग्रे—'एकत्वं प्रकल्पयति' इति एकत्वप्रकल्पनस्य वक्ष्यमाणत्वात्। तृतीयपाठस्यायुक्तत्वन्तु अनावश्यकस्यैव पदस्योपपादानात्।

अत्रैवाग्रे—'सत्ताकृतिजलबिम्बदर्शनवत्' 'सत्ताकृदितिजलबिम्बदर्शनवत्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चैतद् व्याख्यानेनार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु न युक्तः। कथञ्चिदप्यर्थसङ्गत्यभावात्। अत्रैवाग्रे—'अत्यन्तनानात्वम्' 'अत्यन्तभेदेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अभ्युपगम्यते इत्यस्य कर्मत्वसंभवात्। द्वितीयपाठे तु न तस्य तत्संभवः। न वाऽन्यत्र तस्यान्वयसंभव इति हेयः सः ॥ ७० ॥

## पदभेदेऽपि वर्णानाम् इति कारिका ॥ ७१ ।

अत्र—'पदे भेदेऽपि वर्णानाम्' इति पाठोऽपि क्वचिदुपलभ्यते। स तु न युक्तः। काकाक्षिन्यायेन देहलीदीपकन्यायेन वा वर्णानामित्यस्योभयत्रान्वयापत्तेः। तथा सति च व्याघातः स्यात्। किञ्च वृषभदेवटीकायाम्—'पदभेदेऽपि' इति पाठ एव प्रतीकरूपेणोपलभ्यते। अस्या एव कारिकायाश्चतुर्थे पादे—'भिन्नेष्वप्युपलभ्यते' 'भिन्नेष्वप्युपपद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, उपलम्भे सति हेतोरनपेक्षणेन तदनिर्देशेऽपि अदोषात्। द्वितीयपाठे तु उपपत्तौ हेतुरपेक्षितः स तु नात्र निर्दिष्ट इति तदाकाङ्क्षाया अप्रशमात् स पाठो हेयः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'देशपृथक्त्वे भेदरूपेण' 'देशपृथक्भेदरूपेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, देशपृथक्त्वे सति तत्प्रयुक्तेन भेदरूपेण प्रत्यवभासमान इत्येवमर्थसङ्गतेः। द्वितीयपाठे तु पृथक्त्वभेदपदयोरेकार्थकत्वेनान्यतरवैयर्थ्यं स्पष्टमेव।

अत्रैवाग्रिमवाक्ये—'गौरक्षः' इति, 'गौरश्व' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। गोपदस्य नानार्थकत्वेन तत्समभिव्याहृतस्याक्षपदस्यापि नानार्थकस्यैव पाठौचित्यात्। इदं हि अर्थभेदेऽपि नामपदमेकमित्यस्योदाहरणमिति नानार्थकपदोपादानस्यैवौचित्यात्। अत्रैवाग्रिमवाक्ये—'इत्येवं प्रकारं पदम्' 'इत्येवं प्रकारपदम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तत्र पाठे नपुंसकत्वदृष्ट्या बहुव्रीहित्वलाभेनार्थसङ्गतेः। द्वितीयपाठे तु बहुव्रीहिलिङ्गाभावेन तदनिर्णयेऽर्थसन्देहः स्यादेवेति स पाठो न युक्तः ॥ ७१ ॥

## न वर्णव्यतिरेकेण इति कारिका ॥ ७२ ।

'तद्वर्णव्यतिरेकेण' इति पाठोऽपि क्वचिद् दृश्यते । स तु न युक्तः, न वर्णव्यतिरेकेण इति वृषभदेवटीकायां प्रतीकदर्शनात् । यद्यपि—तद्वर्णव्यतिरेकेण पदमन्यन्न विद्यते इत्येवं पूर्वार्धपाठेऽर्थसङ्गत्याऽयमपि पाठः समर्थयितुं शक्यते । तथापि अयं पाठो न युक्तः । तद् इत्यस्य हेत्वर्थकत्वेन पूर्वार्धवाक्यार्थे एव हेतुत्वसंभवात् । वर्णा एव पदमित्यर्थस्यैव प्रागुक्तत्वात् । उत्तरार्धन्तु तदाऽहेतुकं प्रतिज्ञामात्रं स्यात् । तद् इत्यस्यैवावृत्त्या उत्तरार्धेऽपि योजनया पूर्वार्धस्य उत्तरार्धं प्रति हेतुत्वं संभवति इति तु न वाच्यम् । आवृत्तौ गौरवात् । पूर्वपाठे तु 'अन्यच्च' इत्यत्र चो हेतौ । यतो वर्णव्यतिरेकेणान्यत् पदं न विद्यतेऽतो वाक्यञ्च—वाक्यमपि वर्णपदाभ्यां व्यतिरिक्तं किञ्चन न इति योजनया पूर्वार्धस्योत्तरार्धं प्रति हेतुत्वसंभवाद् इति ।

अस्या एव कारिकाया द्वितीये पादे—'पदमन्यच्च' 'पदमन्यन्न' 'पदमन्यत्र' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु अर्थासङ्गतिः प्रागुपदर्शितात्रैव । तृतीयपाठे तु अर्थासङ्गतिः स्फुटैव । अन्यत्र वर्णातिरिक्तस्य पदस्य निषेधेऽपि वाक्ये वर्णातिरिक्तस्य पदस्य सत्त्वप्रसङ्गात् ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'तुरीयतुरीयकम्' इति, 'तुरीयकम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, वृषभदेवटीकायां तस्यैव व्याख्यानेन समादृतत्वात्, अर्थसङ्गतेश्च । दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम् ।

अत्रैवाग्रे—'उपगृहीतार्थः' 'उपकृतार्थः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । उपगृहीत इत्यग्रे पाठेन अत्रापि उपगृहीतार्थ इति पाठस्यैवौचित्याच्च । यद्यपि वृषभदेवटीकायाम्—'उपकृतार्थः' इति प्रतीकमुपादाय—अर्थेषु कृतावधिरिति व्याख्यातम्' तथापि अस्य व्याख्यानस्य कयापि व्युत्पत्त्याऽलाभेन अस्यार्थस्य शब्देऽसंभवेन प्रकृतवाक्यार्थानुपयोगेन चायं पाठो हेयः ॥ ७२ ॥

## पदे न वर्णा विद्यन्ते इति कारिका ॥ ७३ ।

अस्या द्वितीये पादे—'वर्णेष्ववयवा न च' इति, 'वर्णेष्ववयवा इव' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, स्फुटार्थप्रतिपत्तेः । द्वितीयपाठे तु वर्णेषु अवयवा यथा न सन्ति इति अर्थद्वयस्याविशेषेण संदेह इत्ययुक्तता तस्य । किञ्च अकारादिषु वर्णेषु अवयवभावाभावयोः संदेहे वर्णेष्ववयवा इवेति दृष्टान्तानुपपत्तिः । निश्चितसाध्यवत एव सपक्षत्वाभ्युपगमात् ।

वैयाकरणभूषणसारे कौण्डभट्टेन क्रियमाणो द्वितीयपाठसमादरस्तु अत एवोपेक्ष्यः । उपक्रमोपसंहारयोर्नकारदर्शनेन मध्येऽपि नकारपाठस्यैवौचित्यात् । अन्यथा प्रक्रमभङ्गात् ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'वर्णविभागप्रतिपत्त्युपाया' 'वर्णप्रतिपत्त्युपाया' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। किञ्च पदप्रतिपत्तौ वर्णप्रतिपत्तेरुपायत्वे लाघवम्। वर्णविभागप्रतिपत्तेरुपायत्वे गौरवम्, अन्यथासिद्धिश्च।

अत्रैवाग्रिमवाक्ये—'तत्त्वक्रमम्' 'तत्तु लब्धक्रमपूर्वापरम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, 'अक्रमम्' इति वृषभदेवटीकायां प्रतीकदर्शनात्, अर्थसंगतेश्च। द्वितीयपाठस्तु न युक्तः, अर्थासंगतेः स्फुटत्वात्। किञ्चास्मिन्नेव वाक्ये-'एकमभेद्यम् एकात्मा' इत्यग्रिमग्रन्थानुरोधादपि आद्यपाठ एव युक्तः। अत्रैवाग्रे—'अतत्त्वभूता' इत्यारभ्य 'वाक्यादभेद्याद्' इत्यन्तः पाठः क्वचिन्न दृश्यते, गलितत्वात्, किन्तु स पाठ आवश्यकः, पूर्वापरवाक्यार्थानुरोधात्। अत्रैव—'वाक्यादभेद्याद्' इत्यस्य स्थाने—'वाक्यभेदाद्या' इति पाठः। स तु न युक्तः, अर्थासंगतेः॥ ७३॥

## भिन्नं दर्शनमाश्रित्य इति कारिका ॥ ७४।

अस्याश्चतुर्थे पादे—'तत्रान्येषाम्' 'तत्रैतेषाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः।

अस्या एव व्याख्यानावसरे स्वोपज्ञवृत्तौ—'एकेषाम्' 'अन्येषाम्' इति पदद्वयदर्शनात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'एकश्रुतित्वेऽप्यनेकशब्दत्वम्' 'एकश्रुतित्वेऽपि अनेकश्रुतित्वम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, श्रुतिशब्दस्य भावक्तिन्नन्तस्य श्रवणार्थकत्वेनार्थसंगतेः। द्वितीयपाठे तु व्याघातो दोषः॥ ७४॥

## स्फोटस्याभिन्नकालस्य इति कारिका ॥ ७५।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ -'कालपरिमाणवृत्तेः' 'कालवृत्तेः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। वृषभदेवटीकासंवादाच्च। अपेक्षिताधिकार्थसंग्राहकत्वाच्च।

अत्रैवानन्तरवाक्ये—'ध्वनिना तु संसृष्टं स्फोटस्य स्वरूपम्' 'ध्वनिना तु संसृष्टस्य स्फोटस्य स्वरूपम्' 'ध्वनिना तु संसृष्टं तस्य स्फोटस्य स्वरूपम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। संसृष्टपदार्थस्य प्रधानीभूतस्वरूपपदार्थे विशेषणत्वसंभवे तद्विशेषणीभूतस्फोटपदार्थे विशेषणत्वस्यानौचित्यात्। अत एव द्वितीयपाठो न युक्तः, न ह्युपाधेरुपाधिर्भवति विशेषणस्य च विशेषणमिति न्यायात्। तृतीयपाठोऽपि न युक्तः। तत्र तस्येति पदस्य व्यर्थत्वात्।

अत्रैवाग्रिमवाक्ये—'प्रकल्पितभेदाः' 'परिकल्पितभेदाः' इतिपाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, प्रकृष्टकल्पनाविषयत्वरूपस्य प्रकल्पितत्वस्यात्र विवक्षितत्वात्। सर्वतः कल्पनाविषयत्वरूपस्य परिकल्पितत्वस्यात्रानन्वयित्वादविवक्षितत्वाच्च॥७५॥

**स्वभावभेदान्नित्यत्वे इति कारिका ।। ७६ ।**

अस्या अवतारणिकायां स्वोपज्ञवृत्तौ—'कालभेदहेतुः' 'कालहेतुः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु न युक्तः, ध्वनेः कालभेद-हेतुत्वेऽपि कालहेतुत्वाभावाद् अर्थासंगतेः । पूर्वकारिकाव्याख्याने स्वोपज्ञवृत्तौ वृषभ-देवटीकायाञ्च—ध्वनेः कालभेदहेतुत्वस्यैव व्यवस्थापनाच्च ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ– 'प्रचिततरं कालमुपलभ्यते' 'प्रचितं कालमुपलभ्यते' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, 'पुनः पुनरविच्छेदेन' इति पूर्वग्रन्थानुरोधात् । अत्रैवोद्धृते संग्रहवाक्ये—'शब्दस्य ग्रहणे' 'वर्णस्य ग्रहणे' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, पदवाक्ययोरपि संग्राहकत्वात् । तदभावादेव द्वितीयपाठो न युक्तः ।

अस्यैव तृतीयपादे—'स्थितिभेदे' 'वृत्तिभेदे' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । वैकृतस्य ध्वनेर्वृत्तिभेदे कारणत्वेन स्थितिभेदेऽन्यथा-सिद्धत्वात् । अत एवाग्रिमकारिकायाम्—'वृत्तिभेदं तु वैकृताः । ध्वनयः समुपोहन्ते' इति वक्ष्यते । यद्यपि अम्बाकर्त्र्याम् स्थितिभेदे इति पाठ एव व्याख्यातस्तथापि तत्रापि वृत्तिभेदे इति पाठ एव समादरः ।

अत एव तत्रैवाग्रे—'तदेवं वृत्तिभेदे स्थिते' इत्युक्तम् । तदग्रे तत्रैव—तुल्य-मात्राविभागपरिमाणानि गर्भादिवाक्यानि' 'तुल्यमात्राविभागपरिमाणानि' इतःपरं गलितान्यक्षराणि' 'तुल्यमात्राविभागपरिमाणात्पर्वन् युगादिवाक्यानि' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिर्व्याख्यानेनाम्बा-कर्त्र्याम् । द्वितीयपाठे तु तस्येत्यस्य निमित्तविशेषणानि व्यक्तिविशेषणत्वं स्यात् । तच्च—न ह्युपाधेरुपाधिर्भवति विशेषणस्य च विशेषणमिति न्यायविरुद्धम् ॥ ७६ ॥

**शब्दस्योर्ध्वमभिव्यक्तेः इति कारिका ।। ७७ ।**

अस्या द्वितीयपादे—'वृत्तिभेदं तु वैकृताः' 'वृत्तिभेदे तु वैकृताः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठस्तु हेलाराज-वादिदेवसूरि-वृषभदेवानाममंमतत्वादुपेक्ष्यः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अवतिष्ठमानस्तु ग्रहणप्रबन्धहेतुर्भवति' 'अवतिष्ठमानस्तु ग्रहणवारणहेतुर्भवति' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयस्तु अपपाठः । विरुद्धार्थप्रतिपादकत्वात् । तत्रैवाग्रिमवाक्ये—'विषयव्यक्तिबलाधानादुपसंहरति' 'विषयव्यक्तिबाधानीयामुपसंहरति' इति पाठद्वयं दृश्यते । तदिदं पाठद्वयमपि न समञ्जसम्, अर्थासंगतेः । किन्तु—'विषयाभिव्यक्तिबलाधानादुपसंहरति' इति टीका-नुसारी पाठ एव शोधितः साधुः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् ।

यद्यपि क्वचित्पुस्तके--'विषयाभिव्यक्तिबला' इत्यत आरभ्य अनन्तरपरे श्लोके विवरणे ( स्वोपज्ञवृत्तौ ) 'श्लोके' इति यावत् अत्र पुस्तके दृश्यमानः पाठ उपेक्षितः, तथापि स युक्तः। तं विना पूर्वापरग्रन्थासंगतेः।

अत्रैवाग्रे—'कालभेदव्यवहारं नावतरति' 'कालभेदव्यवहारो नावतरति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, तत्र पाठे स्फोटात्मा इति प्रथमान्तपदस्यानन्वयापत्तेः। प्रथमपाठे तु स 'नावतरति' इत्यत्र कर्तृतयान्वेति इति ॥ ७७ ॥

## इन्द्रियस्यैव संस्कार इति कारिका ॥ ७८ ।

अस्या द्वितीये पादे—'शब्दस्यैवोभयस्य वा' 'विषयस्यैवोभयस्य वा' इति इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, छन्दःशुद्धेः। द्वितीयपाठे तु नवाक्षरत्वेनच्छन्दो दोषः ॥ ७८ ॥

## इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिरिति कारिका ॥ ७९ ।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'विषयसंस्कारस्तु' 'विषयसंसर्गात्तु' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु दृशिक्रियाकर्मताकस्येत्याकाङ्क्षाऽपरिसमाप्तैव स्यात् ॥ ७९ ॥

## चक्षुषः प्राप्यकारित्वे इति कारिका ॥ ८० ।

अत्र—'चक्षुषा प्राप्यकारित्वे' इति पाठोऽपि क्वचिद् दृश्यते। स चापपाठः। अस्मिन् पाठे हि चक्षुषः करणत्वेन प्राप्यकारित्वं कस्येत्याकाङ्क्षाऽपरिसमाप्तैव स्यात्। आत्मनस्तु विभुत्वेन निष्क्रियत्वेन च विषयं प्राप्यकारित्वं न संभवति। अस्या एव कारिकायाश्चतुर्थे पादे—'सक्रमो ध्वनेः' 'संक्रमो ध्वनेः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'येषामप्राप्यकारि' इत्यादिवाक्ये क्वचित्पुस्तके येषामिति पदं दृश्यते क्वचिन्न। तत्र तेषामिति पाठो युक्त एव। अग्रे तेषामिति निर्देशात्।

अत्रैवाग्रे—'नयनरश्म्यनुग्रहः क्रियते' 'नयनरश्म्योरनुग्रहः क्रियते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। योग्यतया नयनरश्मीनां बहुत्वप्रतीतिसंभवात्। द्वितीयपाठे तु नार्थसंगतिः। नयनरश्मीनां बहुत्वोपादानस्यैवौचित्यात् ॥ ८० ॥

## स्फोटरूपाविभागेन इति कारिका ॥ ८१ ।

अस्या द्वितीये पादे—'ध्वनेर्ग्रहणमिष्यते' 'द्वयोर्ग्रहणमिष्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'शब्देन संसृष्टो ध्वनिरुपाश्रयानुराग इव स्फटिकादीनामविभक्त उपलभ्यते' इति व्याख्यादर्शनात्।

अविभक्त एव स्फोटाद् ध्वनिर्गृह्यते इत्येके' इति वृषभदेवव्याख्यानुरोधाच्च। द्वितीयपाठे तु न कश्चन टीकानुग्रहो नाप्यर्थसंगतिरिति हेयः सः।

अस्या एव चतुर्थे पादे—'स्वतन्त्रोऽन्यैः प्रकल्पितः' 'स्वतन्त्रोऽन्यैः प्रकाशितः' 'स्वतन्त्रोऽन्यैः प्रकाशकः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिर्व्याख्यायामस्वाकत्र्याम्। 'केवलोऽपि ध्वनिः स्वतन्त्रवद्भाव्यते इत्यपरे' इति वृषभदेवटीकायामेतच्चतुर्थपादव्याख्यादर्शनेनापि आद्यपाठस्यैव समर्थनात्। भावनाप्रकल्पनयोरेकार्थकत्वौचित्यात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अथापरेऽभिव्यक्तिवादिनां त्रयो दर्शनभेदाः' 'अथाश्रयाभिव्यक्तिवादिनां त्रयोदर्शनभेदाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरस्वाकत्र्याम्। द्वितीयपाठे तु आश्रयपदासंगतिर्न कथमप्युद्धर्तुं शक्यते। अत्रैवाग्रे—'स्फोटरूपानवधारणे' 'स्फोटरूपावधारणे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, प्रकृतवाक्यार्थानुकूल्यात्। द्वितीयपाठस्तु प्रकृतवाक्यार्थविप्रतीप इत्युपेक्ष्यः॥ ८१॥

## यथाऽनुवाकः श्लोको वा इति कारिका॥ ८२।

अस्या द्वितीये पादे—'सोढत्वमुपगच्छति' 'स्फोटत्वमुपगच्छति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरस्वाकत्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः, नहि अनुवाकः श्लोको वाऽऽवृत्त्या स्फोटत्वमुपगच्छतीति वक्तुं शक्यते, युज्यते वा।

अस्या एव तृतीये पादे—'आवृत्त्या' 'आवृत्त्याम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। आवृत्तेः सोढत्वोपगमनक्रियायां करणत्वस्यैव संभवात्, तत्र तस्या अधिकरणत्वासंभवाच्च। अनुवाकः श्लोको वा सोढत्वोपगमनक्रियायाः कर्तृतया अधिकरणं, न तु आवृत्तिरित्यस्यार्थस्य स्फुटत्वात्। अस्या एव चतुर्थे पादे—'प्रत्यावृत्ति' 'प्रत्यावृत्त्या' 'प्रत्यावृत्तिर्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थौचित्येनाव्ययीभावसमासाभ्युपगमेन व्याकरणानुरोधेन तस्यैव पाठस्य साधुत्वात्।

अस्या अत्रैव पादे—'निरूप्यते' 'निविद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अन्त्याया बुद्धेः' 'अन्त्या बुद्धि' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, साधुत्वादर्थसंगतेश्च। द्वितीयपाठे तु न साधुत्वम्। पुंवद्भावेन अन्त्यबुद्धिमिति पाठस्यैव साधुत्वात्।

अत्रैवाग्रिमवाक्ये—'बुद्धावसंनिविष्टम्' 'बुद्धावसंनिकृष्टम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि–सर्वो हि वाह्योऽर्थोबुद्धिपरिणामरूपस्त्वाकारवृत्तिरूपेण

बुद्धिसंनिविष्ट एव बुद्धिगोचरो भवति नान्यथा। एवञ्चाद्यपाठ एवौचित्यम्। अर्थाकारवृत्तेर्बुद्धिसन्निविष्टत्वात्। बुद्धौ संनिकर्षस्तु बुद्धिधर्मत्वमनाप्तानामपि भवति, तत्र संनिवेशस्तु न तेषामिति शब्दस्वरूपस्य वृत्तिरूपेण बुद्धिधर्मत्वबोधनायाद्यपाठस्यैवौचित्यम् ॥ ८२ ॥

## प्रत्ययैरनुपाख्येयैः इति कारिका ॥ ८३ ।

अस्या द्वितीये पादे—'ग्रहणानुगुणैस्तथा' 'ग्रहणानुग्रहैस्तथा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। वृषभदेवटीकासंवादाच्च। द्वितीयपाठस्तु ग्रहणकृतानुग्रहैरित्यर्थविपयकविरुद्धमतिकारित्वान्न युक्तः। ग्रहणानुग्राहकैरित्यर्थस्तु नास्य कथञ्चिदपि संभवति। व्यधिकरणबहुव्रीहिस्तु पाठान्तरसंभवेन ग्राह्यः।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'अनुपाख्याकाराः, 'अनुपाख्येयाः' इति पाठद्वयं दृश्यते। अत्र द्वितीयपाठ एव युक्तः। नञ्समासाभ्युपगमेनोत्तरपदार्थप्राधान्यात्। प्रथमपाठे तु अन्यपदार्थप्राधान्यम्, व्यर्थस्याकारपदस्य प्रवेशेन गौरवञ्च ॥ ८३ ॥

## नादैराहितबीजायाम् इति कारिका ॥ ८४ ।

अस्या अवतरणिकायां स्वोपज्ञवृत्तौ—'आकारपरिग्रहक्रमः' 'आकारपरिग्रहः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अम्बाकर्त्रीदर्शनेनात्र पाठेऽर्थसंगतिः स्फुटं प्रतीयते। द्वितीयपाठस्तु अत्रत्यहरिव्याख्यावृषभदेवव्याख्ययोर्दर्शनेनासंगतः प्रतिभाति। तत्राकारपरिग्रहक्रमस्य तात्पर्यविषयत्वात्।

अस्या एव तृतीयपादे—'आवृत्तपरिपाकायाम्' 'आवृत्तिपरिपाकायाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृपभदेवटीकासंवादात्, अर्थसंगतेश्च। द्वितीयपाठे तु व्यधिकरणबहुव्रीहिः, स च संभवति समानाधिकरणसमाससंपाद्ये पाठेऽनुचितः। अस्या एव कारिकाया व्याख्याने स्वोपज्ञवृत्तौ—'यथोत्तरोत्कर्षेणाधीयन्ते' 'यथोत्तरोत्कर्षेणाभिधीयते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अत्रैव वाक्ये—'संस्कारभावनाबीजानि' 'संस्कारबीजानि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, पर्यायपरिचयार्थं भावनापदोपादानस्यौचित्यात् ॥ ८४ ॥

## अमतश्चान्तराले यान् इति कारिका ॥ ८५ ।

अस्या द्वितीये पादे—'यान् शब्दानस्तीति मन्यते' 'यान् शब्दान्नास्तीति मन्यते' 'यच्छब्दानस्तीति मन्यते' 'यःशब्दो नास्तीति मन्यते' तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः, असताम-

सत्त्वज्ञानस्य प्रतिपन्नशक्तित्वग्रहणोपायत्वकथनयोरसांगत्यात्। इतरत्पाठद्वयन्तु अन्तराले असत इति विशेषणानुपपत्त्या उपेक्ष्यम्।

अस्या एवोत्तरार्धे 'सा ग्रहणोपायः' 'तद्ग्रहणोपायः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु न कथञ्चिदप्यर्थसंगतिः। अस्या व्याख्याने स्वोपज्ञवृत्तौ—'परप्रदर्शितविषयग्राहिणाम्' 'फले दर्शितविषयग्राहिणाम्' 'फलप्रदर्शितविषयग्राहिणाम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थौचित्यात्। इतरस्मिन् पाठद्वयेऽर्थानौचित्यन्तु स्फुटमेव। अत्रैव—'प्रतिपत्तृणाम्' 'प्रतिवक्तृणाम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठस्य प्रकृतवाक्यार्थाननुगुणत्वात् प्रथमपाठ एव युक्तः।

यत्तु श्रीरामचन्द्राचार्येण व्याख्यातम्—'यच्छब्दम्' इति पाठः। परमार्थतोऽसतो गकारादेरन्तराले शाब्दं परमार्थशब्दविषयं ज्ञानमुदीयमानं नास्तीति लौकिकः प्रतिपत्ता मन्यते इति यत्, वर्णग्रहणञ्च यदभिमन्यते सा प्रतिपत्तृशक्तिरेव इति। तदयुक्तम्। एकस्यान्तरालासंभवात्। शाब्दमित्यस्य परमार्थशब्दविषयं ज्ञानमुदीयमानमित्यर्थे मानं विना लक्षणाया असम्भवात्। वर्णग्रहणञ्च यदभिमन्यते इत्यर्थस्य पद्यबाह्यत्वाच्च। तस्मादयुक्तोऽयं पाठः। यदपि तेनैव व्याख्यातम्। क्वचित्पाठः। यः शब्द इति। 'यः प्रतिपत्ताऽसतोऽन्तराले गकारादिषु वर्णेषु प्रतीयमानेषु तदतिरिक्तः शब्दो नास्तीति मन्यते तस्य प्रतिपत्तुरशक्तिः सेति पूर्ववत्' इति। एतदप्युपेक्ष्यम्। अस्यार्थस्य—'असतश्चान्तराले यः शब्दो नास्तीति मन्यते' इत्यस्मादनवगतेः।

यच्चाप्युक्तम्—'अन्यः पाठः। यान् शब्दानस्तीति। विवक्षातः प्रभृत्येकपदज्ञानात्प्राक् अन्तराले यान् असतः शब्दान् अस्तीति प्रतिपत्ता मन्यते। उद्देश्यैः शब्दैरस्तीति मननस्य प्रत्येकसम्बन्धादस्तीति एकवचनप्रयोगः। अस्तिक्षीरासमासवदस्तीत्यव्ययं वा। तेन सन्त इत्यर्थः' इति। सोऽयमसत्पाठाभिनिवेशः सत्यां पाठान्तरगतौ न युक्त इति बुधैरवधेयम्॥ ८५॥

## भेदानुकारो ज्ञानस्य इति कारिका॥ ८६।

अस्या द्वितीये पादे—'वाचश्चोपप्लवः' 'वाचकोपप्लवः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरस्माकर्याम्। द्वितीयपाठस्तु अर्थासंगत्याऽयुक्तः। ज्ञानस्य भेदानुकारो ध्रुवो वाचकोपप्लव इति योजनायां सर्वथाऽनौचित्यात्। अस्या एव तृतीये पादे—'क्रमोपसृष्टरूपा वाग्' इति, 'क्रमोपसृष्टरूपायाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगतिः स्पष्टैव।

अस्या व्याख्यायां स्वोपज्ञवृत्तौ—'अभिन्नमपि ज्ञानम्' 'अभिन्नमविज्ञानम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बा-

कर्त्र्याम् । द्वितीयपाठे तु अविज्ञानमित्यस्य विशेष्यानुपलब्धिः, प्रत्यवभासते इति क्रियापदस्य कर्तृपदानुपलब्धिश्च दोषः । अत्रैव—'सर्वज्ञेयरूपोपग्राहित्वाद् भेदरूपतया' 'सर्वज्ञेयरूपोपग्राहि तद्भेदरूपतया' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठे तु ज्ञानस्य भेदरूपतया प्रत्यवभासे सर्वज्ञेयरूपोपग्राहित्वस्य हेतुत्वं न शब्दतः प्रतीयेत ।

अत्रैवाग्रे—'अन्यभेदरूपोपग्रहेणोपप्लुतम्' 'अन्यभेदरूपोपग्रहणोपप्लुतम्' इति पाठद्वयं लभ्यते । तत्राद्यपाठ एव युक्तः, व्यासेऽसन्देहं हेतुत्वप्रतिपत्तेः । समासे तु विग्रहसन्देहेन तादृशोपग्रहस्य हेतुत्वेऽपि सन्देहः स्यात् । अत्रैव—'मेवेदं वाङ्मनसाख्यमविभागम्' 'भेवमवाङ्मनसाख्यमविभागम्' 'मेवेदमवाङ्मनसाख्यप्रविभागम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु नार्थसंगतिः । मनसाऽऽख्यानस्याप्रसक्त्या तन्निषेधस्यायुक्तत्वात् । तृतीयपाठेऽपि अयमेव दोषः ॥ ८६ ॥

## यथाऽऽद्यसंख्याग्रहणम् इति कारिका ॥ ८७ ।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'तासामुपादानम्' 'तेषामुपादनम्' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । परिच्छेदानां श्रुत्यपेक्षया प्राधान्यात् तेषामेव तत्पदेन सर्वनाम्ना परामर्शस्य युक्तत्वात् । प्रथमपाठे तु तत्पदेन स्त्रीलिङ्गेन श्रुतीनां परामर्शः । स तु न युक्तः, परिच्छेदापेक्षया श्रुतीनां विशेषणत्वेनाप्राधान्यात् ॥ ८७ ॥

## प्रत्येकं व्यञ्जका भिन्ना इति कारिका ॥ ८८ ।

अस्या द्वितीये पादे—'वर्णवाक्यपदेषु ये' इति, वर्णा वाक्यपदेषु ये' इति, पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, बहुवचनानुरोधात् । द्वितीयपाठे तु वाक्यपदयोरिति द्विवचनं स्यात् । किञ्च वर्णानामपि ध्वनिव्यङ्ग्यत्वेन व्यञ्जकत्वोक्तिर्न युज्यते इति । अस्या एव चतुर्थे पादे—'संकीर्णा इव' 'प्रकीर्णा इव' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, वृषभदेवटीकायाम्—'संकीर्णा इव' इति प्रतीकस्य, 'एकरूपा इव' इति व्याख्यायाश्च दर्शनात् ।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ— 'परस्परव्यावृत्तस्वभावाः' 'परस्पराव्यावृत्तस्वभावाः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु—''तथापि तेषामुपव्यञ्जनानां दुर्ज्ञानो भेदः'' इति ग्रन्थो नानुकूल्यं भजते । अत्रैवाग्रे—''गोगवयजात्युपव्यञ्जनभ्रमणरेचनादिकर्मसामान्यविशेषाश्रयवच्च'' इति पाठः प्रायेण उपलभ्यते । तथापि गोगवयजात्युपव्यञ्जन इति पदस्याग्रे वत्पदस्य प्रयोगः समुचितः । तथैवार्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् ।

अत्रैव वाक्ये—'श्रमणरेचनादिकर्मसामान्यविशेषाश्रयवचन' 'श्रमणरेचनादिकर्मसामान्यविशेषमाश्रयवचन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे न कथमप्यर्थसंगतिरिति सुधीभिरूह्यम्। अत्रैवाग्रे—'प्रविभक्तकार्याणामपि' 'प्रविविक्तकार्याणामपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ युक्तः। वृषभदेवटीकायां 'प्रविभक्तकार्याणाम्' इति प्रतीकस्य 'तच्च तेषां ध्वनीनां विभक्तम्'इति तद्व्याख्यानस्य दर्शनात्। अत्रैव वाक्ये—'संकरेणैव' 'संकरेणैव वा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वृषभदेवटीकायाम्—'संकरेणैव' इति प्रतीकदर्शनात्। पक्षद्वयाभावे वाशब्दप्रयोगस्यासंगतेश्च।

अत्रैवाग्रे—'मात्राविभागाध्यवसायः' 'मात्राविभागाद् व्यवसायाः' 'मात्राविभागस्त्ववसायाः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। इतरत्पाठद्वयन्तु सर्वथाऽसाधु, अर्थसंगतेः सर्वथाऽभावात्। प्रथमपाठे तु दर्शिताऽर्थसंगतिरस्माकमर्थाम् ॥ ८८ ॥

## यथैव दर्शनैः पूर्वैः इति कारिका ॥ ८९ ।

अस्याश्चतुर्थे पादे—'अन्यथैवाध्यवस्यति' 'अन्यथैव व्यवस्यति' 'अन्यथा प्रतिपद्यते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अध्यवसायस्य निर्णयरूपत्वेनार्थसंगतेः। तथाहि—अवसायः संशयस्य समाप्तिनिर्णयरूपं ज्ञानम्। अवपूर्वकात् षोऽन्तकर्मणि इत्यस्माद्धातोः कर्मणि घञ्। अधिरुपसर्गोऽनर्थकः, कुतोऽध्यागच्छति इत्यादाविव। व्यवसायस्तु—अवसायाद् विरुद्धं सामान्यधर्मप्रकारकं भ्रमप्रमासाधारणं ज्ञानम्। विशेषधर्मप्रकारकञ्च भ्रमरूपं ज्ञानमपि। क्वचित्तथाविधे प्रमारूपे ज्ञानेऽपि प्रयोगस्तु विशिष्टोऽवसाय इति व्युत्पत्त्या। एवञ्च व्यवसायपदं ज्ञानसामान्यपरम्। प्रतिपत्तिरपि ज्ञानसामान्यरूपैव। तथा च प्रकृते निर्णयस्यैवाभिप्रेतत्वात् प्रथमपाठ एव युक्तः, इतरत्पाठद्वयन्तु अतएवायुक्तम्।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'दूरादाकृतिमात्रोपलब्धौ' 'दूरादन्धकारे वाऽऽकृतिमात्रोपलब्धौ' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, 'दूरात्संतमसेऽपि वा' इति कारिकांशानुरोधात्। अत्रैवाग्रे—'प्रणिधानाभ्यासात् क्रमेण' 'प्रणिधानाक्रमेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, वृषभदेवटीकायाम्—'प्रणिधानाभ्यासात्' इति प्रतीकदर्शनात् तद्व्याख्यादर्शनाच्च। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अत्रैवाग्रे—'अपवरकादीन्' 'नरकादीन्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु न कथमप्यर्थसंगतिः॥ ८९ ॥

## व्यज्यमाने तथा वाक्ये इति कारिका ॥ ९० ।

अस्या एव चतुर्थे पादे—'पूर्वं बुद्धिः प्रवर्तते' 'पूर्वबुद्धिः प्रवर्तते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव यक्तः। पूर्वमित्यस्य पूर्वकालपरत्वेनार्थसंगतेः। दर्शिता

चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। पूर्वबुद्धेर्भागावग्रहरूपेण प्रवर्तमानत्वाभावात्। अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'समुत्थाप्यमाना' 'संस्थाप्यमाना' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तोऽर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। ध्वनीनां समुत्पादस्याप्रतीतेः।

अत्रैवाग्रे—बुद्धि प्रवर्तयन्ति' 'बुद्धि पूर्वं प्रवर्तयन्ति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु स्वस्मात् पूर्वमिति विरुद्धबुद्धि-कारित्वे नार्थासंगतिः। बुद्धि प्रवर्तयन्ति इत्यतोऽग्रे—'ततः प्रणिधानादिना वास्तवम-खण्डमेव बुद्ध्या विषयीकुर्वन्ति' इति-अधिकः पाठः क्वचिद् दृश्यते। स तु अयुक्तः, बुद्ध्याऽखण्डपदवाक्यसाक्षात्कारस्यानुभवविरुद्धत्वात् ॥ ९० ॥

## यथानुपूर्वीनियम इति कारिका ॥ ९१ ।

अस्याः व्याख्यायां स्वोपज्ञवृत्तौ—'मण्डकादिभिरवस्थाविशेषैः' 'मण्डक-निलीनकोत्तरकत्वैरवस्थाविशेषैः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। व्याख्यासापेक्षलेखस्य वृत्तिकारस्वभावसिद्धत्वात्। अत एवाग्रेऽपि—'नालाङ्कुरादिभिः' इति व्याख्यासापेक्ष एव निर्देशः कृतः, न तु प्रतिपदपाठः। वृषभदेवटीकायामपि अत्र मण्डकादिपदमेव दृश्यते। अत्र पाठे लाघवमपि।

अत्रैवाग्रे—'युज्यमानं यथायथम्' 'विज्ञानं यथायथम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। 'नियतक्रमपरिणामभागाकारप्रत्यवभासमात्रा युक्ताः' नियतक्रम-परिणामभागाकारप्रत्यवभासमात्राः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसङ्गतिरिति विभावनीयं सुधीभिः ॥ ९१ ॥

## भागवत्स्वपि तेष्वेव इति कारिका ॥ ९२ ।

अत्र—'एव' इत्यस्य स्थाने 'एवम्' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, भागवत्सु स्फोटेषु स्वरूपभेदहेतोः पकारस्य प्रागनिर्देशात्। एवकारं विना 'ध्वनेः क्रमादेव रूपभेदः' इत्यर्थस्यालाभाच्च।

अस्या एव चतुर्थे पादे—'भागभेदप्रकल्पनम्' 'भागभेदप्रकल्पना' इति पाठद्वयं दृश्यते। तत्र प्रकल्पनम् इति शुद्धस्य प्रपूर्वकस्य क्लृपेर्ल्युटि रूपम्। प्रकल्पना इति तु तस्यैव ण्यन्तस्य युचि रूपम्। तत्र प्रकल्पनं भागभेदप्रसिद्धिरूपा बुद्धिः। तस्या एवाभ्युपायत्वं निर्भागस्फोटस्वरूपप्रतिपत्तौ। अत एवोक्तं स्वोपज्ञवृत्तौ—'निर्भागेषु वा भागभेदप्रकल्पनाकृतशक्तिविशेषपरिग्रहा बुद्धयो यथोपायं प्रतिपद्यन्ते तदनन्तर-श्लोकेषु वर्णितम्'' इति। तदेवमत्राद्यपाठ एव युक्तः। द्वितीयपाठे तु प्रकल्पना तत्तदाहार्यबुद्धेरनुकूला बोद्धुरिच्छारूपो व्यापारः, न चासौ स्वोपज्ञवृत्तावभ्युपायत्वेन निर्दिष्ट इति हेयः स पाठः।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'क्रमेणाव्यपदेश्य' 'क्रमेण व्यपदेश्य' 'स्वरूपानवधारणम्', 'पदस्वरूपानवधारणम्' 'चान्त्यस्य व्यक्तरूपोपग्राहिण:' 'चान्त्यस्त-स्वव्यक्तरूपोपग्राहिण:' इति पाठाद्वयमेकस्मिन्नेव वाक्ये समुपलभ्यते । तत्र प्रथमे पाठद्वये प्रथमपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्याख्यायाम् । द्वितीय-पाठे तु नार्थसंगतिः । द्वितीयेऽपि पाठद्वये प्रथमपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्याख्यायाम् । द्वितीयद्वितीये तु अर्थसंगतावपि अर्थान्तरस्य पदपदस्योपन्यासे गौरवम् । तृतीयेऽपि पाठद्वये प्रथमपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्याख्यायाम् । तृतीयद्वितीये तु नार्थसंगतिरिति स्पष्टमेव ।

अत्रैवाग्रे—'शब्देऽभिव्यञ्जकध्वनिक्रमकृतो' 'शब्देऽन्येनापि । व्यञ्जकध्वनिक्रमकृतो' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्याख्यायाम् । द्वितीयपाठे तु नार्थसंगतिः प्रत्युत विरुद्धार्थप्रतिपत्तिरिति स्पष्टमेव प्रतीयते ।

अत्रैवाग्रे—'मण्डूकादि-वसा संबद्धप्रदीपाभिव्यक्तेषु' 'मण्डूकादिरूपसंबन्धप्रदीपाभि व्यक्तेषु' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगति-रस्माकव्याख्यायाम् । द्वितीयपाठे तु न कथमप्यर्थसंगतिः । अत्रैवाग्रे—'तदनन्तरश्लोकेषु' 'तदनन्तरेषु श्लोकेषु' 'वर्णितम्' 'दर्शितम्' इति पाठचतुष्टयमुपलभ्यते । तत्र प्रथमे पाठद्वये प्रथमपाठ एव युक्तः । समासे एकार्थीभावरूपसामर्थ्येन पदजन्योपस्थित्यैकत्वेन च शक्तिज्ञानोपस्थित्योः उपस्थितिशाब्दबोधयोश्च कार्यकारणभावे ऐक्यात् । व्यासे तु तत्र तत्र कार्यकारणभावे नानात्वेन गौरवात् । द्वितीयेऽपि पाठद्वये प्रथमपाठ एव युक्तः । द्वितीयपाठे दर्शितपदस्य वर्णितार्थकत्वेन लक्षणाऽभ्युपगमस्यैव दोषत्वात् । दर्शितपदस्य शक्यार्थपरिग्रहस्तु नात्र, अर्थासंगतेः ॥ ९२ ॥

## अनेकव्यक्त्यभिव्यङ्ग्या इति कारिका ॥ ९३ ।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'शब्दत्वादन्याम्' 'शब्दत्वादन्या इति' पाठद्वयं दृश्यते । तत्रान्त्यः पाठो न युक्तः, शब्दाकृतिमिति विशेषणवाचकपदविरुद्ध विभक्तिकत्वात् । ततः समानविभक्तिकत्वेनाद्यपाठ एव युक्तः, अर्थसंगतेः । अत्रैवाग्रे-'व्यपदेश्यरूपम्, 'व्यपदेशम्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थ-संगतेः । द्वितीयपाठस्तु न युक्तः, स्फोटपदसामानाधिकरण्यानुपपत्तेः ॥ ९३ ॥

## अविकारस्य शब्दस्य इति कारिका ॥ ९४ ।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'आकृतिव्यक्तिव्यवहारप्रक्रियावैधर्म्यात्' 'आकृतिव्यक्तिषु व्यवहारप्रक्रियावैधर्म्यात्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्याख्यायाम् । द्वितीयपाठे तु नार्थसंगतिः, प्रत्युत-विरुद्धार्थप्रतिपत्तिरिति हेयः स पाठः । अत्रैवाग्रे—'प्राप्तविकारैर्ध्वनिभिरनाश्रितम्' 'प्राप्तविकारध्वनिभिरनाश्रितम्' इति पाठद्वयं दृश्यते । तत्राद्यो व्यस्तः पाठ एव युक्तः ।

समस्ते द्वितीयपाठेऽर्थसंदेहापनोदाय व्याख्याया अपेक्षणात् । 'स्वनिमित्तेभ्य' इत्यस्य पदार्थैकदेशे प्राप्तपदार्थेऽन्वयस्तु पाठद्वयेऽपि समानः । नित्यसापेक्षत्वेन परिहारोऽपि पक्षद्वयेऽपि समानः ।

अत्रैव वाक्येऽग्रे—'प्रतीपादिप्रकाशन्यायेनासति' 'प्रदीपादिप्रकाशन्यायेन सन्ति' 'वस्तुसंप्रमोहे' 'वस्तुसंप्रयोगमोहे' 'प्राप्तव्यञ्जकध्वनिविक्रियानुरागम्' 'प्राप्तव्यञ्जकध्वनिविक्रियानुरागे' 'उपलब्धरूपम्' उपलब्धरूपम्' इति पाठाष्टतयमुपलभ्यते । तत्र प्रथमे पाठद्वये आद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे न कथमप्यर्थसंगतिः । द्वितीये पाठद्वयेऽपि प्रथमपाठ एव युक्तः । दर्शिता चात्र पाठेऽर्थसंगतिरम्बाकर्त्र्याम् । द्वितीयद्वितीये तु न कथमप्यर्थसंगतिः । तृतीयपाठद्वयेऽपि प्रथमपाठ एव युक्तः । अम्बाकर्त्र्यामत्र पाठेऽर्थसंगतेर्दर्शितत्वात् । तृतीयद्वितीये तु न कथमप्यर्थसंगतिः । चतुर्थे पाठद्वयेऽपि प्रथमपाठ एव युक्तः, अर्थसंगतेरम्बाकर्त्र्यां दर्शितत्वात् । द्वितीयपाठे न कथमप्यर्थसंगतिः ॥ ९४ ॥

## न चानित्येष्वभिव्यक्तिः इति कारिका ॥ ९४ ।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'इह केचिदभिव्यक्तिमेव' 'इह केचिदेकमेव, 'अनित्यत्व' 'नित्यत्व' इति पाठचतुष्टयमेकस्मिन्नेव वाक्ये व्याख्यानारम्भे एवोपलभ्यते । तत्राद्ये पाठद्वये प्रथमपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चात्र पाठेऽर्थसंगतिरम्बाकर्त्र्याम् । प्रथमद्वितीये तु न कथमप्यर्थसंगतिरिति सुधीभिरूह्यम् । द्वितीये पाठद्वयेऽपि प्रथमपाठ एव युक्तः, अर्थसंगतेः । अनित्यः शब्दोऽभिव्यङ्ग्यत्वादित्यनुमानप्रयोगानुकूलत्वाच्च ।

अत्रैवाग्रे—'उभयथादृष्टत्वादनपदेशः' 'उभयादृष्टत्वादयमुपदेशः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, प्रकृतार्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु न कथमप्यर्थसंगतिरिति अम्बाकर्त्र्यामुपेक्षितोऽयं पाठोऽस्माभिः । अत्रैवाग्रे—'विकल्पप्रसङ्गः' 'विकल्पः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव व्याख्यातोऽम्बाकर्त्र्याम् अर्थसंगतिं समीक्ष्य । द्वितीयपाठस्तु उपेक्षितो विकल्पस्यानध्यवसायात् ॥ ९४-९५ ॥

## देशादिभिश्च सम्बन्ध इति कारिका ॥ ९६ ।

अस्या द्वितीये पादे—'दृष्टः कायवतामपि' 'दृष्टः कायवतामिह' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव समादृतो व्याख्यानेनाम्बाकर्त्र्याम् । प्रथमपाठे तु अपिशब्दासंगतिः स्पष्टैव । अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'प्रदीपादिभिर्व्यज्यन्ते' 'प्रातिप्रतिकादिभिः पृथिव्यादिर्व्यज्यन्ते' 'पृथिव्यादिभिर्व्यज्यन्ते' इति पाठत्रयं दृश्यते । तत्राद्यः पाठ एव युक्तः, अर्थसंगतेः । इतरत्र पाठद्वये तु न कथमप्यर्थसंगतिः ।

अत्रैवाग्रिमवाक्ये—'करणसंयोगविभागाभ्यां तु व्यञ्जकाभ्याम्' 'करणसंयोग-विभागानुव्यञ्जकाभ्याम्' इति पाठद्वयं दृश्यते। तत्राद्यः पाठ एव युक्तः, अर्थसंगतेः। द्वितीयस्तु विरुद्धमतिकृत्त्वेन अर्थासंगतया चायुक्तः। अत्रैवाग्रे—'नानाधिकरणस्थाः' 'नानावस्थाः' इति पाठद्वयं दृश्यते। तत्राद्यः पाठ एवार्थसंगत्या समादृतो व्याख्याने-नाम्बाकर्त्र्याम्। द्वितीयपाठस्तु अर्थासंगत्यायुक्तः। तथाहि—देशभेदेननानात्व-विचारप्रसङ्गे कोऽवसर अवस्थानानात्वोपन्यासस्येति ॥ ९६ ॥

**ग्रहणग्राह्ययोः सिद्धा इति कारिका ॥ ९७ ।**

अस्यास्तृतीये पादे—'व्यङ्ग्यव्यञ्जकभावेन' 'व्यङ्ग्यव्यञ्जकभावेऽपि' 'व्यङ्ग्यव्यञ्जकभावोऽपि' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। नियत-योग्यतासिद्धिहेतुत्वस्य कण्ठत उक्तत्वात्। द्वितीयपाठे तु सप्तम्या अन्वय-बुद्धिद्वारा हेतुत्वं बोध्यते इति विशेषात्तत्रायं पाठो युक्तः। तृतीयपाठे तु दृष्टान्तदार्ष्टान्ति-कयोर्वैषम्यम्। तथाहि—ग्रहणग्राह्ययोर्यथा नियता योग्यता सिद्धा, तथैव स्फोटना-दयोर्व्यङ्ग्यव्यञ्जकभावोऽपि सिद्ध इत्येवं वैषम्यमिति।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'नापीतराणीन्द्रियाणि' 'नार्थान्तरा-णीन्द्रियाणि' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु प्रकाशस्यार्थान्तरस्य बाह्यरूपाभिव्यक्तिहेतुत्वेन व्याघातः। अर्थान्तराणि इन्द्रियाणि नेति सामानाधिकरण्येऽर्थपदवैयर्थ्यम्, इन्द्रियान्तराणि नेत्येवार्थसिद्धेः। किञ्चार्था-न्तराणां बाह्यरूपाभिव्यक्तिहेतुत्वस्याप्रसक्तस्य प्रतिषेधोऽप्यत्र पाठे दोषोऽवधेयः। इन्द्रियान्तराणां तु विषयग्राहकत्वस्य दर्शनेनाद्य पाठे तु प्रसक्तिप्रतिषेध एवेति।

**सदृशग्रहणानाञ्च इति कारिका ॥ ९८ ।**

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'नदीशैलेयादीनाम्' 'नभःशैलेयादीनाम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठोऽर्थसंगत्या स एव युक्तः। दर्शिता चार्थसंगति-रम्बाकर्त्र्याम्। प्रथमपाठे तु नदीपदस्य सार्थक्यं नोपपादयितुं शक्यते ॥ ९८ ॥

**प्रकाशकानां भेदांश्च इति कारिका ॥ ९९ ।**

अस्यास्तृतीये पादे—'तैलोदकादिभेदे तत्' 'तैलोदकादिभेदेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अत एव—'संख्याभेदोऽप्यादर्शभेदे जलतरङ्गभेदे च दृश्यते सूर्यादिप्रतिबिम्बानाम्' इति सप्तम्यन्तपाठ उपपद्यते अस्या व्याख्याने स्वोपज्ञवृत्तौ। अस्या एव चतुर्थे पादे—'प्रत्यक्षं प्रतिबिम्बकं' 'प्रत्यक्षं प्रतिबिम्बकम्' 'प्रत्यक्षं प्रतिबिम्बिते' इति पाठत्रयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अस्मिन् पाठे उत्तरार्धेन पूर्वार्धस्य समर्थनसंभवात्। तदभावादेव द्वितीयपाठो न युक्तः। तृतीय-पाठोऽपि न युक्तः, प्रतिबिम्बितपदस्य बिम्बपरत्वात्, बिम्बस्योपाधिसंनिधानाभावेन

तत्र पूर्वार्धार्थसंबन्धाभावात्। अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ—'प्रदीपसंख्याभेदनिमित्तः संख्यान्तरे योगः' 'प्रदीपसंख्याभेदनिमित्तः संख्याभेदः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, संख्यान्तरयोगस्यैवात्र विवक्षितत्वात्। संख्याभेदपदस्यापि संख्यान्तरयोगरूपेऽर्थ एव लक्षणया पर्यवासानाच्च।

अत्रैवाग्रे—'चीनशस्त्रयवनकाचादिषु' 'जननशास्त्रायवनकाचादिषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अत्रैव—'ष्वादर्शप्रमाणभेदानुपातीति' 'स्वादर्शनं प्रमाणभेदानुपातीति' इति पाठद्वयं दृश्यते, तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चात्र पाठेऽर्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थ संगतिः॥ ९९॥

## विरुद्धपरिमाणेषु इति कारिका॥ १००।

अस्या द्वितीये पादे—'वज्रादर्शतलादिषु' 'वज्रादर्शजलादिषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, 'निविडितावयवसंनिवेशोपलक्षणाय वज्रतलग्रहणम्' इति वृषभदेवटीकादर्शनात्॥ १००॥

## तस्मादभिन्नकालेषु इति कारिका॥ १०१।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ–'लोके व्यवहारेण तु' 'लोकव्यवहारेण तु' 'लोके व्यवहारेषु तु' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरत्र पाठेऽम्बाकर्त्र्याम्। द्वितीयः पाठस्तु वृषभदेवटीकयां प्रतीकरूपेण धृतः। स तु सप्तमीसमासमाश्रित्य अर्थसंगतोऽपि हेय एव। लोकानां व्यवहारः, लोके व्यवहार इति विग्रहद्वयसंदेहप्रयुक्तसमाससंदेहसंभवात्। तृतीयपाठे तु अर्थसंगतिर्नास्त्येव, क्लेशावसेया वेति सोऽपि पाठो हेय एव। अस्मिन्नेव वाक्ये—'अनुगम्यमानात्मतत्त्वाः स्थितिम्' 'अनुमानात्मतत्त्वस्थितिम्' 'अनुगमनात्मतत्त्वाः स्थितिम्' इति पाठत्रयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः। वृषभदेवटीकासंवादाच्च। इतरत् पाठद्वयन्तु अर्थासंगत्योपेक्ष्यम्।

अत्रैव वाक्ये—'भिद्यन्ते' 'भिद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, वर्णपदवाक्यस्फोटानां बहुत्वात्। अत एव द्वितीयपाठो न युक्तः। अत्रैवाग्रे—'स्फोटाः। उपलब्धिविषयतापत्तौ' 'स्फोटानुपलब्धिविषयतापत्तौ' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे न कथमप्यर्थसङ्गतिः। अत्रैव वाक्ये—'उपलब्धिस्थित्यभिमानः' 'उपलब्धिस्थित्यनुमानः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः। दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसङ्गतिः, नापि च शब्दसाधुत्वमिति हेयः स पाठः॥ १०१॥

**यः संयोगविभागाभ्याम् इति कारिका ॥ १०२ ।**

अत्र—'यः संयोगवियोगाभ्याम्' इति पाठोऽपि क्वचिद् दृश्यते । स चायुक्तः । अस्या व्याख्यायां स्वोपज्ञवृत्तौ—'स्थानकरणप्राप्तिविभागहेतुकः' इति व्याख्यानदर्शनात् । अत्र प्राप्तिः संयोगः ।

अस्या एव कारिकाया व्याख्याने स्वोपज्ञवृत्तौ—'प्रथमाभिनिर्वृत्तः' 'प्रथमादिभिर्निवृत्तौ' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, कारिकायां स्थितस्य—उपजन्यते इति पदस्य प्रथमाभिनिर्वृत्त इति व्याख्यानसंभवात् । उपोपसर्गस्य उपक्रमार्थकत्वसंभवात् । द्वितीयपाठे तु न कथमप्यर्थसङ्गतिरिति हेयः स पाठः । इतोऽग्रिमवाक्ये—'तज्जातास्तु' 'तज्जातिस्तु' इतिपाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसगतेः स्फुटत्वात् । द्वितीयपाठस्तु न युक्तः, अर्थासङ्गतेः । सर्वदिक्का इत्यादि बहुवचनान्तविशेषणपदोपस्थाप्यार्थान्वयानुपपत्तेश्च ।

अत्रैव—'सर्वदिक्कास्तद्रूपप्रतिबिम्बोपग्राहिण.' 'सर्वदिग्वस्तुरूपप्रतिबिम्बोपग्राहिणः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । दर्शिता चार्थसगतिरम्बकर्त्र्याम् । द्वितीयपाठे तु न कथमप्यर्थसङ्गतिरिति सोऽपपाठः ।

अत्रैवाग्रे—'वर्णश्रुतिम्' 'वर्णाः श्रुतिम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः, सा चाम्बाकर्त्र्यां द्रष्टव्या । द्वितीयपाठे तु अर्थासङ्गतिः । वर्णानां श्रुतिपदार्थविभागकर्तृत्वानुपपत्तेः ।

अत्रैवाग्रे–'संयोगविभागजध्वनिसंभूतनादाभिव्यङ्ग्यः । स्फोटरूपानुग्राहिणस्तु' 'संयोगविभागजध्वनिसंभूतनादाभिव्यङ्ग्यस्फोटरूपानुग्राहिणस्तु' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसङ्गतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । यद्यप्यत्र द्वितीयपाठेऽप्यर्थसंगतिः प्रथमपाठ इव संभवति, तथापि द्वितीयपाठे स्फोटे संयोगविभागजध्वनिसंभूतनादाभिव्यङ्ग्यत्वस्य विधेयत्वं न प्रतीयेत समासे एकार्थीभावाभ्युपगमात् । इति स पाठो हेयः ।

अत्रैवाग्रे–'अपचीयमानाभिव्यक्तिसामर्थ्याः' 'अपचीयमानाभिव्यक्तिसामर्थ्यात्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । वृषभदेवटीकायाम्—'अपचीयमानाभिव्यक्तिशक्तयः, इत्येतद् व्याख्यादर्शनात् । अत्रैव वाक्ये—'द्रुतादिवृत्तिभेदव्यवस्थाहेतवोऽपचयात्मका ध्वनयः' 'द्रुतादिवृत्तिभेदव्यवस्थाहेतवो ध्वनयः' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । अपचीयमानाभिव्यक्तिसामर्थ्या इति प्रागुपात्तपदेनैव गतार्थत्वादपचयात्मका इत्यस्य वैयर्थ्यात् ॥ १०२ ॥

**अल्पे महति वा शब्दे इति कारिका ॥ १०३ ।**

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'सूक्ष्मोऽपि कश्चित्' 'सूक्ष्मो हि कश्चित्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अपिशब्दस्यैवात्र स्वारस्येनौचित्यात् । हिशब्दस्य च वैयर्थ्यात् । वृषभदेवटीकायामत्रापि शब्ददर्शनाच्च ।

अत्रैवाग्रे—'सामर्थ्यं भिद्यते' 'सामर्थ्यं विद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। निमित्तभेदस्य सामर्थ्यभेदे एव हेतुत्वसंभवात्। न तु सामर्थ्यसत्तायां तस्य हेतुत्वसंभवः।

अत्रैवाग्रिमवाक्ये—'कस्यचिद्धि' 'कस्यचित्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्य वाक्यार्थस्य पूर्ववाक्यार्थे हेतुत्वेन हेत्वर्थक-हिशब्दपाठस्यौचित्यात्। द्वितीयपाठे तु न तदर्थलाभः।

अत्रैव—'भेरीदण्डाभिघातजस्येव' 'तुरीदण्डाभिघातजस्येव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिरिति स्पष्टमेव।

अत्रैवाग्रिमवाक्ये—'दीर्घकालं सन्तानमविच्छेनारभते' 'दीर्घकालमविच्छेदेनारभते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु विशेष्यपदलोपाद् वाक्यस्य निराकाङ्क्षार्थप्रतिपत्तिर्न स्यात्। अत्र क्वचित् पुस्तकेऽयं विशेष उपलभ्यते। शब्दोऽत्र ध्वनिः। स च द्विविधः। उत्तरोत्तरशब्दानां कारणरूप आद्यः। कार्यरूप उत्तरश्च। तत्राद्यस्फोटव्यञ्जकः, स्फोट एव वा। इति॥ १०३॥

## दूरात् प्रभेव दीपस्येति कारिका॥ १०४।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ–'व्यक्तं स्फोटं सहजेन ध्वनिना' 'व्यक्तिस्फोटं सहजेन ध्वनिना' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु 'सहजेन ध्वनिना' इत्यस्याननन्वयोऽपि।

अत्रैव वाक्ये—'दूरव्यापिना' 'दूरस्थायिना' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। यस्मिन् देशे ध्वनिरुत्पन्नस्तस्मिन् देशे न तिष्ठति, किन्तु दूरस्थायीत्यर्थप्रतीतेः। प्रथमपाठे तु तत्रापि तिष्ठति दूरेऽपि तिष्ठति इत्यर्थप्रतीतिः।

अत्रैव—'प्रकाशस्थानीयेन' 'प्रकाशस्थानीयेनेव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे तु पुनरुक्तिः। स्थानीयशब्देवशब्दयोरुभयोरपि सदृशार्थकत्वात्।

अत्रैव वाक्ये—'संबद्धं मन्यन्ते' 'सर्वत्र मन्यन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु—'ध्वनिना' इत्यस्यानन्वयापत्तिः। अत्रैवाग्रिमवाक्ये—'घटसंनिविष्टावयवम्' इति यद्यपि पाठ उपलभ्यते तथापि अर्थसंगतिमालोच्य 'घनसंनिविष्टावयवम्' इति पाठो युक्तः प्रतिभाति।

अत्रैव वाक्ये 'तदाश्रितश्च' 'तदाश्रयश्च' इति पाठद्वयं दृश्यते, तत्राद्यः पाठ एव युक्तः। उत्तरपदार्थरूपवर्तिपदार्थप्राधान्यात्। द्वितीयपाठे तु अन्यपदार्थप्राधान्यमिति स एव दोषः॥ १०५॥

**द्रव्याभिघातात् प्रचितौ इति कारिका ।। १०५ ।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'व्यक्तवाग्प्रस्पन्दनानुगत.' 'व्यक्तवाक्प्रस्पन्दनानुगतः । 'व्यक्तवाचि स्पन्दनानुगतः' इति पाठत्रयं दृश्यते । तत्राद्यः पाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । वृषभदेवटीकासंवादाच्च । वृषभदेवटीकायां हि 'व्यक्तवाग्विति' इति प्रतीकं दृश्यते । द्वितीयपाठे तु नास्ति वृषभदेवटीकासंवादः । तृतीयपाठे तु वाचि व्यक्तत्वविशेषणं व्यर्थम् । वागिन्द्रियस्याव्यक्तत्वाभावात् । वाक्पदस्य शब्दपरत्वेऽपि एतद्वाक्यार्थानुपपत्तिरेव । न हि शब्दस्पन्दनानुगतः करणेषु कम्पोऽनुवर्तते इति ॥ १०५ ॥

**अनवस्थितकम्पेऽपि इति कारिका ।। १०६ ।**

अस्या द्वितीये पादे—'ध्वनयोऽपरे' 'ध्वनय.परे' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । वृषभदेवटीकायाम्—'अपरे इति' इति प्रतीकदर्शनात् । अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'तांश्चाभिमर्शिनोऽनुप्रकाशान् नादान्तरालान्' 'तांश्चाभिमर्षितान्नादानां नातराल न' 'ना·······भिमर्शिनोऽनुप्रकाशानानान्तराला' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । इतरत् पाठद्वयं तु अर्थासंगत्या हेयम् ॥ १०६ ॥

**वायोरणूनां ज्ञानस्य इति कारिका ।। १०७ ।**

अस्या द्वितीये पादे—'शब्दत्वापत्तिरिष्यते' 'शब्दार्थापत्तिरिष्यते । इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । तत्र वायोस्तावच्छब्दभावापत्तिमाचक्षते, 'अणूनां शब्दत्वापत्तिमपरे प्रतिपन्नाः' 'ज्ञानस्य खल्वपि शब्दत्वापत्तिमपरे वर्णयन्ति' इति स्वोपज्ञवृत्त्यनुरोधात् । द्वितीयपाठे तु अर्थासंगतिः स्पष्टैव ॥ १०७ ॥

**लब्धक्रियः प्रयत्नेन इति कारिका ।। १०८ ।**

अत्र—'लब्धक्रिया' इति क्वचित् पाठ उपलभ्यते, स तु प्रामादिकः, अर्थासंगतेरित्यवधेयम् ॥ १०८ ॥

**तस्य कारणसामर्थ्यात् इति कारिका ।। १०९ ।**

अस्या द्वितीये पादे—'वेगप्रचयधर्मणः' 'वेगप्रचयधर्मिणः इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकर इति न्यायविरोधात् ॥ १०९–१११ ॥

**अथायमान्तरो ज्ञाता इति कारिका ।। ११२ ।**

अत्र–'अथेदमान्तरं ज्ञानम्' इति पाठोऽपि क्वचिदुपलभ्यते । तत्र यद्यपि द्वितीयपाठ एव युक्तः, वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते इति कारिकार्थानुरोधात् ।

तथापि वृषभदेवटीकायाम्—'आन्तरो ज्ञाता वागात्मनि' इति प्रतीकीकृत्य 'ज्ञानात्मकेऽपि तस्मिन् ग्रहीतृत्वव्यवहारोऽस्ति' इति व्याख्यानदर्शनेन प्रथमपाठोऽपि युक्त एव।

अस्या एव द्वितीये पादे—'सूक्ष्मे वागात्मनि स्थितः' 'सूक्ष्मो वागात्मना स्थितः' 'सूक्ष्मो रागात्मनि स्थितः' 'सूक्ष्मं वागात्मना स्थितम्' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु वृषभदेवटीकाविसंवादादुपेक्ष्यः। तृतीयपाठस्तु अर्थासंगत्या वृषभदेवटीकाविसंवादाच्चोपेक्ष्यः। चतुर्थपाठस्तु अर्थसंगतावपि वृषभदेवटीकाविसंवादादुपेक्ष्यः।

अस्या एव कारिकायास्तृतीये पादे—'व्यक्तये स्वस्य रूपस्य' 'व्यक्तयेऽव्यक्तरूपस्य' प्रति पाठद्वयं दृश्यते। तत्राद्यः पाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अव्यक्तं रूपं कस्येति-जिज्ञासाया अनिवृत्तेः स पाठः उपेक्ष्यः। अस्या एव चतुर्थे पादे—'शब्दत्वेन विवर्तते' 'शब्दत्वेन निवर्तते' इति पाठद्वयं दृश्यते। अत्र प्रथमपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु न कथमप्यर्थसंगतिरिति हेयः सः॥ ११२॥

## स मनोभावमापद्य इति कारिका ॥ ११३।

अत्र—'समताभावमापद्य' इति पाठः क्वचिद् दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिरित्युपेक्ष्यः सः॥ ११३-११४॥

## विभजन् स्वात्मनो ग्रन्थीन् इति कारिका ॥ ११५।

अत्र—'विभज्य स्वात्मनो ग्रन्थीन् इति पाठोऽपि क्वचिदुपलभ्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। किञ्चात्र पाठे विभजन् इत्यत्र लक्षणहेत्वोः क्रियायाः इति हेतौ शतृप्रत्ययः, तेन ग्रन्थिविभागस्य वर्णाभिव्यक्तिक्रियाहेतुत्वं शब्दतः प्रतीयते। द्वितीयपाठे तु विभागक्रियाया वर्णाभिव्यक्तिक्रियातः पूर्वकालिकत्वमेव प्रतीयते, न तु तद्धेतुत्वम्। नियतपूर्वसत्त्वस्यैव हेतुत्वात्। स्नात्त्वा पक्त्वा भुक्त्वा व्रजतीत्यादौ क्त्वाप्रकृत्यर्थक्रियाणां व्रजिक्रियापूर्वकालिकत्वेऽपि तद्धेतुत्वाभावात्। तद्धेतुत्वानवगमाच्च।

अत्रैव पादे—'ग्रन्थीन्' 'ग्रन्थान्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नात्र कथमप्यर्थसंगतिः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'सूक्ष्मांशं' धूमसन्तानवत्' 'सूक्ष्मांशधूमसन्तानवत्' 'सूक्ष्मं धूमसन्तानवत्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न सूक्ष्मांशपदस्य संहन्तिक्रियापदयोगः। तृतीयपाठेऽपि न सूक्ष्मपदार्थस्यांशत्वप्रतीतिरित्यवधेयम्।

अत्रैवाग्रे—'प्रकाशमात्रया कयाचित्' 'प्रकाशमानया कयाचित्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । द्वितीयपाठे तु प्रकाशमानत्वस्य विशेष्यापरिज्ञाने आकाङ्क्षा न शाम्यति इत्य युक्तः सः ।

अत्रैव वाक्ये—'बिम्बमुपगृह्णाति' 'बिम्बमनुगृह्णाति' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु नानुग्रहपदार्थस्यात्र वाक्यार्थे कथञ्चिदप्युपयोग इति हेयः स पाठः ।

यद्यपि अत्रैवाग्रिमवाक्ये—'तद्यथा' इति पाठः समुपलभ्यते । तथापि अत्र-समुच्चयवचनस्य तथा इत्यस्य प्रयोग एव युक्तः प्रतिभाति ।

अत्रैवाग्रे समुद्धृतायां पाणिनिशिक्षाकारिकायाम्—'समेत्यार्थान्' 'समर्थ्यार्थान्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु न कथञ्चिदप्यर्थसंगतिः । बुद्ध्याऽर्थसमर्थनस्य तया तदुपपादनरूपस्य प्रकृतेऽनुपयोगात् ॥ ११५ ।

## अजस्रवृत्तिर्यः शब्द इति कारिका ॥ ११६ ।

अस्या द्वितीयपादे—'सूक्ष्मत्वान्नोपलभ्यते' 'सूक्ष्मत्वेनोपलभ्यते' 'सूक्ष्मत्वाच्चोपलभ्यते' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अत्रैव पाठे उत्तरार्धसंगतिः । द्वितीयतृतीयपाठयोस्तु न तदर्थसंगतिः । व्यज्यतेऽनभिव्यक्तो वायुर्येन तद् व्यजनमिति व्युत्पत्तेः ।

अस्या एव चतुर्थपादे—'प्रतीयते' 'प्रचीयते' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । व्यजनपदव्युत्पत्त्यनुरोधात् । वायुप्रचयहेतुत्वन्तु व्यजने व्यजनपदव्युत्पत्त्या न लभ्यते ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'वायुसंनिचय इव' 'वायुसंनिहित इव' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठस्तु न युक्तः, इवार्थानुपपत्तेः ।

अत्रैवाग्रे—'उपलभ्यते संस्करोति च' इति क्वचित् पाठः । क्वचित्तु—'उपलभ्यते' इत्येव पाठः । तत्र संस्करोतिपदपाठोऽपि युक्त एव । शब्दकृतस्य श्रोत्रेन्द्रियसंस्कारस्य शब्दोपलब्ध्यर्थमपेक्षितत्वात् ॥ ११६ ॥

## तस्य प्राणे च या शक्तिः इति कारिका ॥ ११७ ।

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'आक्षेपकप्रयत्नानुविधायी' 'आक्षेपकप्रयत्नानुयायी' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः । तदभावाच्चाद्यपाठो न युक्तः, तथाहि—अनुविधानमनुकरणम्, न च प्रयत्नानुकरणं प्राणे संभवति, वैसादृश्यात् । अनुगमनन्तु विसदृशस्यापि संभवति इति ॥ ११७ ॥

**शब्देष्वेवाश्रिता शक्तिः इति कारिका ।। ११८ ।**

अस्या द्वितीये पादे—'निबन्धनी' 'निबन्धनम्' इति पाठद्वयं वर्तते। तत्राद्यपाठ एव युक्तः, शक्तिविशेषणत्वेन स्त्रीत्वौचित्यात्। द्वितीयपाठस्तु न युक्तः। भावल्युटो नपुंसकत्वनियमेऽपि करणल्युटो नियतनपुंसकत्वे मानाभावात्। अस्या एव द्वितीयपादे—'यन्नेत्रः' 'यत्नेन तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथञ्चिदप्यर्थसंगतिः। वृषभदेवटीकायाञ्च—'यन्नेत्र इति' इति प्रतीकं दृश्यते। नेत्रं परिच्छेदोपाय इति व्याख्यानञ्च दृश्यते।

अस्या एव चतुर्थे पादे–'प्रतीयते' प्रतायते 'प्रकाशते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। तृतीयपाठेऽपि प्रकाशस्य बाह्याभ्यन्तरभेदभिन्नत्वेन नानार्थकत्वान्नौचित्यम्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'न चेन्द्रियशक्तयः' 'तथेन्द्रियशक्तयः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव पूर्वापरानुसन्धानेन युक्तः प्रतीयते। अर्थसंगतेश्च। प्रथमपाठे तु न प्रकृतार्थसंगतिस्तस्येति हेयः स पाठः।

अत्रैवोद्धृते पद्ये·द्वितीयपादे—'निहितं सन्तनोति' 'नियतं सन्तनोति'' संनिहितं तनोति' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न विवक्षितार्थसिद्धिः। तृतीयपाठेऽपि संनिहितार्थकर्मकविस्तारणरूपार्थप्रतीतावपि न स्वनिहितार्थकर्मकविस्तारणविवक्षितार्थसिद्धिः॥ ११८॥

**षड्जादिभेदः शब्देन इति कारिका ।। ११९ ।**

अत्र—'शब्दादिभेदःशब्देन' इति पाठोऽपि क्वचिद् दृश्यते। तत्र प्रथमपाठ एव युक्तः। अर्थसंगतेः, दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः।

अस्या एव चतुर्थे पादे—'शब्दमात्रा सु निश्रिताः' 'शब्दमात्राः सुनिश्रिताः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थविधानां शब्दमात्रात्मकत्वमाधाराधेयभावेन तन्मूलभूतेन धर्मधर्मिभावेन कार्यकारणभावेन वेति दुर्वारः संशयः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ–'विशेषोऽवधारणनिबन्धनपदप्रत्ययमन्तरेण' 'निषेधावधारणानिबन्धनपदप्रत्ययमन्तरेण' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिरिति सुधीभिरूह्यम्।

अत्रैवाग्रे—'गोपालाविपालादयो हि' 'गोपालादयो हि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, गोपालाविपालयोर्द्वन्द्वप्रयोगस्य शीतोष्णादिद्वन्द्वप्रयोगवद् लोके

शास्त्रे चात्यन्तं प्रसिद्धत्वात् । अत्रैवाग्रे--'भेदवानर्थः 'भेदमनर्थकः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु अत्यन्तमर्थासंगत्या हेयः ।

अत्रैव—'शब्दशक्तिसंसृष्टया' 'शब्दव्यक्तिसंसृष्टया' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकमर्थायाम् । द्वितीयपाठे तु शब्दानुविद्धया इत्यनेन पौनरुक्त्यं स्यात् । अत्रैवान्ते—'उपगृह्यते स्वीक्रियते' इति पाठः क्वचिदुपलभ्यते, क्वचिन्न । तथा सत्यपि अयं पाठ आदर्तव्य एव, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकमर्थायाम् ॥ ११९ ॥

**शब्दस्य परिणामोऽयम् इति कारिका ॥ १२० ।**

अत्र—'छन्दस्य परिणामोऽयम्' इति पाठोऽपि क्वचिद् दृश्यते । स तु असाधुः, असंगतश्चेति हेयः । अस्या एव चतुर्थे पादे—'व्यवर्तत' 'विवर्तते' 'प्रवर्तते' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु न युक्तः । विवर्तकालस्यातीतत्वात् । एवं प्रवर्तते इति पाठोऽपि, प्रवृत्तेर्विवर्तरूपत्वाभावाच्च ॥ १२० ॥

**इति कर्तव्यता लोके इति कारिका ॥ १२१ ।**

अस्या द्वितीयपादे—'सर्वा शब्दव्यपाश्रया' 'सर्वशब्दव्यपाश्रया' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । सर्वपदार्थस्येतिकर्तव्यायां विशेषणत्वस्यौचित्यात् । द्वितीयपाठे तु तन्न लभ्यते इत्ययुक्तः स पाठः । अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अर्थरूपमसता तुल्यम्' 'अर्थरूपं साक्षात् तुल्यरूपम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठे तु न कथमप्यर्थसंगतिः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'प्रतीयत्तिरुत्पद्यते' 'प्रतिपद्यते' 'प्रतिपद्यन्ते' 'प्रतिपत्तिरुह्यते' इति पाठचतुष्टयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकमर्थायाम् । द्वितीयपाठे तु—'अनाख्येयशब्दनिबन्धना' इत्यस्य विशेष्या प्रतिपत्तिः । तृतीयपाठेऽपि अयं दोषः । चतुर्थपाठे तु अर्थासंगतिः ॥ १२१ ॥

**आद्यः करणविन्यास इति कारिका ॥ १२२ ।**

अस्या व्याख्याने स्वोपज्ञवृत्तौ—'को ह्येताम्' 'लोको ह्येतान्' 'को ह्येषाम्' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयतृतीयपाठयोस्तु नास्त्यर्थसंगतिः कथमपि ॥ २२ ॥

**न सोऽस्ति प्रत्ययो लोके इति कारिका ॥ १२३ ।**

अस्या द्वितीये पादे—'यः शब्दानुगमादृते' 'शब्दानुगमनाद्विना' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । द्वितीयपाठे तु तच्छब्दसंगत्यै यच्छब्दा-

अस्या एव कारिकायाश्चतुर्थे पादे—'भासते' 'वर्तते' 'गम्यते' 'दृश्यते' 'गृह्यते' इति पाठपञ्चकं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्या। किञ्चाद्यपाठे पूर्वार्धोक्तार्थेऽनुभवस्य प्रमाणत्वसंभवः, न तु द्वितीयपाठे हेयः स पाठः। तृतीयपाठे तु नार्थसंगतिः। तथाहि—सर्वं ज्ञानं प्रत्यक्षं तेन तस्य गमिकर्मत्वं न युज्यते। गम्यते इत्यस्य हि व्यज्यते, अनुमीयते इति वाऽर्थः। चतुर्थपाठोऽपि नोचितः। ग्रहणस्य ज्ञानरूपस्यादानरूपस्य च संभवेनार्थसंशयसंभवात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'उत्पन्नेनाप्यविकल्पकेन' 'उत्पन्नेनार्थविकल्पकेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। उत्पन्नेनापि अविकल्पकेन ज्ञानेन कार्यं न क्रियते इत्यर्थस्य उपपन्नत्वाद्। उत्पन्नेनार्थविकल्पकेन ज्ञानेन कार्यं न क्रियते इत्यर्थस्य दृष्टविरुद्धत्वात्।

अत्रैवाग्रे—'सा ज्ञानावस्था' 'सामान्यावस्था' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अग्रे—'यस्याम्' इति यत्पदप्रयोगदर्शनात्। द्वितीयपाठे तु यत्पदासंगतिः स्पष्टैव।

अत्रैवाग्रे—'प्रत्यर्थनियतासु' 'प्रत्यर्थ नियतासु' इति पाठद्वयं दृश्यते। तत्राद्यपाठो न युक्तः। अव्ययीभावपदघटितस्येतरसमासस्य व्याप्तिपञ्चकमाधुर्यामसाधुत्वस्योक्तत्वात्। अत्रैवाग्रे—'ज्ञानेनाक्रियमाणः' 'ज्ञानिना क्रियमाणा' इति पाठद्वयं लभ्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नास्ति कथमप्यर्थसंगतिरिति हेयः सः। अत्रैव—'उपगृह्यमाणो वस्त्वात्मा' 'गृह्यमाणावष्टात्मा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु अर्थानवबोध एव दोषः॥ १२३॥

## वाग्रूपता चेदुत्क्रामेदिति कारिका॥ १२४।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अभ्यावर्तते' 'व्यावर्त्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। न च कर्तृपदार्थप्रत्यय इति हेयः स पाठः।

अत्रैवाग्रे—'अव्यपदेश्यया वृत्त्या' 'अव्यपदेशया वृत्त्या' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। नञ्समासे उत्तरपदार्थप्राधान्यात्। द्वितीयपाठे तु बहुव्रीहौ अन्यपदार्थप्राधान्यात्। अत्रैवाग्रे—'प्रक्रान्तः' 'प्रकाशान्तः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठो तु न कथमप्यर्थसगतिः।

अत्रैवाग्रे—'चासत्याम्' 'च सत्याम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु तदभावान्न युक्तः। अत्रैवाग्रे—'चानुपकारिणाम्' 'चानुकारिणाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। वृषभदेवटीकायामपि—'अनुपकारिणाम्' इत्येव पाठः। अत्रैवाग्रे यद्यपि—'सर्वविशेषणविशिष्टेष्वर्थक्रियाकारिणि

प्रत्यये' इति पाठः समुपलभ्यते, तथापि तस्य स्थाने—'सर्वविशेषणविशिष्टेऽप्यर्थक्रिया-कारिणि प्रत्यये' इति पाठः संशोध्य कर्तव्य इति युक्तं प्रतिभाति ॥ १२४ ॥

## सा सर्वविद्याशिल्पानाम् इति कारिका ॥ १२५ ।

अत्र—'सा' इत्यस्य स्थाने 'या' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। **वृषभदेवटीकायाम्**—'तद्वशाद्' इत्यस्य—'वाग्रूपतावशाद्' इत्यर्थदर्शनात्। या इति पाठे तु पूर्वार्धार्थ एव तत्पदेन परामृश्येत। यत्पदार्थस्यैव तत्पदेन परामर्श-नियमात्। अस्या एव द्वितीये पादे—'कलानाम्' 'कालानाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। वाग्रूपतायाः कलोपबन्धनीत्वस्यैवौचित्यात्। तस्याः कालोप-बन्धनीत्वासंभवाच्च।

अस्या एव तृतीये पादे—'अभिनिष्पन्नम्' 'अभिनिष्पत्तौ' 'अपि निष्पन्नम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। वृषभदेवटीकायामस्यैव व्याख्या-तत्वाच्च। द्वितीयपाठे तु सत्सप्तमी अभ्युपेतव्या। सा च उपपदविभक्तिरिति उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति परिभाषानुसारेण अभिहिते कर्मणि प्रथमाया एव युक्तत्वात्। किञ्चाद्यपाठे सामानाधिकरण्येनान्वयः, द्वितीयपाठे तु वैयधिकरण्येन इति संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यम् इत्यभ्युपगम-विरोधोऽपि। तृतीयपाठे तु अपिपदार्थस्य प्रकृतवाक्यार्थेऽन्वयोऽपि।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'व्यवहारः प्रतिबद्धः' 'व्यवहारनिबन्धनः' 'व्यवहारः प्रतिबन्धः' इति पाठत्रयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु विशेष्याप्रसिद्ध्या वाक्यार्थप्रत्यया-संभवः। तृतीयपाठे तु व्यवहारप्रतिबन्धयोर्भाव-घञन्तयोः सामानाधिकरण्यासंभवः। प्रतिबन्धपदस्य कथञ्चित् कर्मघञन्तत्वाभ्युपगमेऽपि अर्थसन्देहो दुर्वारः।

अत्रैवाग्रे—'उपदेशसमीहादि' 'उपदेशसमूहादि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। **वृषभदेवटीकायाम्**—'प्रयोज्योऽप्येवं करोमि इति समीहते' इति व्याख्यादर्शनात्। द्वितीयपाठे तु अर्थासंगतिः॥ १२५ ॥

## सैषा संसारिणां संज्ञा इति कारिका ॥ १२६ ।

अस्यास्तृतीये पादे—'अप्यतिक्रान्तम्' 'अप्यतिक्रान्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव वृषभदेवसम्मतः। 'अप्यतिक्रान्तम्' इति प्रतीकदर्शनात्। 'न स प्राणिरूपो विषयो यस्य चैतन्ये वाग्रूपानुषङ्गो नास्तीति' इति व्याख्यादर्शनाच्च। द्वितीयपाठे तु वैयधिकरण्यमपि दोषः। वस्तुतस्तु आद्यपाठोऽपि न युक्तः। तथाहि— यदि चैतन्यं वाचोमात्रामपि अतिक्रान्तं तदा कथं सर्वेषां प्राणिनां चैतन्ये नियतो वाग्रूपानुषङ्गो वृषभदेवोक्तः संगच्छते। तस्मादत्र—'अनतिक्रान्तम्' इति पाठो युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्।

अस्या एव चतुर्थे पादे—'सर्वजन्तुषु' 'सर्वजातिषु' इति पाठद्वयं दृश्यते। अत्रान्त्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'नहि सा चैतन्येनाविष्टा जातिरस्ति' इति व्याख्यादर्शनात्। तत्र जातिपदं जातिमत्परतया प्रयुक्तं वेदितव्यम्।

यद्यपि अस्या एव व्याख्याने स्वोपज्ञवृत्तौ समुद्धृतस्य—अर्थक्रियासु वाक् सर्वान् इति पद्यस्यावतरणिकायाम्–'एवं ह्याह' इति पाठः क्वचिदुपलभ्यते क्वचिन्न, तथापि स पाठः समुचित एव। स्वोपज्ञवृत्तिदर्शनेन तस्य पद्यस्य ग्रन्थान्तरत उद्धार इत्यर्थस्य निर्णयात्।

यद्यप्येतदग्रे स्वोपज्ञवृत्तौ—'नहि सा चैतन्येनानाविष्टा जातिरस्ति' इति पाठ उपलभ्यते। तथापि अर्थसंगत्यनुरोधेन 'नहि सा चैतन्येनाविष्टा जातिरस्ति' इति पाठ एव युक्तः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्।

अत्रैव स्वोपज्ञवृत्तौ समुद्धृते पद्ये–'अर्थक्रियासु वाक् सर्वान्' 'अर्थक्रियासु वाक् सर्वा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु सर्वापदं वाचो विशेषणं भवन्नौचित्यं न वार्थस्वारस्यमावहति। प्रत्युत निषेधवाचोऽपि एवं सति प्रवर्तकत्वप्रसङ्गः। अत्रैव पद्ये–'विसंज्ञोऽयम्' 'विसंज्ञेयम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिरित्यवधेयं सूरिभिः। अत्रैवाग्रे स्वोपज्ञवृत्तौ—'अलब्धवाक् शक्तिपरिग्रहम्' 'लब्ध्वा वाक्शक्तिमपरिग्रहम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिरित्यवधानवेद्यम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ समुद्धृतपद्येषु द्वितीयपद्ये—'एकत्वमनतिक्रान्ताः' 'एकत्वमभिनिष्क्रान्ताः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु एकत्वमभिलक्ष्य निष्क्रान्ता इत्यक्षरार्थे एकत्वरहिता इति फलितार्थस्य विवक्षितप्रकृतवाक्यार्थविरुद्धस्य प्रतीतिः॥ १२६॥

## प्रविभागे यथा कर्ता इति कारिका ॥ १२७।

अत्र—'प्रविभागे' इत्यस्य स्थाने अविभागे इति पाठः क्वचित् प्रतीयते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु विरुद्धार्थस्य प्रतीतिः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'प्रविभक्तसाध्यसाधनरूपो हि' 'प्रविभक्तसाध्यसाधनरूपे हि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। सामानाधिकरण्येनान्वयसंभवाच्च। द्वितीयपाठे तु नार्थसंगतिः। वैयधिकरण्यञ्च दोषः। न वा विवर्तपदार्थेन सममेतत्पदार्थस्यान्वयसंभवः। अत्रैवाग्रे—'विवर्तः। प्राप्तजन्मादिविक्रिया' 'विवर्तप्राप्तजन्मादिविक्रियाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ

एव युक्तः। अर्थसंगतेः। दर्शिता चात्रार्थसंगतिरस्माकम्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। नहि प्रातिभासिकवस्तुजन्मरूपेण विवर्तेन जन्मादिविक्रियाः प्राप्यन्ते।

अत्रैवाग्रे—'सैव वागविषया' 'सैवास्ववाग्विषया' 'सैवावाग्विषया' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरस्माकम्र्याम्। द्वितीयपाठे तु आनर्थक्यमेव दोषः। तृतीयपाठे तु नञर्थस्य वाचाविषयेण वा योग इति सन्देह एव दोषः। एष दोषो द्वितीयपाठेऽपि॥ १२७॥

## स्वमात्रा परमात्रा वा इति कारिका ॥ १२८।

अस्याश्चतुर्थपादे—'विधीयते' 'अभिधीयते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरस्माकम्र्याम्। द्वितीयपाठस्तु न युक्तः। तया ह्यर्थो विधीयते इति प्रतीकीकृत्य 'सैव हि श्रुतिरर्थं कल्पयति' इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। 'विधीयते। अर्थत्वेन प्रकल्प्यते' इति वृषभदेवव्याख्यादर्शनाच्च।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'सर्वप्रबोधरूपः' 'सर्वप्रबन्धरूपः' इति पाठद्वयमुपलभ्यते। अत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरस्माकम्र्याम्। द्वितीयपाठे तु न तदर्थस्य प्रकृतवाक्यार्थेऽन्वयसंभवः।

अत्रैवाग्रे—'चैतन्यं भूतयोनिः' 'चैतन्यं भूतयोनि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। तत्पुरुषे वर्तिपदार्थप्राधान्याच्च। द्वितीयपाठे तु बहुव्रीहौ अन्यपदार्थप्राधान्यम्। न च भूतानि चैतन्यस्य योनिः। नापि चास्मिन् पाठे प्रकृतदृष्टान्तसंगतिः।

अत्रैवाग्रे—'वायोरमिघनाः' 'वायोरभ्रध्वनाः' इति पाठद्वयं दृश्यते। इदं पाठद्वयमप्यसाधु। अर्थासंगतेः। अतोऽत्र—'अभ्रघनाः' इति पाठो युक्तः प्रतिभाति।

अत्रैवाग्रे—'पृथिव्याकाशादयः' 'पृथिव्या वा शालादयः' इतीदं दृश्यमानं पाठद्वयमपि असाधु। प्रथमपाठेऽवधेरनिर्देशात्। द्वितीयपाठे शकारस्यानौचित्यात्। दन्त्यसकारघटितस्यैव वृक्षवाचित्वात्। उत्तरत्र न्यग्रोधनिदर्शनेनात्रापि वृक्षनिदर्शनस्यैव युक्तत्वेन शालानिदर्शनस्यानौचित्यात्। शालायाः साक्षात् पृथिव्यनुपादानकत्वाच्च। एवञ्च 'पृथिव्या वा सालादयः' इति पाठो युक्तः।

अत्रैवाग्रे—'नानाप्राणिबहुधा' इति पाठ उपलभ्यमानोऽपि न युक्तः, व्याकरणसंस्काराभावात्। अतो 'नानाप्राणिषु बहुधा' इति पाठो युक्तः। वृषभदेवटीकायाम्—'नानाप्राणिषु' इति प्रतीकदर्शनाच्च। अत्रैवाग्रे—'प्रसिद्धया व्यवतिष्ठते' 'प्रसिद्धो व्यवतिष्ठते' 'प्रसिद्धौ व्यवतिष्ठते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अत्र पाठे प्रसिद्धेर्व्यवस्थाहेतुत्वस्य लाभात्। द्वितीयपाठेऽलाभात्। तृतीयपाठे हेतुत्वनियामकस्यान्वयस्य लाभेऽपि व्यतिरेकालाभेन हेतुत्वालाभात्। संभवदन्व्यतिरेकयोर्व्यतिरेकस्यापि हेतुत्वनियामकत्वात्।

अत्रैवाग्रे–'कल्पयति संस्करोति' 'विकल्पयति संकरोति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु न युक्तः। बिकल्पयति इत्यस्य विधानरूपार्थासंभवात्। संकरोति इति शब्दस्य च विधाने संस्कारे वाऽसाधुत्वात्॥ १२८॥

## अत्यन्तमतथाभूते इति कारिका॥ १२९।

अस्या द्वितीये पादे—'श्रुत्युपाश्रयात्' 'भूत्युपाश्रयात्' 'श्रुत्युपाश्रया' इति पाठत्रयं दृश्यते। तत्राद्यपाठे पञ्चम्यन्तार्थस्य वस्त्वाकारनिरूपणाकर्मकदर्शनरूपे प्रधानीभूते वाक्यार्थेऽन्वयः। तृतीयपाठे तु प्रथमान्तार्थस्य गुणीभूतायां वस्त्वाकारनिरूपणायामन्वय इति प्रथमपाठो युक्तः। तृतीयस्त्वयुक्तः। द्वितीयोऽप्ययुक्त एवार्थासंगतेः।

अस्या एव द्वितीये पादे—'दृश्यतेऽलातचक्राद्रौ' 'दृश्यते वातचक्रादौ' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्त.। दीर्घेऽलाते चक्रत्वाभावेन प्रकृतवाक्यार्थसंगतेः। द्वितीयपाठस्तु न युक्तः। वाते चक्राकारत्वस्य वास्तवत्वेन प्रकृतवाक्यार्थासंगतेः।

अस्या एव चतुर्थे पादे—'वस्त्वाकारनिरूपणा' 'वस्त्वाकारनिरूपणम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव समुचितः। ण्यासश्रन्थो युच्—इति युचः स्त्रियां विधानात्। ल्युट् तु युचा विशेषविहितेन बाध्यमानोऽपि कृत्यल्युटो बहुलमित्यत्र बहुलमिति योगविभागेन क्वचिद् भवति इति क्वाचित्कः, अतः स्वाभाविकः स्त्रीप्रयोग एव न्याय्यः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'सा तमर्थम्' 'सामर्थ्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु न युक्तः। सर्वथाऽप्यर्थसंगतेरभावात्। अत्रैव—'जनयतीव' 'ज्ञापयतीव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु—दर्शयतीति प्राक्तनेन पदेन गतार्थः।

अत्रैवाग्रे—'नित्यमवस्थितः। न च बाह्यवस्तुगतम्' 'नित्यमवस्थितेन च बाह्यवस्तुगतम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु दशदाडिमादिवाक्यवदनर्थकः। अत्रैवाग्रे—'तच्छ्रुतिबीजाभिमुख्ये' 'तच्छ्रुतिष्वाभिमुख्ये' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एवार्थसंगत्या युक्तः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः॥ १२९॥

## अपि प्रयोक्तुरात्मानम् इति कारिका॥ १३०।

अस्या एव चतुर्थे पादे—'येन सायुज्यमश्नुते' 'येन सायुज्यमिष्यते' इति पाठद्वयं दृश्यते। तत्र द्वितीयः पाठ एव युक्तः। इच्छायाः करणविशेषनिर्देशं विनापि

बोधसंभवात् । दुर्लभवस्तुप्राप्तौ तु कर्मनिर्देश आवश्यकः । अन्यथा तद्बोधानुपपत्तिः । अतः प्रथमपाठो न युक्तः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'आश्रयः कर्मणाम्' इति पाठः क्वचिद् दृश्यते, क्वचित्तु आश्रयपदं न दृश्यते । तत्राश्रयपददर्शनमेव वरम्, अन्यथा कर्मणामित्यस्य कुत्रान्वयः स्यात् ।

अत्रैवाग्रे—पर्जन्यवद् दवाग्निवच्च' 'पर्जन्यवद्देवाग्निवच्च' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । द्रष्टव्या चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु पुनरुक्तार्थकत्वम् । अग्निसामान्यस्य च दवाग्निवत् प्रभावोच्छेद-शक्तियुक्तत्वाभावेन दृष्टान्तत्वासंभवः । दवाग्नौ नु पूर्वतृणानामुच्छेदशक्तिः, दग्धतृण-भस्मद्वारिका च भावितृणानां प्रजननशक्तिरपि वर्तते । तदुक्तं कविभिः—'कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो बीजप्ररोहजननीं ज्वलनः करोति" इति ॥ १३० ॥

**तस्माद् यः शब्दसंस्कार इति कारिका ॥ १३१ ।**

अस्याश्चतुर्थे पादे—'तद् ब्रह्म' 'सद् ब्रह्म' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । तत्पदस्य श्रुत्यादिप्रसिद्धार्थकत्वेन सार्थकत्वात् । द्वितीयपाठे तु सत्पदस्य वैयर्थ्यम् । अमृतपदेनैव शाश्वतिकसत्त्वस्य लाभात् ।

अस्या व्याख्याने स्वोपज्ञवृत्तौ 'रूपेण संक्रियमाणे' इति पदद्वयस्य मध्ये क्वचित्—'वृत्तिमतिक्रान्ते' इति, क्वचित्—'वृत्तिमति' इति पदं दृश्यते । तत्तु प्रक्षिप्तं वेदितव्यम् । अनन्वितार्थकत्वात् । क्वचित्तु—'संस्क्रियमाणे' इति पदं नास्ति । तत्तु नोचितम् । तस्य पदस्याभावे साकाङ्क्षत्वेन प्रकृतवाक्यार्थापरिसमाप्तेः ।

अत्रैवाग्रे समुद्धृते पद्ये—'वाचं ज्ञाने' 'वाचः स्थाने' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । दर्शिता चार्थसंगतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु न कथमप्यर्थसंगतिः । न च निवेश्य इत्यस्य कर्मलाभः । वाच इति शसन्तं तु न संमति । पूर्वत्र वाच इति उत्तरत्र अस्या इत्येकवचनदर्शनात् । वृषभदेवटीकायां ज्ञाने इति प्रतीकदर्शनाच्च । अत्रैव समुद्धृते पद्ये 'छिन्नग्रन्थिपरिग्रहः' 'छिन्नग्रन्थिपरिग्रहम्' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठो न युक्तः । प्रकृतवाक्यार्थे तदर्थासमन्वयात् । वृषभदेवटीकायां प्रथमपाठस्यैव प्रतीकदर्शनाच्च । अत्रैव—'परेण ज्योतिषैकत्वम्' 'कारणज्यौतिषैकत्वम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । वृषभदेवटीकायां 'परेण' इति प्रतीकदर्शनात् । द्वितीयपाठे समाससंदेहेनार्थसन्देहसंभवात् । सूर्यचन्द्रा-दीनामपि कथञ्चित् कारणज्योतिष्ट्वसंभवाच्च ।

अत्रैव—'छित्त्वा ग्रन्थीन् प्रपद्यते' 'छित्त्वा ग्रन्थीन् प्रवर्तते इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव साधुः । अर्थसंगतेः । द्वितीयपाठे प्रवृतेरकर्मकत्वेन तादृशैकत्वस्य

कर्मत्वासंभवः। यदि तु तादृशस्यैकत्वस्य कर्तृत्वं तदा छित्त्वा ग्रन्थीन् इत्यत्र समान-कर्तृत्वस्यानिर्वाहः। तादृशैकत्वस्य ग्रन्थिच्छेदनक्रियाकर्तृत्वासंभवात् ॥ १३१ ॥

## न जात्वकर्तृकं कश्चिदिति कारिका ॥ १३२ ।

अत्र--'नचात्मकर्तृकं कश्चित्' न जात्वकर्तृकं किञ्चित्' 'न जात्वकर्तृकं कश्चित्' इत्यन्यदपि पाठत्रयमुपलभ्यते। अत्र चतुर्षु पाठेषु प्रथमपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अर्थासंगतिः। आत्म-कर्तृकत्वस्याप्रतिपत्तावपि अन्यकर्तृकत्वस्य प्रतिपत्तिसंभवात्। तृतीयपाठेऽपि किञ्चिदित्यस्य विशेष्यालाभः। चतुर्थपाठे तु कश्चित्पदानर्थक्यम्। प्रतिपत्तिक्रियायाः कर्तुरलाभश्च।

अस्या एव तृतीये पादे—'सर्वागमापाये' 'सर्वागमोपाये' इति पाठद्वयं दृश्यते। तत्रार्थसंगत्या प्रथमः पाठ एव युक्तः। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अस्या एव चतुर्थे पादे—'त्रय्ये वाते' 'त्रय्ये वादौ' 'त्रय्ये वान्ते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु सर्वागमापाये इति न युज्यते। अपायस्य ध्वंसरूपत्वेन वस्तुसत्तापुरःसरत्वात्। तृतीयपाठोऽपि न युज्यते। सर्वागमापाये इत्यनेनैव गतार्थत्वात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'विच्छिन्नेष्वागमान्तरानुसन्धाने' 'विच्छिन्नेष्वागमान्तरानसंधाने' इति पाठद्वयं दृश्यते। तत्र द्वितीयः पाठोऽयुक्त इति स्पष्टमेवार्थासंगत्या प्रतीयते ॥ १३२ ॥

## अस्तं जातेषु वादेषु इति कारिका ॥ १३३ ।

अत्र—'अस्तम्' 'अन्तम्' इति पाठद्वयम्, 'वादेषु' 'वेदेषु' इति पाठद्वयञ्च दृश्यते। तत्र वादानां वेदानाञ्च अस्तयानं तिरोधानम्। अन्तयानञ्च प्रध्वंसः, तत्र तेषामुभयेषां तिरोधानमेव ब्रह्मवादिसम्मतमिति उभयत्रापि पाठद्वये प्रथमपाठ एव युक्तः।

अस्या एव द्वितीये पादे—'कर्तृष्वन्येष्वसत्स्वपि' 'कर्तृष्वन्येषु सत्स्वपि' इति पाठ-द्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तदानीमन्येषां वेदकर्तॄणां वादकर्तॄणाञ्चासत्वात्।

अस्या एव तृतीये पादे—'श्रुतिस्मृत्युदितम्' 'श्रुतिस्मृतिगतम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। श्रुतिस्मृत्युदितत्वस्य श्रुतिस्मृतिविहितत्वरूपत्वेन लोककर्तृकधर्मकर्मकव्यतिवृत्त्यभावे प्रयोजकत्वसंभवात्। श्रुतिस्मृतिगतत्वन्तु अर्थवाद-वाक्यार्थस्यापि संभवति इति न तस्य तादृशव्यतिवृत्त्यभावे प्रयोजकत्वसंभवः।

अत्रैव—'धर्मम्' 'कर्म' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। धर्मपदस्य कर्मविशेषपरत्वेन स्पष्टप्रतिपत्तिकरत्वात्। कर्मपदन्तु कर्मसामान्यपरमिति पदान्त-रापेक्षया ततः कर्मविशेषप्रतिपत्तिरिति द्वितीयपाठ उपेक्ष्यः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'न प्रतापयन्ते' 'न प्रतीयन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगति। प्रतनिरुद्धस्यार्थस्यैवात्र तात्पर्यविषयत्वात्॥ १३३॥

## ज्ञाने स्वाभाविके नार्थ इति कारिका॥ १३४।

अत्र—'नार्थः' 'कोऽर्थः' इति पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु 'कश्चन' इति पदस्य दुर्वारं वैयर्थ्यम्। अस्या एव द्वितीये पादे—'शास्त्रैः कश्चन' 'शास्त्रे कश्चन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। शास्त्रवैयर्थ्यज्ञापनेन सार्थक्यात्। द्वितीयपाठे तु शास्त्रे कस्य वैयर्थ्यमिति न विज्ञायते। इत्युपेक्ष्यः स पाठः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'हितप्रतिपादनार्थानाम्' 'हितप्रतिपादितार्थानाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव पूर्वापरालोचनेन युक्तः प्रतीयते। द्वितीयपाठे तु न कथमप्यर्थसंगतिः। अत्रैव—'उपदेशशास्त्राणाम्' इत्यस्यानन्तरं हि-शब्दः क्वचित् पठ्यते, स तु न युक्तः। अनुपदेशं हि इत्यत्र प्राग् हि-शब्दस्य सत्त्वात्।

अत्रैवाग्रे—'तां ताम्' 'तां वा' इति पाठद्वयं दृश्यते। तत्र वीप्सावद्योतनाय पूर्वपाठ एव युक्तः। द्वितीयपाठस्तु न युक्तः। पक्षान्तरोपन्यासाभावेन वा-शब्दोपन्यासस्यानौचित्यात्। अत्रैव—'बहुविकल्पाम्' 'बहुकल्पाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नास्त्यर्थसंगतिः कथमपि॥ १३४॥

## वेदशास्त्राविरोधी च इति इति कारिका॥ १३५।

अस्याश्चतुर्थे पादे—'केवलागमनिष्ठते' 'केवलागमनिष्ठति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु न कथमप्यर्थसंगतिः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'अथ तर्काननुगमेन' 'अथवा तर्काननुगमेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। उत्तरग्रन्थानुरोधेन अत्र प्रश्नार्थकस्याथ-शब्दस्यैवौचित्यात्। द्वितीयपाठस्तु न युक्तः। पक्षान्तरोपन्यासाभावात्। अत्रैवाग्रे—'नापेक्षते' 'नापेक्ष्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। य इति कर्तृपदस्य प्रागुपात्तत्वात्। द्वितीयपाठे तु य इति पदस्यानन्वयः॥ १३५॥

## सतोऽविवक्षापारार्थ्यमिति इति कारिका॥ १३६।

अत्र 'सतोऽविवक्षा' 'यतोऽविवक्षा' इति पाठद्वयं 'पारार्थ्यम्' 'वागर्था' इति पाठद्वयञ्च दृश्यते। तत्राद्ये पाठद्वये प्रथमपाठ एव युक्तः। 'शब्देनोपात्तस्याप्यर्थस्याविवक्षा' इति वृषभदेवव्याख्यादर्शनात्। आद्यस्य पाठद्वयस्य द्वितीयपाठेऽविवक्षादीनां पूर्वपद्यार्थे हेतुत्वाभावाच्च। द्वितीये पाठद्वयेऽपि प्रथमपाठ एव युक्तः।

अर्थसंगतेः। द्वितीयपाठे तु नास्ति कथमप्यर्थसंगतिः। वृषभदेवटीकायाम्—पारार्थ्यमिति प्रतीकदर्शनादपि द्वितीयपाठो हेयः।

अस्या एव द्वितीयपादे—'व्यक्तिरर्थस्य' 'वृत्तिरर्थस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'शब्दसामान्येनावसीयमानस्य व्याख्यान्तरप्रकल्पनेन विशेषाभिव्यक्तिः' इति वृषभदेवव्याख्यादर्शनात्, द्वितीयपाठेऽर्थासंगतेश्च। 'लैङ्गिकी खल्वपि व्यक्तिः' इति स्वोपज्ञवृत्तौ पाठोपलम्भाच्च।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'तथा च नक्षत्रं दृष्ट्वा' 'तद् यथा नक्षत्रं दृष्ट्वा' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। तथा पाठे एव हि पारार्थ्योदाहरणत्वसंभवात्। अत्रैवाग्रे—'लैङ्गिकी खल्वपि' 'लौकिकी खल्वपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। लिङ्गाद् विशेषप्रतिपत्तिरिति अग्रे व्याख्यादर्शनात्। द्वितीयपाठस्तु नाग्रिमग्रन्थेन समर्थितो भवति॥ १३६॥

## शब्दानामेव सा शक्तिः इति कारिका॥ १३७।

अस्या द्वितीये पादे—'तर्को यः पुरुषाश्रयः', 'तत्कार्यः पुरुषाश्रयः', 'यत्कार्यः पुरुषाश्रयः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'पुरुषाश्रयोऽयं तर्क इति मन्यन्ते' इति स्वोपज्ञवृत्तिवाक्यदर्शनात्। इतरत् पाठद्वयं तु नैतद् वाक्यानुकूलम्।

अस्या एव तृतीये पादे—'शब्दाननुगतो न्यायः' 'स शब्दानुगतो न्यायः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिः। नहि शब्दानुगतस्य न्यायस्य (तर्कस्य) अनिबन्धनत्वमस्ति, शब्दनिबन्धनकत्वात्।

यत्तु यत्तत्पदे अध्याहृत्य वृषभदेवेन व्याख्यातम्—'यः शब्दानुगतः स एव न्याय इति द्रष्टव्यः' इति, तन्न युक्तम्; अध्याहारे उत्तरार्धे वाक्यभेदे च दोषादिति। पूर्वपाठे तु नैतद् दोषद्वयमस्ति।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'शब्द एवोपदेष्टा', 'शब्द एवोपदेशः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तत्रैव तदुत्तरग्रन्थस्य हेतुत्वसंभवेनैकवाक्यत्वात्। द्वितीयपाठे तु नास्ति तत्।

अत्रैव वाक्ये—'योग्यशब्दनिबन्धनैव', 'योग्यशब्दनिबन्धनं तैः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्याचार्यसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिरिति विभावनीयम्।

अत्रैव वाक्ये—'विवक्षया', 'विवक्षायाः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अत्र पाठे पूर्वपरपदयोः सामानाधिकरण्यात्। द्वितीयपाठे तु तदभावो दोषः।

अत्रैवाग्रे—'अनुगच्छति पुरुषे', 'अनुगच्छन्ति पुरुषे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः, घटीनां महतो मण्डलस्य क्रतुकृतत्वाभावात्।

अत्रैवाग्रे—'द्राविडोक्तेन भवति वक्तव्यम्' इति 'द्राविडकेन भवति वक्तव्य-मित्युच्यते' इति पाठद्वयं दृश्यते। अत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। पूर्वस्मिन् वाक्ये उक्ते इति प्रदर्शनेन—अत्रापि उच्यते इति पदान्वयासम्भवाच्च ॥ १३७ ॥

**रूपादयो यथा दृष्टा इति कारिका ॥ १३८ ।**

अस्या द्वितीये पादे—'प्रत्यर्थं यतशक्तयः', 'प्रत्यर्थं यत्नशक्तयः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अव्ययीभावसमासस्य समासान्तरघटकत्वेऽसाधुत्वा-भ्युपगमस्य प्रागुक्तत्वात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'दृष्टफलानां मद्य-तीर्थोदकादीनाम्' 'अदृष्टफला मद्यतीर्थोदकादीनाम्' इति पाठद्वयं दृश्यते। अत्र पाठद्वयमपि असाधु, अर्थासंगतेः। अतः—'अदृष्टफला मद्यतीर्थोदकादीनाम्' इति पाठः साधुर्भाति, अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरस्वाकव्याम् ॥ १३८ ॥

**यथैषां तत्र सामर्थ्यमिति कारिका ॥ १३९ ।**

अस्या द्वितीये पादे—'प्रतीयनाम्' 'प्रतीयते' 'विधीयताम्' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, 'यथैवावधीयताम्' इति स्वोपज्ञवृत्त्यनुरोधात्। अस्या एव चतुर्थे पादे–'अभ्युदयार्थिनाम्', 'अभ्युदयार्थिभिः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति परिभाषानु रोधात् ॥ १३९ ॥

**सर्वोऽदृष्टफलानर्थान इति कारिका ॥ १४० ।**

अस्या एव चतुर्थे पादे—'शक्यते', 'दृश्यते' इति पाठद्वयम् 'आगमे' 'आगते' इति च पाठद्वयं दृश्यते। तत्राद्ये पाठद्वये प्रथमपाठ एव युक्तः, वक्तुमित्यनेन सहैक-वाक्यत्वसंभवात्। दृश्यते इति पाठे तु न तस्य संभवः। द्वितीयेऽपि पाठद्वये प्रथम-पाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरस्वाकव्याम्। द्वितीयद्वितीये तु नार्थसंगतिः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'आगमं कश्चित्', 'आगमं किञ्चित्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, विशेष्यविशेषणयोः समानलिङ्गकत्वस्यौ-चित्यात्। अत एव द्वितीयपाठो न युक्तः ॥ १४० ॥

**साधुत्वज्ञानविषया इति कारिका ॥ १४१ ।**

अस्या द्वितीये पादे—'सैषा', 'सेयम्' इति पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः, इदमर्थापेक्षया संनिकृष्टतरार्थकत्वात्। अस्या एव तृतीये पादे—'शिष्टानाम्', 'शिष्याणाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, शिष्टानव्यतिक्रामन्ति इति, शिष्टसमाचाराविच्छेदेनैव इति च स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। अस्या एव चतुर्थे पादे—'स्मृतिनिबन्धनम्', 'व्याकरणं धनम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ

एव युक्तः, 'स्मृतो ह्यर्थः पारम्पर्यादविच्छेदेन पुनः पुनर्निबध्यते' इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'यासु, निबद्धम्' 'साधु निबद्धम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु 'स्मृतयः' इत्यस्य कुत्रान्वय इति न विद्मः।

अत्रैव—'निबद्धं समाचारम्', 'श्रुतिनिबन्धं समाचारम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः स्फुटैव। समाचार-पदेन सामानाधिकरण्यासंभवात्। अत्र 'निबन्धनम्' इति पाठोऽपि, अत एवायुक्तः।

अत्रैवाग्रे—'शिष्टसमाचाराविच्छेदेनैव', 'शब्दाध्युष्टसमाचाराविच्छेदेनैव', 'शब्दादीष्टसमाचाराविच्छेदेनैव' इति पाठत्रयं दृश्यते। अत्राद्यपाठ एव युक्तः, अर्थ-संगतेः। इतरस्मिन् पाठद्वये तु नार्थसंगतिरिति विचार्यं सुधीभिः॥ १४१॥

**वैखर्या मध्यमायाश्च इति कारिका॥ १४२।**

अस्याश्चतुर्थे पादे—'त्रय्या वाचः', 'त्रयीवाचः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, व्यासेऽर्थसंदेहाभावात्। समासे तु अर्थसंदेहः, समाससंदेहात्। अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'प्रसिद्धसाधुभावा भ्रष्टसंस्कारा च' इति क्वचित् पाठः। क्वचित्तु—'भ्रष्टसंस्कारा च' इति न पठ्यते। किन्तु स पाठः समुचितः। अन्यथा न्यूनता स्यात्।

अत्रैवाग्रे—'प्रतिलब्धसमाधाना', 'प्रतिसमाधाना', 'प्रतिलब्धसाधना' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्या चार्थसंगतिरम्बा-कर्त्र्याम्। द्वितीयपाठे तु समाससन्देहेनार्थसंदेहः। तृतीयपाठस्तु न युक्तः। पश्यन्त्यां प्रतिलब्धसाधनत्वस्यासंभवात्। वृषभदेवटीकायाम्—'प्रतिलब्धसमाधाना च' इति प्रतीकदर्शनाच्च।

अत्रैवाग्रे—'व्यवस्थितः साध्वसाधुप्रविभागः' 'व्यवस्थितसाध्वसाधुप्रविभागा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयस्तु न युक्तः, अर्थासंगतेः।

अत्रैवाग्रे—'अधिगम्यते', 'गम्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठेऽधिगमः साक्षात्कारः। अधिकं ज्ञायते इत्यर्थात्। द्वितीयपाठं तु ज्ञानसामान्यमर्थ इति प्रथम-पाठ एव युक्तः, योगेन साक्षात्कारस्यैव संभवात्।

अत्रैवाग्रे—'इत्येकेषामागमः', 'इत्येषामागमः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः। न ह्यत्र वादिनः केचिन्निर्दिष्टपूर्वा य एषामित्यनेन प्रत्यवमृश्येरन्।

अत्रैव समुद्धृते पद्ये—'प्रक्षरत्येका', 'प्रचरत्येका' इति पाठद्वयं दृश्यते। तत्राद्य-पाठ एव युक्तः, रसमुत्तमशालिनी इत्याद्युत्तरवाक्यार्थानुरोधात्। द्वितीयपाठे तु रसं प्रचरति इति वाक्यार्थासंगतिः स्पष्टैव।

अस्यैव पद्यस्य चतुर्थे पादे— शुचिस्मिता', 'शुचिस्थिता' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, भारत्याः शुचिस्मितयुक्तत्वसंभवात्। शुचिस्थितत्वाभावाच्च। क्वचित्तु—शुचिस्मिते इति ब्राह्मण्याः सम्बोधनं दृश्यते। तत्तु अतीव शोभनम्।

अत्रैवाग्रे पद्ये—'अन्या त्वप्रेर्यमाणेव', 'अन्या त्वप्रमाणेव', 'अन्या त्वापूर्यमाणैव' इति पाठत्रयं दृश्यते। इदं त्रयमपि असाधु, अर्थासंगतेः। तस्मादत्र—'अन्या तु प्रेर्यमाणैव' इति पाठो युक्तः, अर्थसंगतेः। द्रष्टव्या चात्रार्थसंगतिरम्बाकर्त्र्याम्।

अत्रैवाग्रे समुद्धृते पद्ये–'प्राणेनाप्यायिता सेयम्', 'प्राणेनाप्यायिता सैवम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, प्रकारस्य प्रागनुक्तेः।

अत्रैव 'व्यवहारनिबन्धना', 'व्यवहारनिबन्धनम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठो न युक्तः, बहुव्रीहौ शब्दसाधुत्वेऽपि अर्थासंगतेः। षष्ठीतत्पुरुषे तु शब्दासाधुत्वम्। ततो द्वितीयपाठ एवार्थसंगतया युक्तः।

अत्रैवाग्रे समुद्धृते पद्ये—'स्थानेषु विधृते', 'स्थानेषु विवृते', 'स्थानेष्वभिहिते' इति पाठत्रयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। विवृते इत्यस्य वर्णरूपतयोद्भूते इत्यर्थः। प्रथमपाठे तु इवशब्दाध्याहारे क्लेश एव दोषः। तृतीयपाठे तु वायौ स्थानाभिघातः, वाचस्तु वर्णपरिग्रह इति वैयधिकरण्येन न घटते इति तदुपपत्तये क्लेशः कर्तव्यो भवति। प्रथमपाठे तु स्थानेषु वायोरभिघाते न वर्णरूपतया उद्भवः, उद्भूतस्य तु वर्णरूपस्य वाचि समारोप इति स्फुटं प्रतीयमानत्वेन न वाक्यार्थोपपत्तयेऽणुरपि क्लेशः।

अस्यैव पद्यस्य चतुर्थे पादे—'प्राणवृत्तिनिबन्धना', 'प्राणवृत्तिनिबन्धिनी' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्या चात्रार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु विपरीतार्थप्रत्यायकतया न युक्तः।

अत्रैवाग्रे समुद्धृते पद्ये—'केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी', 'केवलं बुद्ध्युपादानक्रमरूपानुपातिनी' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चात्रार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु वाग्रूपे एकस्मिन्नुद्देश्ये विधेयभेदेन वाक्यभेदः।

अत्रैवाग्रे समुद्धृते–अविभागा तु पश्यन्तीति पद्ये चतुर्थे पादे—'सूक्ष्मा वागनपायिनी, सैषा वागनपायिनी' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्या चात्रार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु अप्रत्यक्षायाः परस्या वाच एतत्पदेन निर्देशो नोचितः। समीपतरवर्ति चैतदो रूपमिति कोशात्। अत्र हि समीपतरवर्तिपदेन अत्यन्तप्रत्यक्षत्वमुपलक्ष्यते।

अत्रैवाग्रे समुद्धृते पद्ये—'सेयमाकीर्यमाणाऽपि', 'सैषा संकीर्यमाणाऽपि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—आकीर्यमाणत्वं बहिः संश्लेषः, संकीर्यमाणत्वं तु नीरक्षीरन्यायेन सर्वात्मना संश्लेषः। न च साध्वसाधुशब्दयोस्तादृशं संकीर्यमाणत्वं दृश्यते संभवति वा। आकीर्यमाणत्वं तु अनुभूयते। 'सेयमापूर्यमाणा' इत्यपि क्वचित्पाठ उपलभ्यते। सोऽपि न युक्तः, आपूर्यमाणापदस्य आकीर्यमाणार्थे लक्षणाया दोषत्वात्। वृषभदेवटीकायाम्—'आकीर्यमाणाऽपि' इति प्रतीकदर्शनाच्च।

अस्यैवोद्धृतपद्यस्य द्वितीये पादे—'आगन्तुकैर्मलैः, आगन्तुभिर्मलैः' इति पाठद्वयं दृश्यते तत्राद्यपाठ एव युक्तः। वृषभदेवटीकायाम्—आगमैरिति प्रतीकदर्शनात्। अव्यविकन्यायेन कप्रत्ययान्तप्रयोगस्यैव दर्शनादौचित्याच्च।

प्राप्तरूपोपरागा सा इति पद्यस्य तृतीये पादे—'सत्त्वमात्रेव', 'सत्त्वमात्रेण' इति पाठद्वयं वर्तते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शिता चात्रार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठे तु नार्थसंगतिरिति अवधानविज्ञेयम्।

अस्यैव चतुर्थे पादे—'न व्यवकीर्यते, न व्यतिकीर्यते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। व्यतिभ्यां परस्य किरतेः संकररूपे व्यतिकरे शक्तिः। व्यवकिरतेस्तु प्रक्षेपविशेषरूपे व्यवकरे शक्तिः, संकरे तु लक्षणेति सैव दोषः।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'प्रतिपत्त्युपायो दर्शितः', 'प्रतिपत्त्युपायदर्शिता', 'प्रतिपत्त्युपायं दर्शिता' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। इतरत् पाठद्वयं तु अनर्थकत्वेन उन्मत्तप्रलापसमम्॥ १४२॥

## तद्विभागाविभागाभ्याम् इति कारिका॥ १४३।

अस्यास्तृतीये पादे—'स्वभावज्ञैश्च', 'स्वभावज्ञैस्तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठो न युक्तः। चकारस्य त्वर्थकस्यैव अर्थसंगत्यापरिग्रहे तु शब्दपाठस्यैवौचित्यात्। एतद्व्याख्याने स्वोपज्ञवृत्तौ—'सन्ति तु साधुप्रयोगानुमेया एव शिष्टा' इत्यादिवाक्ये तु शब्दप्रयोगस्यैव दर्शनाच्च।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'बहूनां समुदायानां प्रतिपादनम्', 'बहुतरं समुदायानां प्रतिपादनम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। सामानाधिकरण्येन व्यवधानेन चान्वयस्यौचित्यात्। पूर्वत्रापि बहुपदार्थे शब्दविशेषणत्वस्यैव दर्शनाच्च। द्वितीयपाठे तु व्यवहितेऽन्वयः, उपक्रान्तस्य शब्दविशेषणत्वस्य त्यागश्चेति दोषद्वयम्।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'धर्माधर्मसाधनभावेन', 'धर्माधर्मसाध्यभावेन' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, शब्दशक्तौ धर्माधर्मसाधनत्वस्योपपत्तेः। द्वितीयपाठस्तु न युक्तः, शब्दशक्तौ धर्माधर्मसाध्यत्वस्यानुपपत्तेः॥ १४३॥

**अनादिमव्यवच्छिन्नाम् इति कारिका ॥ १४४ ।**

अत्र—'अनादिमप्यवच्छिन्नाम्' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः, देशकालाद्यवच्छिन्नाया अनादित्वाकर्तृकत्वयोरनुपपत्तेः । तस्मात्—'अव्यवच्छिन्नाम्' इत्येव पाठो युक्तः । वृषभदेवटीकायाम्—अव्यवच्छिन्नाम् इति प्रतीकदर्शनाच्च ।

अस्या एव तृतीये पादे—'शिष्टैर्निबध्यमाना तु', 'शिष्टैर्निबध्यमानापि' इति पाठद्वयं दृश्यते । अत्राप्याद्यपाठ एव युक्तः । वृषभदेवटीकायाम्—'निबध्यमाना तु' इति प्रतीकदर्शनात् । स्वोपज्ञवृत्तावपि 'स्मृतिस्तु नित्यमविच्छिद्यमानार्था गद्यश्लोकवाक्यादिभेदेन प्रतिकालमन्यथाशिष्टैरेव निबध्यते' इति व्याख्यादर्शनेन तुशब्दस्यैवौचित्यप्रतीतेः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'पुरुषस्य दर्शनम्', 'परस्परदर्शनम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । द्रष्टव्या चात्रार्थसङ्गतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु पूर्वपरालोचनेनौचित्यं प्रतीयते ।

अत्रैवाग्रे—'अव्यभिचरितस्वरवर्णानुपूर्व्यदेशकालनियमा', 'अव्यभिचरितस्वरवर्णानुपूर्वदेशकालनियमा' 'अव्यभिचरितस्वरवर्णानुपूर्व्या देशकालनियमा' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्त । तथाहि—अत्र अव्यभिचरितस्वरवर्णानुपूर्वी अदेशकालनियमा इति परिच्छेद.। पदद्वयेऽपि बहुव्रीहिसमासः । एवञ्चात्र पाठेऽर्थसङ्गतिर्भवति । दर्शिता चार्थसङ्गतिरम्बाकर्त्र्याम् । इतरस्मिन् पाठद्वये तु नार्थसङ्गतिरित्यवधानेन द्रष्टव्यम् ।

अत्रैवाग्रे–'नित्यमविच्छिद्यमानार्था गद्यश्लोकवाक्यादिभेदेन', 'नित्यमविच्छिद्यमानार्थावगमश्लोकवाक्यादिभेदेन' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । द्वितीयपाठे तु न कथमप्यर्थसङ्गतिरित्यवधेयम् ।

अत्रैवाग्रे स्वोपज्ञवृत्तौ—'विषयान्तरे प्रकृष्टाभ्युदयहेतुत्वम्', 'विषयान्तराभ्युदयहेतुत्वम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । द्वितीयपाठे तु समाससन्देहेनार्थसंदेहः । किञ्च विषयान्तरे इत्यस्य ब्रह्मवधादीनामित्यत्र विशेषणत्वेनान्वयः इति । न तस्याभ्युदयहेतुत्वपदेन सह समासो युक्तः ।

अत्रैवाग्रे—'तथाहि दृष्टार्थासु', 'यासु दृष्टार्थासु' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अस्य ग्रन्थस्य पूर्वग्रन्थोपपादनपरत्वसंभवात् । द्वितीयपाठे तु न तत्संभव इति हेयः स पाठः ।

अत्रैवाग्रे—'अविच्छेदेन व्यवस्था विद्यते', 'अविच्छेदेन व्यवस्था विच्छिद्यते', 'अविच्छेदेन व्यवस्था व्यवच्छिद्यते' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः' । इतरस्मिन् पाठद्वये तु परस्परं व्याघातः ॥ १४४ ॥

## अविभागाद् विवृत्तानाम् इति कारिका ॥ १४५ ।

अत्र—'अविघाताद् विवृत्तानाम्' इति पाठोऽपि क्वचिद् दृश्यते । स तु न युक्तः, अर्थासंगतेः । प्रथमपाठे तु अर्थसंगतिर्दर्शिताऽम्बाकर्त्र्याम् ।

अस्या एव द्वितीये पादे—'अभिख्या', 'अभिधा' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । स्वप्नवदिति दृष्टान्तेऽभिख्याख्यानसंज्ञानमित्यर्थस्यैवौचित्यात् । अभिधा तु शब्दशक्तिरिति नात्र दृष्टान्ते तस्याः कश्चनोपयोगः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'स्वप्नप्रबोधवृत्त्या नित्यम्', 'स्वप्नप्रबोधवृत्त्या नित्यं प्रबोधवृत्त्या' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । द्रष्टव्या चार्थसङ्गतिरम्बाकर्त्र्याम् । द्वितीयपाठे तु नित्यपदोत्तरं प्रबोधवृत्त्या इति पाठो व्यर्थः ।

अत्रैव—'विभक्तपुरुषानुकारितया' 'विबोधपुरुषानुकारितया', 'विभक्तिपुरुषानुकारितया' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । वृषभदेवटीकायाम्—विभक्तपुरुषेति इति प्रतीकदर्शनाच्च । द्रष्टव्या चार्थसङ्गतिरम्बाकर्त्र्याम् । इतरस्मिन् पाठद्वये तु नार्थसङ्गतिरिति स्पष्टमेव ।

अत्रैवाग्रे—'केचित् प्रतिभाऽऽत्मनि', 'केचित् प्रविभागात्मनि' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । वृषभदेवटीकायाम्—'प्रतिभात्मनि' इति प्रतीकदर्शनाच्च ।

अत्रैवाग्रे—'सर्वभेदशक्तियुक्तः', 'सर्वभेदशक्तिम्', 'अभिन्नशक्तियुक्तम्', 'अभिन्नशक्तिम्' इति पाठचतुष्टयं दृश्यते। तत्राद्ये पाठद्वये द्वितीयेऽपि च पाठद्वये प्रथमपाठ एव युक्तः, शब्दगौरवसत्त्वेऽपि अर्थस्य स्फुटत्वात् । समासे वर्तिपदार्थप्राधान्याच्च । उभयत्रापि द्वितीयपाठे तु शब्दलाघवसत्त्वेऽपि समाससन्देहेनार्थसंदेहः । बहुव्रीहौ अन्यपदार्थप्राधान्यञ्च । एवञ्च वृषभदेवटीकायाम्—'अभिन्नशक्तिञ्च' इति प्रतीकमपि नादर्तव्यम् ।

अत्रैवाग्रे—'दृष्टादृष्टार्थाञ्च' 'शब्दार्थां च' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसङ्गतेः । द्रष्टव्या चात्रार्थसङ्गतिरम्बाकर्त्र्याम् । द्वितीयपाठस्तु आनर्थक्यादुपेक्ष्यः ।

अत्रैवाग्रे—'संगृहीतचरणविभागाम्' 'स्वगृहीतचरणविभागाम्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । अर्थसंगतिश्चात्राम्बाकर्त्र्यां द्रष्टव्या । द्वितीयपाठे तु न कथमप्यर्थसंगतिः ॥ १४५ ॥

## कायवाग्बुद्धिविषया इति कारिका ॥ १४६

अस्याश्चतुर्थे पादे—'शास्त्रैः', 'शास्त्रे' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । तत्तच्छास्त्रेषु तत्तन्मलविशुद्धिकरणत्वस्यैव संभवात् । तद्विशुद्ध्यधिकरणत्वस्य तु कायवाग्बुद्धिष्वेव संभवः, न शास्त्रेषु इत्येव धेयम् ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'यथैव हि', 'तथैव हि' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अत्रैवाग्रे—'तथेदमपि' इति तथापदप्रयोगस्य दर्शनात्।

अत्रैव वाक्ये—'रत्नौषधादिषु', 'शास्त्रौषधादिषु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु शास्त्रे दोषप्रतीकारसामर्थ्यं दृष्ट्वा 'विचिकित्साशास्त्रमारब्धम्' इत्युक्तिरसंगता स्यात्। शास्त्रपदेन स्वस्यैव दृष्टान्तीकरणे आत्माश्रयः, परेषां तथात्वे तु परस्पराश्रय इति यथायथं दोषद्वयपातात्।

अत्रैवाग्रे—'उपनिबद्धानि', 'उपनिबध्नाति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि पूर्वत्र वाक्ये—'आरब्धम्' इति उत्तरवाक्ये च 'आरब्धम्' इति दृष्ट्वा अत्रापि ( मध्ये ) कर्मणि भूते प्रयोग एव साधुः, कर्तृविशेषस्याविवक्षितत्वात् कर्तरि तिङ् शक्योऽवक्तुमिति।

अत्रैवाग्रे—'त्यागार्थम्', 'निवृत्त्यर्थम्' इति पाठद्वयं दृश्यते। 'ज्ञानार्थम्' इति तृतीयोऽपि पाठो दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, अपभ्रंशध्वंसरूपाया निवृत्तेः शास्त्रेण कर्तुमशक्यत्वात्। तृतीयपाठोऽपि न युक्तः, ज्ञानस्य त्यागपर्यवसायित्वे आद्यपाठस्यैवौचित्यात्॥ १४६॥

## शब्दः संस्कारहीनो य इति कारिका ।। १४७ ।

अत्र—'शब्दसंस्कारहीन' इति समस्तपाठः क्वचिदुपलभ्यते। स तु न युक्तः, यत्पदेन महान्वयासंभवेनार्थासंगतेः।

अस्या एव द्वितीयपादे—'प्रयुयुक्षिते' 'प्रयुयुक्षते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्या चात्रार्थसंगतिरम्बाकर्त्र्याम्। द्वितीयपाठस्तु न युक्तः, संस्कारहीनस्य शब्दस्य प्रयुयुक्षाकर्तृत्वासंभवात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'नाप्रकृतिरपभ्रंशः', 'न प्रकृतिरपभ्रंशः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। अप्रकृतित्वस्य प्रकृतिमत्त्वाभावरूपस्य निषेधे हि प्रकृतिमत्त्वमपभ्रंशस्य शब्दतो लभ्यते, अभावाभावस्य प्रतियोगिरूपत्वात्। प्रकृतित्वस्य निषेधे तु विकृतित्वमाक्षेपरूपार्थापत्तिलभ्यम्, न शाब्दमिति प्रमाणान्तरमुखापेक्षित्वेन स पाठो न युक्तः,

अत्रैवाग्रे—'साधव एव विज्ञायन्ते', 'साधवश्च विज्ञायन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, असाधुव्यवच्छेदार्थमेवकारोपन्यासस्यात्रौचित्यात्। समुच्चयार्थकचकारोपन्यासस्यात्रानवसराच्च ॥ १४७ ॥

## 'अश्वगोण्यादयः शब्दा' इति कारिका ॥ १४८ ।

अत्र—'अश्वगोण्यादयः', 'यथा गोण्यादयः', 'अथ गोण्यादयः' इति पाठत्रयमपि दृश्यते। किन्तु नैतत् त्रयमपि साधु, 'स्वविप्रयोगाभिधाने चास्व इति' स्वोपज्ञवृत्ति-विरोधात्।

अस्या एव चतुर्थे पादे—'साधुत्वञ्च', 'साधुत्वन्तु' इति पाठद्वयं वर्तते। तत्राद्यपाठ एव युक्तः, साधुत्वमसाधुत्वञ्चेत्येवंरीत्या समुच्चयार्थकचकारस्योपपत्ति-संभवात्। साधुत्वासाधुत्वयोर्द्वयोरपि निमित्तभेदाद् व्यवस्थितत्वे समाने वैलक्षण्य द्योतकतुशब्दप्रयोगस्यानौचित्यात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'स्वविप्रयोगाभिधाने', 'अश्वजात्यभिधाने' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, 'अस्व इत्येतयोरवस्थितं साधुत्वम्' इत्यग्रिमग्रन्थानुरोधात्।

अत्रैवाग्रे—'ह्रेषितादिलिङ्गेन च' इति पाठो दृश्यते। किन्तु नात्र तृतीयार्थो विवक्षित इति सप्तम्यन्तपदोपन्यासो युक्तः।

अत्रैव—'अन्यत्र विषये', 'अत्र विषये' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्याऽयुक्तः ॥ १४८ ॥

## 'ते साधुष्वनुमानेन' इति कारिका ॥ १४९ ।

'ते साधुत्वानुमानेन' इति क्वचित् पाठ उपलभ्यते। स तु न युक्तः, अपभ्रंशा हि साधुप्रनाडिकयाऽर्थं प्रत्याययन्ति, इति स्वोपज्ञवृत्तौ व्याख्याविरोधात्। अस्या एव कारिकायास्तुरीयपादे–'तादात्म्यमुपगम्येव', 'तादात्म्यमुपगम्यैव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु अपपाठः, मूलपुस्तकेष्वादर्शनात्। किञ्च, नागेशोऽपि मञ्जूषायाम्—'उपगम्येव' इत्येव पठति। व्याख्याति च—इव-शब्देन तदुपगमस्य भ्रमत्वं सूचितमिति ॥ १४९ ॥

## 'नशिष्टैरनुगम्यन्ते' इति कारिका ॥ १५० ।

अस्या अवरणिकायां स्वोपज्ञवृत्तौ—'अनुगम्येरन् प्रयुज्येरँश्च', 'अनुगम्येरन् गोशब्दतुल्यतया प्रयुज्येरँश्च' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, गोशब्द-तुल्यतया इत्यस्यार्थादाक्षेपसंभवात्।

अस्या एव तृतीये पादे—'ते यतः स्मृतिशास्त्रेण' 'न यतः स्मृतिशास्त्रेण' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, बहुषु ग्रन्थेषु उपलम्भात्, अर्थसंगतेः, स्वोपज्ञवृत्तिसंमतेश्च। दर्शिते च संगतिसंमती अस्माकत्र्याम् ॥ १५० ॥

**'अम्बाम्बेति यथा बाल' इति कारिका ॥ १५१ ।**

अत्र—'अम्ब्वम्ब्विति यथा बालः' इति पाठः क्वचिद् दृश्यते । स तु न युक्तः 'यथाऽम्बाऽम्बेति शिक्षमाणो बालोऽन्यथोच्चारयति' इति हरिकृतभाष्यटीकायां व्याख्यादर्शनात् ।

अस्या एव द्वितीये पादे—'शिक्षमाणः प्रभाषते', 'शिक्षमाणोऽपभाषते' 'शिष्यमाणोऽपभाषते' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्यर्याम् । द्वितीयतृतीयपाठयोस्तु अव्यक्तपदवैयर्थ्यमापतति । अव्यक्तापभ्रंशभाषयास्यैवापभाषणत्वात् ।

अस्या एव चतुर्थे पादे—'व्यक्ते', 'व्यक्तेरन्', 'व्यक्तो' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिताचार्थसंगतिरस्माकव्यर्याम् । इतरत्तु पाठद्वयमर्थासंगत्या उपेक्ष्यम् । अत्रैव पादे—'निश्चयः', 'निश्चितः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु न युक्तः, निश्चयकर्मानुपादानेन साकाङ्क्षत्वात् ॥ १५१ ॥

**'एवं साधौ प्रयोक्तव्ये' इति कारिका ॥ १५२ ।**

अस्या एव द्वितीये पादे—'योऽपभ्रंशः', 'योऽपशब्दः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अपभ्रंशपदस्य योगरूढत्वेन अपशब्दपदार्थस्यापि लाभात् । अपशब्दपदेन तु अपभ्रंशरूपस्यार्थस्य न लाभ इति द्वितीयपाठ उपेक्ष्यः । अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'संकीर्णायां वाचि' इत्यतः पूर्वम् 'अन्ये त्वपि च' इत्यधिकः पाठो दृश्यते । स तु न युक्तः, वाक्यार्थेऽनन्वयात् ॥ १५२ ॥

**'पारम्पर्यादपभ्रंशा' इति कारिका ॥ १५३ ।**

अस्या एव द्वितीयपादे—'विगुणेष्वभिधातृषु', 'निर्गुणेष्वभिधातृषु' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । दर्शिता चार्थसंगतिरस्माकव्यर्याम् । द्वितीयपाठस्तु न युक्तः, गुणसामान्याभावस्य क्वापि अप्रसिद्धेः ।

अस्या एव तृतीये पादे—'येषु', 'येन', 'येतु' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः । कारिकास्थेन तेषामिति पदेन 'अभिधातृप्रत्यवमर्शः' इति स्वोपज्ञवृत्तिदर्शनेनावसायात् । इतरस्मिन् पाठद्वये तु न प्रत्यवमर्शसंभवः ।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'स्त्रीशूद्रचाण्डालादिभिः', 'स्त्रीबालादिभिः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । 'प्रमादवत्सु वक्तृषु रूढिमुपागता' इति स्वोपज्ञवृत्त्यनुरोधात् । द्वितीयपाठे तु नहि बालानां प्रयोगस्याव्यक्तस्य रूढ्युपागमः संभवति ।

अत्रैवाग्रे 'उपगताः', 'उपागताः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, कारिकायाम्—'प्रसिद्धिमागता' इति आगतपदप्रयोगदर्शनात्। द्वितीयपाठे परम्परया प्राप्तिरूपस्यार्थस्य प्रतीतेश्च। अत्रैवाग्रे—'प्रत्यक्षपक्षे मन्यन्ते', 'प्रत्यक्षं पक्षं मन्यन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अनुमानपक्षे इत्यग्रे पठ्यमानवाक्यसंवादात् ॥ १५३ ॥

## 'दैवी वाग् व्यतिकीर्णेयम्' इति कारिका ॥ १५४ ।

अत्र 'दैवी'इत्यस्य स्थाने 'देवी' इति, 'व्यतिकीर्णेयम्' इत्यस्य स्थाने' व्यवकीर्णेयम् इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, संस्कृतभाषाया देवभाषात्वात्। एवं व्यतिकीर्णा इति पाठ एव युक्तः। 'सा तु संकीर्यमाणा' इति स्वोपज्ञवृत्त्यनुरोधात्।

अस्या एव तृतीये पादे—'त्वस्मिन्', 'तस्मिन्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, इदमः संनिकृष्टार्थकत्वात्, तस्यैवात्र युक्तत्वात्। तदर्थस्तु परोक्षार्थकत्वात् तस्य चात्राभावात्।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'खशरीरज्योतिषाम्', 'स्वशरीरज्योतिषाम्', 'अशरीरज्योतिषाम्' इति पाठत्रयमुपलभ्यते। अत्राद्यपाठ एव युक्तः, अर्थसंगतेः। दर्शितात्रार्थसंगतिरम्बाकर्त्र्याम्। इतरस्मिन् पाठद्वये तु नार्थसंगतिरित्युपेक्ष्यं तत्।

अत्रैवाग्रे—'प्रकृतौ प्राकृतम्', 'प्रकृतौ सर्वं प्राकृतम्' इति पाठद्वयमुपलभ्यते। तदुभयमप्यसाधु, अर्थासंगतेः। अतः—'प्रकृतौ भवं प्राकृतम्' इति पाठः संशोध्य कर्तव्यः।

अत्रैवाग्रे—'यः स भिन्नबुद्धिभिः' इति पाठो यद्यपि उपलभ्यते, तथापि स न युक्तः, अर्थासंगतेः। अतः 'यः अभिन्नबुद्धिभिः' इति पाठः कर्तव्यः, अर्थसंगतेः। द्रष्टव्या चात्रार्थसंगतिरम्बाकर्त्र्याम्।

अत्रैव वाक्ये—'स्वरसंस्कारादिभिर्निर्णीयते', 'स्वरसंस्कारादिभिर्नयते', 'स्वरसंस्कारादिभिर्नीयते', 'स्वरसंस्कारादिभिर्न हीयते' इति पाठचतुष्टयमत्र दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्रष्टव्या चात्रार्थसंगतिरम्बाकर्त्र्याम्। इतरस्मिन् पाठत्रये तु न कथमप्यर्थसंगतिरिति उपेक्ष्यं तत् ॥ १५४ ॥

## 'उभयेषामविच्छेदाद्' इति कारिका ॥ १५५ ।

अत्र—'उभयेषामविच्छेदेऽपि' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, सत्सप्तम्या अन्वयबोधनद्वारा हेतुत्वस्य बोधनेऽपि साक्षाद् हेतुत्वाबोधनात्। पञ्चम्या तु साक्षाद्धेतुत्वं बोध्यते इति विशेषः।

अस्या एव द्वितीये पादे—'अन्यशब्दविवक्षया', 'अश्वशब्दविवक्षया' इति पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः, शब्दसामान्यविषयकव्यवस्थाप्रदर्शनपरत्वात्। द्वितीयपाठस्तु शब्दविशेषे व्यवस्थां संपादयन् संकुचित विषयकत्वादुपेक्ष्यः।

अस्या एव व्याख्याने स्वोपज्ञवृत्तौ—'तत्रान्यशब्दविवक्षया', 'तत्रान्यशब्द-विवक्षायाम्' इति पाठद्वयं दृश्यते। अत्राप्याद्यपाठ एव युक्तः। पञ्चमीवत् तृतीयाया अपि साक्षाद् हेतुत्वबोधकत्वात्। सत्सप्तम्यास्तु अन्वयबोधनद्वारा तद्बोधकत्वमिति विशेषः॥ १५५॥

शंबोभवीतु जगतां बुद्धिः शुध्यतु भूभृताम्।
काले वर्षतु पर्जन्यो मही सस्यैः समृध्यताम्॥ १॥
पाठभेदास्तु बहवो बुद्धिविभ्रमकारकाः।
अतः संदेहभेदाय पाठः संप्रति संस्कृतः॥ २॥
धावन्ती धारयन्ती धरणिधरशिरोभेददक्षं विपक्षो-
द्भेदायालं विशालं निशिततरशिखाशोणशोभं महोग्रम्।
शूलं देवारिवक्षोविदलननिपुणं भ्रामयन्ती गदाग्रं
देवी संदृप्तदैत्याधिपमदमथने दीक्षिता रक्षतान्नः॥ ३॥
काशीनाथतनूजेन हरिनाथानुजन्मना।
सौभद्ररघुनाथेन कृतेयं कृतिरुत्तमा॥ ४॥



# अथ द्वितीयकाण्डम्

## वाक्यकाण्डम्

**'आख्यातशब्द' इति ॥ १ ।**

**'पदमाद्यम्' इति च ॥ २ ।**

तत्राद्यकारिकायाः प्रथमे पादे—'आख्यातशब्द' इत्यस्य स्थाने 'आख्यातः शब्द' इति पाठः पुस्तकद्वये उपलभ्यते । स तु न युक्तः, वृत्तवैसंष्ठुल्यात् । 'आख्यातं शब्दः' इति पाठेऽपि स एव दोषः ।

द्वितीयकारिकायाम्—'सर्वं पदम्' इत्यस्य स्थाने 'सर्वपदम्' इति समस्तपाठः क्वचिदुपलभ्यते । स तु न युक्तः, समस्तपाठे समासभेदेनार्थसंदेहात् । यद्यपि पुण्यराजीयेऽपि—'पृथक् सर्वपदं साकाङ्क्षम्' इति समस्तपाठ एवोपलभ्यते, तथापि तत्रापि व्यस्तपाठ एव युक्तः, उक्त हेतोरेव । अत्रैव 'साकाङ्क्षम्' इत्यस्य स्थाने 'सापेक्षम्' इति पाठः, केषुचित्पुस्तकेषु दृश्यते । स तु न युक्त , उपसर्गाणां द्योतकत्वेन धातोश्च तदर्थवाचकत्वेन वृत्तिद्वयेन तदर्थोपस्थितौ गौरवात् । एवमुपसर्गाणां वाचकत्वपक्षेऽपि धातोर्द्योतकत्वेन गौरवम् । आकाङ्क्षापदेऽपि यद्यपि उपसर्गो वर्तते तथापि, सोऽनर्थक एव पदालङ्कारमात्रफलः, साधुमात्रादेव तदर्थलाभस्य अन्यत्र दर्शनादिति । द्वितीयकारिकायामेव चतुर्थपादे—'न्यायदर्शिनाम्' इत्यस्य स्थाने 'न्यायवादिनाम्' इति पाठो बहुत्र दृश्यते । स तु न युक्तः । तथाहि—बहुधा न्यायदर्शित्वं मतिभेदे नियामकम्' न तु बहुधा न्यायवादित्वम्, अज्ञस्यापि कण्ठस्थपाठमात्रेण बहुधा न्यायवादित्वसंभवात् ।

अत्र पुण्यराजीये—'एतेऽष्टौ वाक्यविकल्पाः' इत्यस्य स्थाने—'एते चाष्टौ वाक्यविकल्पाः' इति पाठः क्वचिद् दृश्यते । तत्र चकारो न युक्तो, वैयर्थ्यात्, अनन्वितार्थकत्वाच्च । इह पुण्यराजीये—'इह च पदप्रकृतिः संहिता इति प्रातिशाख्यम्' इति पाठो दृश्यते । ऋक्प्रातिशाख्ये तु 'संहिता पदप्रकृतिः' इत्येव पाठः, स एव च युक्तः । संहितायाः उद्देश्यत्येन तस्याः प्राथम्येन पाठस्यैवाभ्यर्हितत्वात् । अत्रैव पुण्यराजीये—'आख्यातशब्दे नियतम्' इत्यस्य स्थाने 'आख्यातशब्दे नियतम्' इति पाठः क्वचिद् दृश्यते, स तु न युक्तः, अर्थासंगतेः ।

अत्रैवास्मिन्नेव पद्ये—'तदप्येकं समाम्नार्थम्' इत्यस्य स्थाने 'तदप्येकं समासार्थम्' 'तदप्येकं समाप्त्यर्थम्' इति पाठद्वयं क्वचित् क्वचिदुपलभ्यते । तदुभयमप्ययुक्तम्, अर्थासंगतेः ।

अत्रैव पुण्यराजीये—'आन्तरस्य स्वरूपमुक्तम्' इत्यस्य स्थाने 'बुद्ध्यनुसंहृति-रूपस्य वाक्यस्वरूपमुक्तम्' इति पाठः क्वचिद् दृश्यते, स एव तु युक्तः। 'वाक्यस्य स्वरूपम्' इति व्यासेन पाठे कृते सति 'बुद्ध्यनुसंहृतिरूपस्य वाक्यस्य स्वरूपमुक्तम्' इति पाठस्तु 'श्लोकपञ्चकेन' इत्यतः परं क्वचित्पुस्तके दृश्यते, स तु न युक्तः। तथा पाठेऽर्थासंगतेः। क्वचित्पुस्तके तु पुण्यराजीये—'आन्तरस्य स्वरूपम्' इत्यादिः, 'दर्शयिष्यति' इत्यन्तः पाठो यद्यपि नास्ति, तथापि स पाठ आवश्यकः, अन्यथा वाक्य-लक्षणानां प्रदर्शनपरे अत्र संदर्भे न्यूनतापत्तेः। क्वचित्पुस्तके पुण्यराजीये—'श्लोक पञ्चकेन' इत्यस्य स्थाने 'संप्रत्ययेत्यादिश्लोकचतुष्टयेन' इति पाठ उपलभ्यते, स तु न युक्तः। तथाहि—अत्र वाक्यकाण्डे—'संप्रत्ययप्रमाणत्वात्' (२–३४॥) संप्रत्ययार्थाद्वाह्योऽर्थः, इति द्वावेव श्लोकौ संप्रत्ययः शब्दादी उपलभ्येते, किन्तु नैकतरेणापि 'क्रमो वाक्यमिति' निरूपणमुपक्रान्तमिति।

अत्रैव पुण्यराजीये—'क्रमो वाक्यमिति दर्शयिष्यति' इत्यस्य स्थाने क्वचि-त्पुस्तके—'क्रमो वाक्यमिति स्वरूपं निरूपयिष्यति' इति पाठ उपलभ्यते' स तु न युक्तः। स्वरूपमित्यस्य स्थाने 'वाक्यस्वरूपम्' इत्यनुक्तौ साकाङ्क्षत्वेनाबोधकत्वात्।

अत्रैव पुण्यराजीये—'अनयोः संघातपक्षेऽन्तर्भावः। एतेऽपि प्रथममेव 'निघा-तादिव्यवस्थार्थम्' इत्यादिना विचारयिष्येते, इत्यत्र 'एतेऽपि' इत्यस्य स्थाने 'एते अपि' इति विसन्धिः पाठो युक्तः। प्रगृह्यत्वप्रयुक्तस्य प्रकृतिभावस्य प्रवृत्तेः। अत एव 'विचारयिष्येते' इत्यस्य स्थाने—'विचारयिष्यन्ते' इति कचित्पुस्तके उपलभ्यमानः पाठोऽपि अयुक्तः। 'अनयोः संघातपक्षेऽन्तर्भावः' इति वाक्यदर्शनेन—'एते' इत्यस्य द्विवचनान्तत्वस्यैव निर्णयात्। 'विचारयिष्यते' इति प्रथमपुरुषैकवचनान्तपाठस्तु अत्यन्तमुपेक्षणीयः, वाक्ये तस्यानन्वयात्।

अत्रैव पुण्यराजीये 'प्रतिभा यत्प्रभूतार्था' इत्यस्य स्थाने—'प्रतिभा यत्प्रभूत्यर्था' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। अर्थासंगतेः। अत्रैव चतुर्थपादे–सा क्रिया वाक्यगोचरः' इत्यस्य स्थाने—'सा क्रिया वाक्यगोचरा' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। गोचरशब्दस्य नित्यपुंस्त्वस्यैव दृष्टचरत्वात्।

अत्रैव पुण्यराजीये—'वाक्यार्थमेतं संप्राहुः' इत्यस्य स्थाने—'वाक्यार्थमेव संप्राहुः' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः, एवकारस्य व्यवच्छेद्याभावात्। तथाहि—'पदयोः पदार्थयोश्च सम्बन्धे सति उपजायमानस्याधिक्यस्य पदार्थत्वा-संभवेन तत्राप्रसक्तस्य पदार्थत्वस्य व्यवच्छेद्यत्वासंभवात्। एतमित्यत्रैनादेशस्तु न, पूर्वार्धस्य लोकसिद्धानुवादत्वेनादेशत्वाभावेन उत्तरार्धस्यान्वादेशत्वाभावात्।

अत्रैव पुण्यराजीये—'अभिहितान्वयपक्षे प्रतिपाद्यमाने' इत्यस्य स्थाने 'अभि-हितान्वयपक्षे प्रतिपाद्यमानः' इति प्रथमान्तपाठः क्वचिद् दृश्यते। स तु न युक्तः। तथासति—'सर्वभेदानुगुण्यम्' इत्यादेः 'कार्यानुमेयः संबन्धो रूपं तस्य न विद्यते' इत्यस्य चैकार्थ्यप्रसङ्गात्। न च तयोरैकार्थ्यमस्ति उपपद्यते वा।

अत्रैव पुण्यराजीये—'रूपं तस्य न विद्यते' इत्यस्य स्थाने—'रूपस्य तु न विद्यते' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः, अर्थासंगतेः। अत्रैव पुण्यराजीये—'विशेषविश्रान्तः' इत्यस्य स्थाने 'विशेषतो विश्रान्तः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, विशेषशब्दस्याद्यादित्वकल्पनया अप्रामाणिक्यात्तसि प्रयोगस्य व्यर्थत्वात्, प्रकृतिविभक्तिसंदेहेनार्थविभ्रमापादकत्वाच्च। अत्रैव पुण्यराजीये—'वाक्यार्थं इति लक्ष्यते' इत्यस्य स्थाने 'वाक्यार्थ इति लभ्यते' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। 'लक्ष्यते' इत्यस्य लक्षणया बोध्यते, लक्षणेन बोध्यते, दृश्यते इत्याद्यनेकार्थसंभवेनार्थसंदेहकरत्वात्। लभ्यते इत्यत्र तु तद्वैपरीत्येन तदभावात्।

अत्रैव पुण्यराजीये—'अस्मिस्तु पक्षद्वये' इत्यस्य स्थाने तुशब्दरहितः पाठः क्वचित् दृश्यते। स तु न युक्तः। प्रागुक्तात् पक्षाद् अस्मिन् पक्षद्वये वैलक्षण्याभावद्योतनाय तुशब्दस्यावश्यकत्वात्।

अत्रैव पुण्यराजीये—'तथाद्येष्वर्थवस्तुषु' इत्यस्य स्थाने 'तथाह्येष्वर्थवस्तुषु' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। पूर्वप्रकृत्यस्यार्थस्येदमापरामर्शासंभवात्। दृष्टान्ते 'यथार्थात्मा परः परः' इत्यत्र 'परः परः' इत्यस्य दर्शनेन 'पूर्वेषु' इत्यर्थकस्य 'आद्येषु' इति पाठस्यैवौचित्यप्रतीतेश्च। अत्रैव पुण्यराजीये 'अभिधेयः पदस्यार्थः' इत्यत्र 'अभिधेय' इत्यस्य स्थाने' अविधेय इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, अर्थासंगतेः।

अत्रैव पुण्यराजीये—'न प्रयोजनं' वाक्यार्थः, इत्यस्य स्थाने 'न प्रयोजनवाक्यार्थः' इति समस्तपाठः क्वचिद् दृश्यते, स तु न युक्तः। व्यस्तपाठे हि विभक्त्यर्थोऽसंदिग्धः प्रतीयते, समासे तु न तथेत्यस्यानुभवसिद्धत्वात्।

अत्रैव पुण्यराजीये 'संसृष्ट एवार्थः' इत्यस्य 'संस्पृष्ट एवार्थः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। तथाहि संसृष्ट इत्यस्य संयुक्त इत्यर्थः। संस्पृष्ट इत्यस्य तु संबन्ध इत्यर्थः। एवं च प्रकृते संबन्धसामान्यस्यैव वाक्यार्थत्वेन प्रतिपिपादयिषितत्वात् संबन्धविशेषार्थकं संसृष्टपदं नोपादेयमिति।

अत्रैवाग्रेऽनुपदमेव पुण्यराजीये 'संसृष्टे क्रियायां चान्विताभिधानम्' इति संसृष्टपदस्यैव प्रयोगाच्चेति। अत्रैव पुण्यराजीये 'संघातपक्ष एवान्तर्भवति' इत्यस्य स्थाने 'संसर्गपक्ष एवान्तर्भवति' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। 'आख्यातशब्दः संघातो जातिः संघातवर्तिनी' इत्युपक्रमे वाक्यविकल्पावसरे संघात पक्षस्यैवोपन्यासात्।

अत्रैव पुण्यराजीये 'अथात्रानवयव एकस्मिन्' इत्यस्य स्थाने 'अथात्रानवयव एवैकस्मिन्' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। अन्यस्मिन् पक्षे वाक्यवाक्यार्थयोरध्यासरूपस्य संबन्धस्याप्रसक्त्या तत्र तद्व्यवच्छेदायैवकारोपादानस्य व्यर्थत्वात्।

अत्रैव पुण्यराजीये—'पदकाण्डे तु सर्वानभिधास्यति' इत्यस्य स्थाने 'पदकाण्डे तु सर्वानेवाभिधास्यति' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। एवकारस्य व्यर्थत्वात्।

## 'निघातादिव्यवस्थार्थम्' इति ॥ ३ ।

'साक्षाद् बहुविधानेन' इति पाठः 'साकाङ्क्षावयं तेन' इत्यस्य स्थाने क्वचिदुपलभ्यते, स न युक्तोऽर्थासङ्गतेः।

अस्यास्तृतीयापादे 'साकाङ्क्षावयवं तेन' 'साक्षाद् बहुविधानेन' 'आकाङ्क्षावयवं तेन' इति पाठत्रयं तत्र तत्रोपलभ्यते, तत्र 'साकाङ्क्षावयवं तेन' इति पुण्यराज संमतः पाठः।

अत्रैव पुण्यराजीये—'साकाङ्क्षावयवम्' इत्यनेन मीमांसकोक्तं वाक्यलक्षणं सूचितम्' इतिवाक्यदर्शनात्। 'साक्षाद् बहुविधानेन' इति तु अनवगतार्थम्। 'आकाङ्क्षावयवम्' इति तु आकाङ्क्षपदेऽप्रामाणिकपचादित्वकल्पनासापेक्षम्। अत्रैव पुण्यराजीये—'शालीनां ते ओदनं दास्यामि' इत्यत्र 'दास्यामि' इत्यस्य स्थाने 'ददामि' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। इदं हि खलु दुर्ललितस्य बालस्याध्ययनादौ प्रवृत्तिसिद्धये प्रलोभनार्थं मात्रादेः प्रतिज्ञावाक्यम्। तत्र शाल्योदनदानस्य वर्तमानत्वाभावात् लटः प्रयोगो न युक्तः, किन्तु लृटः प्रयोग एव युक्तः। 'अधीष्व पुत्रकाधीष्व दास्यामि तव मोदकान्' इतिवत्।

## 'साकाङ्क्षावयवम्' इति ॥ ४ ।

'वाक्यमिष्यते' इत्यस्य स्थाने 'वाक्यमुच्यते' इति पाठः क्वचिदुपलभ्यते। तत्राद्य पाठ एव युक्तः, द्वितीयपाठे तादृशवाक्यस्येष्टत्वानिष्टत्वानवधारणात्।

अस्याश्चतुर्थपादे—'वाक्यमुच्यते' इत्यस्य स्थाने 'वाक्यमिष्यते' इति पाठो बहुत्रोपलभ्यते। व्यक्तिविवेके च सप्तमपृष्ठे अस्याः कारिकायाः तृतीयपादे—'कर्म प्रधानम्' इत्यस्य स्थाने 'क्रियाप्रधानम्' इति। चतुर्थपादे च 'वाक्यमुच्यते' इत्यस्यस्थाने 'वाक्यमिष्यते' इति च पाठो दृश्यते। तत्र 'क्रियाप्रधानम्' इति पाठ एव युक्तः कर्मप्रधानमिति पाठे हि कर्मपदं कारकपरं क्रियापरं वा इति संदेहः स्यात्। पुण्यराजीये तु—'कर्मप्रधानं क्रियापदप्रधानमित्यर्थः' इति व्याख्यादर्शनेन कर्मप्रधानमिति पाठस्तत्संमतः प्रतीयते यद्यपि—तथापि स न युक्तो संदिग्धत्वेन व्याख्यासापेक्षत्वात्। 'उच्यते' इत्यस्य स्थाने च 'इष्यते' इति पाठ एव युक्तः। तथाहि—'उच्यते' इत्यनेन 'अस्य वाक्यलक्षणस्य' युक्तत्वमयुक्तत्वं वा न प्रतीयते। 'इष्यते' इत्यनेन तु अस्य युक्तत्वं प्रतीयते इति।

## 'संबोधनपदं यच्च' इति कारिका ॥ ५ ।

इयं कारिका न्यायमञ्जर्यां ३३९ पृष्ठे उदाहृता। तत्र 'संबोधपदं यच्च'

इत्यस्य स्थाने 'संबोधनपदं यद् यत्' इति पाठ उपलभ्यते । स तु न युक्तः । तथाहि—यत्र यत्पदमभ्यस्यते तत्राग्रे तत्पदसमभिव्याहृतं सर्वपदं दृश्यते । यथा—'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके' इति । अत्र तु—तत्क्रियाया विशेषकमित्यत्र सर्वपदं न दृश्यतेऽतोऽयुक्त एव । यत्पदाभ्यास इति प्रक्रियाकौमुदीव्याख्याने प्रसादे तु ७१ पृष्ठे 'संबोधनपदं यच्च तत्क्रियायां विशेषणम्' इत्येवमस्याः कारिकायाः पूर्वार्धमुदाहृतम् । वाक्यपदीयपुस्तकेषु तु प्रायेण—'तत्क्रियाया विशेषकम्' इत्येव पाठ उपलभ्यते । तत्र 'क्रियायाम्' इति सप्तम्यन्तपाठो न युक्तः । सप्तम्यन्तपाठे हि आधाराधेयभावसंबन्धव्यवहितो निरूप्यनिरूपकभावः संबन्धः प्रतीयते षष्ठ्यन्तपाठे तु साक्षादिति षष्ठ्यन्त पाठ एव युक्तः । विशेषकमित्यस्य स्थाने विशेषणमिति पाठस्तु युक्त एव । विशेषकमिति पाठे हि विशेषकपदस्य केवलयौगिकत्वेन उपलक्षणोपाध्योरपि विशेषकयोः ( व्यावर्तकयोः ) प्रत्ययः स्यात् । विशेषणमिति पाठेस्तु विशेषणपदस्य वर्तमाने विधेयान्वयिनि व्यावर्तके योगरूढत्वेन न तयोः प्रतीतिरिति । दृश्यते च तत्त्वबोधिन्यां 'संबोधने च' इति सूत्रे—उदाहृतायामस्यां कारिकायाम्—विशेषणमित्येव पाठः । एवमन्यत्रापि मृग्यम् ।

## 'यथानेकमपि' इति ॥ ६ ।

'तत्राहुस्तिङन्तस्य' इत्यस्य स्थाने 'अत्राहुस्तिङन्तस्य' इति क्वचित्पाठः । अत्र पाठे इदमानिर्देशो न युक्तः, अर्थस्यासंनिहितत्वात् ।

अस्याः कारिकायास्तृतीयपादे 'तथा तिङन्तमप्याहुः' इति—'तथा तिङन्तं तत्राहुः' इति 'तथा तिङन्तमत्राहुः' इति पाठत्रयमुपलभ्यते । तत्र—'तथा तिङन्तमप्याहुः' इति पाठ एव युक्तः । 'तथा तिङन्तं तत्राहुः' इति पाठस्तु न युक्तः । यत्पदस्यानेकतिङन्तघटितवाक्यस्य वा प्रागनुपन्यासात् । अत एव च—'तथा तिङन्तमत्राहुः' इति पाठोऽपि अयुक्तः ।

अत्रैव पुण्यराजीये 'व्रजतिक्रियैव विशिष्यते' इत्यस्य स्थाने 'व्रजतिक्रियैव विशेष्यते' इति ण्यन्तपाठः क्वचिद् दृश्यते । स तु न युक्तः । शुद्धस्यैव विशेषणार्थत्वेन ण्यन्तपाठस्य वैयर्थ्यात्—अनभिप्रेतार्थसाधकत्वाच्च ।

अत्रैव पुण्यराजीये 'प्रतिषेधान्निघाताभावः' इत्यस्य स्थाने 'प्रतिषेधाभावान्निघाताभावः' इतिपाठः क्वचिदुपलभ्यते । स तु न युक्तः, व्याहतार्थकत्वात् ।

अत्रैव पुण्यराजीये—'अतिङ्ग्रहणमनर्थकं समानवाक्याधिकारात्' इति वार्तिके 'अतिङ्वचनम्' इति पाठः क्वचिदुपलभ्यते । तत्र ग्रहणपदवचनपदयोरुभयोरपि साम्यमेव, न त्वन्यतरस्य युक्तत्वमयुक्तत्वं वा इति ।

## 'यथैक एव सर्वार्थ' इति ॥ ७ ।

'सर्वार्थप्रत्यय' इत्यस्य स्थाने 'सर्वार्थप्रकाश' इति क्वचित्पाठ उपलभ्यते । स तु न युक्तः । अत्र चित्रज्ञानस्यैवाभिप्रेतत्वात् ।

अत्र कारिकायां 'सर्वार्थप्रकाशः, इति समस्तपाठः क्वचिदुपलभ्यते। स तु न युक्तः। व्यस्तपाठे हि सर्वार्थत्वं प्रकाशते निश्चीयते। समस्तपाठे तु तत्र संदेहः। समाससंदेहात्। कारिकायामेव—'प्रकाश' इत्यस्य स्थाने 'प्रत्यय' इति पाठः क्वचिद् दृश्यते। स एव तु युक्तः। प्रकाशपदस्य प्रदीपादिप्रकाशसाधारण्यात्। तत्रापि सर्वार्थत्वस्य संभवाच्चेति वाक्यार्थालोचनेन तस्य विज्ञानरूपार्थपरत्वम्। प्रत्ययपदमपि यद्यपि विश्वासे कृत्तद्धितादौ च प्रयुज्यते। तथापि तत्र सर्वार्थत्वं नास्ति। विश्वासस्य विशेषविषयकत्वात्। कृत्तद्धितादीनां च यत् किञ्चिदर्थकत्वादिति। कारिकायामेव—'दृश्यभेदानुकारेण' इत्यस्य स्थाने 'दृश्यभेदानुसारेण' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः, पुण्यराजीये—'दृश्यभेदसमाश्रयेण' तद्व्याख्यादर्शनात्। 'किञ्चानुकारः सदृशधर्मवत्तया भवति' इति विज्ञानेऽपि दृश्यभेदसदृशभेदाभ्युपगमे 'यथैक एव' इति इति ग्रन्थो विरुध्यते। अत्र कारिकायामेव—'वाक्यार्थानुगमस्तथा' इत्यस्य स्थाने 'वाक्यार्थनिगमस्तथा' इति—'वाक्यानां गतयस्तथा' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। पुण्यराजीये—'वाक्यार्थानुगमस्तथा इत्यनेन हि' इति प्रतीक दर्शनात्। द्वितीयपाठेऽर्थासंगतेः। एवं तृतीयपाठोऽपि न युक्तः। तथाहि—तत्र पाठे—गतयः इत्यस्य ज्ञानानि इत्यर्थः। एवञ्च वाक्येऽखण्डपदभेदप्रयुक्तो भेदो विवक्षितोऽपि नोपपादितो भवतीति।

## 'चित्रस्यैकस्वरूप' इति ॥ ८।

अत्र—'चित्रस्यैकस्य रूपस्य' इत्यस्य स्थाने—'चित्रस्यैकस्वरूपस्य' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। पुण्यराजीये—'चित्रं हि रूपमवयविगतविगनमनसमेकमेव' इति तद्व्याख्यादर्शनात्। किञ्च—'चित्रस्यैकरूपस्य इति पाठे चित्रपदस्य गुणपरत्वं गुणिपरत्वं वा इति संदेहः स्यात् अतोऽसंदेहाय—एकस्य रूपस्य इति पाठ एव साधुः। अस्यामेव कारिकायाम्—'भेदनिदर्शनैः' इत्यस्य स्थाने—'भेदनिदर्शनम् इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। पुण्यराजीये—'भेदेन निदर्शनं प्रदर्शनं येषां तैः पृथग्रूपैरेव समाख्यानं क्रियते' इति व्याख्यादर्शनात्। किञ्च तृतीयान्तपाठेऽव्यवहितेन नीलादिभिरित्यनेन सम्बन्धः, प्रथमान्तपाठे तु व्यवहितेन समाख्यानपदेन संबन्ध इति अव्यवहितसंबन्धसंभवे स न युक्त इति।

## 'यथा पदे विभज्यन्ते' इति ॥ ९–१०।

अत्र चतुर्थपादे—उपवर्ण्यंते इत्यस्य स्थाने—'उपपद्यते' इतिः पाठः क्वचिद् दृश्यते। स तु न युक्तः। अत्र पुण्यराजीये—उपवर्ण्यंते इत्येव पाठदर्शनात्। किञ्च—'उपपद्यते' इति पाठे उपपत्तियुक्तत्वात् पदानां सत्यत्वं प्रतीयेत, न तु प्रकृते तेषां तद्विवक्षितम्, किन्तु असत्यत्वमेव विवक्षितमिति। 'उपवर्ण्यंते' इति पाठे तु असत्यानामपि तेषामपोद्धारस्योपवर्णनं बालव्युत्पादनाय संभवत्येवेति ध्येयम्।

**'वर्णान्तरसरूपत्वम्' इति ॥ ११ ।**

अत्र 'वर्णान्तरसरूपत्वम्' इत्यस्य स्थाने 'वर्णान्तरसरूपञ्च' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। पुण्यराजीये—'वर्णान्तरसरूपा दृश्यन्ते' इति व्याख्यादर्शनात्। कारिकायां 'पदान्तरसरूपाश्च' इति सरूपपदस्यैव दार्ष्टान्तिके पाठदर्शनाच्च।

अस्या एव कारिकायाश्चतुर्थपादे—'पदे भागा इव स्थिताः, पदभागा इव स्थिताः, पदभागा व्यवस्थिताः' पदभागा अवस्थिताः' इति पाठचतुष्टयं तत्र तत्र समुपलभ्यते। तत्र पदभागा अवस्थिता इति पुण्यराजसंमतः पाठः। 'एवं वाक्ये पदान्तरसरूपाः पदरूपा भागाः पदभागाः। पदे वा निरंशे ये भागाः प्रकृतिप्रत्ययरूपास्तेऽवस्थिता' इति व्याख्यादर्शनात्। 'पदभागा व्यवस्थिता' इति पाठस्तु न युक्तः। प्रकृते वाक्यपदयोरखण्डत्वपक्षे पदभागानामसत्यत्वेनाव्यवस्थितत्वात्।

वस्तुतस्तु–पदे भागा इव स्थिता इति पाठः युक्तः। यथा 'पदे विभज्यन्ते' इति कारिकया पदभागानामपोद्धारस्य प्राङ्निर्धारितत्वेन दृष्टान्तत्वसंभवात्।

**'यथा भागैरनर्थकैः' इति ॥ १२ ।**

अत्र तृतीयपादे—'अन्वयव्यतिरेकौ तु' इत्यस्य स्थाने—'अन्वयव्यतिरेकौ च' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। चकारपाठेऽपि त्वर्थस्यैव परिग्रहात्। चकारस्य नानार्थकत्वेन तत्पाठे तदर्थसंदेहस्य प्रसक्तेश्च। अत्रैव चतुर्थपादे—'व्यवहारे निबन्धनम्' इत्यस्य स्थाने 'व्यवहारनिबन्धनम्' इति पाठस्तु न युक्तः। तथासति व्यवहारनिष्ठोद्देश्यतानिरूपितविधेयताया निबन्धनपदार्थनिष्ठाया अप्रतीतेः। समासे एकार्थीभावेन विशिष्टार्थोपस्थितिस्वीकारात्।

**'सामान्यार्थस्तिरोभूत' इति ॥ १५ ।**

अत्र पुण्यराजीये—'स्मर्यमाणतया पदान्तरसंनिधाने विद्यमानत्वम्' इत्यस्य स्थाने 'स्मर्यमाणपदान्तरसंनिधाने विद्यमानत्वम्' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। तथाहि—अस्मिन् पाठे स्मर्यमाणत्वस्य पदान्तरसंनिधाने विद्यमानत्वोपपादकत्वं श्रुतितो न लभ्यते। किन्तु आर्थम्। आद्यपाठे तु 'लभ्यते' इति तस्य पाठस्य स्वार्थोपपादकविषये निराकाङ्क्षत्वेन युक्तत्वमिति।

**'अशब्दो यदि वाक्यार्थ' इति ॥ १६ ।**

अत्र तृतीयपादे 'एवं सति च संबन्धः' इत्यस्य स्थाने 'एवं च सति संबन्धः' इति पाठः क्वचिद् दृश्यते। स एव युक्तः। अत्र पुण्यराजीये—'एवञ्च इति' इति प्रतीकदर्शनात्। किञ्चात्र पाठद्वयेऽपि चकारस्त्वर्थको न तु समुच्चयार्थकः। उत्तरार्धस्य पूर्वार्धोपपादकत्वेन दोषद्वयाभावेन समुच्चयासंभवात्। तथाच पूर्ववैलक्षण्यस्य-

त्वथाविबोधकस्य चशब्दस्य एवंशब्देन साक्षात्संबन्ध एवाभ्यर्हितत्वाद् युक्तः, सति पदोत्तरं तत्पाठे तु परम्परया तत्र तस्य संबन्ध इति अयुक्तत्वं तस्येति ।

अत्रैव चतुर्थपादे—'शब्दस्यार्थे न हीयते' इत्यस्य स्थाने 'शब्दस्यार्थे न हीयते' इति विभक्तपाठः क्वचिदुपलभ्यते । स तु न युक्तः । तथाहि—शब्दार्थसंबन्धस्य हानेरभावे पदार्थस्य अशब्दत्वमनुपपन्नं स्यात् इति ।

अस्याः कारिकाया अवतरणे पुण्यराजीये—'सा कथमपह्नूयते' इत्यस्य स्थाने 'सा कथमपह्रियते' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः । दृष्टपदार्थापहरणस्य लोकसिद्धत्वेनाक्षेपविषयत्वायोगात् । दृष्टपदार्थापह्नवस्तु लोकेऽसिद्धत्वेन तस्य आक्षेपविषयत्वयोग्यत्वात् इति ।

अत्रैवाग्रे पुण्यराजीये—'उक्तनीत्या शब्दा न युज्यन्ते वाचकाः' इत्यस्य स्थाने—'उक्तरीत्या शब्दा न युज्यन्ते वाचकाः' इति पाठः क्वचिद् दृश्यते । स एव तु युक्तः । नीतेरपि रीतावेव पर्यवसानात् इति ।

अत्रैव पुण्यराजीये समुद्धृते महाभाष्यवार्तिके—'उच्चरितप्रध्वंसित्वाच्च वर्णानाम्' इत्यस्य स्थाने—'उच्चरितप्रध्वंसित्वाच्चैकैकवर्णानाम्' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । अत्रैव वार्तिके इतः पूर्वम्—'अनेकवर्णवर्तित्वाद् वाचः' इति वाक्यस्योपन्यासात् ।

## 'विशेषशब्दाः केषांचित्' इति ॥ १७ ।

अत्रैव पुण्यराजीये—'विशिष्टा प्रतिपत्तिरभिव्यज्यते' इत्यस्य स्थाने—'विशिष्टाप्रतीतिरभिव्यज्यते' इति पाठः क्वचिद् दृश्यते । स तु न युक्तः । कारिकायाम्—'प्रतिपत्तृषु' इति पददर्शनेन प्रतिपत्तिशब्दस्यैवात्र शीघ्रोपस्थितिकत्वसंभावनायाः सत्त्वादिति । किञ्च प्रतिपत्तिशब्दस्य प्राप्तिस्वीकाराद्यनेकार्थकत्वेन संदिग्धार्थकमपि इति ।

## 'तेषां तु कृत्स्नो वाक्यार्थ' इति ॥ १८ ।

अत्र पुण्यराजीये—'विशिष्टपदोदीरणमारभते' इत्यस्य स्थाने—'विशिष्टपदोदीरणमारभेत' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः, अर्थासंगतेः । तथाहि—अत्र विशिष्टपदोदीरणस्य आरम्भ एवाभिप्रेतो न तु तस्यारम्भापादनमिति सुधियो विभावयन्तु ।

अत्रैवाग्रे पुण्यराजीये—'उपव्यञ्जना अभिव्यञ्जकाः' इत्यस्य स्थाने—'उपव्यञ्जना व्यञ्जकाः' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः । 'अभिव्यक्ताभिव्यञ्जका वाक्यार्थावगतिः' इति पुण्यराजीयेऽत्रैवाग्रे सोपसर्गपाठस्यैव दर्शनात् ।

अत्रैव पुण्यराजीये—'पदविशेषा यस्याः' इत्यस्य स्थाने 'अवयवविशेषा यस्याः' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। अस्य पाठस्य अस्फुटार्थकत्वात्। अवयवविशेषाः पदरूपा वर्णरूपा अवान्तरवाक्यरूपा वा इति रीत्या तदर्थसंदेहात्।

अत्रैवाग्रे पुण्यराजीये—'समस्तविशेषणखचितस्य' इत्यस्य स्थाने—'समस्तविशेषखचितस्य' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। विशेषपदस्य विशेषणार्थकत्वेऽपि तत्राप्रसिद्धेः। अतः प्रसिद्धं विशेषणपदमेवोपादेयम्।

**'अव्यक्तः क्रमवान् शब्दः' इति ॥ १९ ।**

अत्र प्रथमपादे—'अव्यक्तः क्रमवान्' इत्यस्य स्थाने 'सव्यक्तः क्रमवान्' इति-पाठः क्वचिद् दृश्यते। स एव च युक्तः। तथाहि—सक्रमत्वमेव शब्दस्य व्यक्तत्वम्। अक्रमत्वमेव च तस्याव्यक्तत्वम्। एवञ्च उत्तरार्धे अक्रमत्वस्योपवर्णनेन पूर्वार्धे—'सव्यक्त' इति पाठ एव युक्तः।

अत्रैव द्वितीयपादे 'उपांशु यदधीयते' इत्यस्य स्थाने—'उपांश्वयमधीयते' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। 'स व्यक्तः' इति पूर्वं तत्पदपाठदर्शनेन उत्तरत्र यत्पदपाठस्यैवौचित्यप्राप्तत्वात्। यत्तदोर्नित्यसंबन्धात्। अस्याः कारिकाया अवतरणे पुण्यराजीये—'सव्यक्त इति' इति प्रतीकदर्शनाच्च। 'तस्माद् यः शब्दो व्यक्त-उपांशुकृत्वाऽधीयते' इति पुण्यराजीये तद्व्याख्यादर्शनाच्च।

अत्र पुण्यराजीये—'यः शब्दो व्यक्तः' इत्यत्र—अव्यक्त इतिच्छेद एव युक्तः। तथासत्येवार्थसंगतेः।

अत्र कारिकायाम्—'उपांशुसमधीयते' इति क्वचिदुपलभ्यमानः पाठोऽपि न युक्तः। पूर्वं तत्पदपाठदर्शनादत्र यत्पदपाठस्यौचित्यात्। 'उपांशुमभिधीयते' इति पाठोऽपि क्वाचित्कोऽयुक्तोऽत एव। 'उपांशु' इत्यस्य क्रियाविशेषणत्वेन कर्मत्वनपुंसकत्वाभ्यां ध्रुवाभ्यां विभक्तिलुकि 'उपांशुम्' इति प्रयोगस्यानुपपत्तेश्च।

अस्याः कारिकायास्तृतीयपादे 'अक्रमस्तु' इत्यस्य स्थाने—'अर्थतस्तु' इति क्वाचित्कः पाठस्तु उपेक्षणीय एव, अर्थासंगतेः। अत्रैव स्वोपज्ञवृत्तौ—'विभागा' इत्यस्य स्थाने 'विभक्ता' इति पाठस्तु क्वचिदुपलभ्यमानोऽयुक्तः, विशेष्यासंनिधानात्। किञ्च, विभक्ता इति पाठे 'शब्दस्य विभक्ता' इति षष्ठी न स्यात्, अपितु पञ्चमी स्यात् इत्यप्यवधेयम्। अत्रैव स्वोपज्ञवृत्तौ 'समाविष्टरूपो बुद्ध्युपादान एव' इत्यस्य स्थाने 'समाविष्टरूपमुक्तोपादानं तमो' इति पाठः क्वाचित्को न युक्तः, अर्थासंगतेः।

अत्रैव स्वोपज्ञवृत्तौ—'शब्देऽध्यारोपितम्' इत्यस्य स्थाने—'शब्दाध्यारोपितम्' इति समस्तपाठः क्वचिदुपलभ्यते। स तु न युक्तः, प्रागुपलभ्यमानस्य 'अव्यक्ते' इति विशेषणस्यान्वयानुपपत्तेः।

**'यथाक्षेपविशेषेऽपि' इति ॥ २० ।**

अत्र 'यथोत्क्षेपविशेषेऽपि' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः । स्वोपज्ञवृत्तौ 'आक्षेपविशेषाद्धि स्वजातिप्रयुक्ते' इत्यादि तद्व्याख्यादर्शनात् ।

अत्रैव कारिकायाम्—'कर्मभेदो न गृह्यते' इत्यस्य स्थाने 'कर्मभेदोऽपि गृह्यते' इतिपाठः क्वचिदुपलभ्यते । स तु न युक्तः । स्वोपज्ञवृत्तौ —'कम्पनरेचनोत्क्षेपणादिभ्यो यो भेदः स न गृह्यते' इति तद्व्याख्यादर्शनात् ।

**'वर्णवाक्यपदेष्वेवम्' इति ॥ २१ ।**

अस्याश्चतुर्थपादे—'सरूपेव प्रतीयते' इत्यस्य स्थाने—'स्वरूपे च प्रतीयते' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः, अर्थासंगतेः । 'अत्यन्तभिन्नोऽप्यर्थः सर्व एव सारूप्येण गृह्यते' इति स्वोपज्ञवृत्तौ तद्व्याख्याविरोधाच्च । अस्याः कारिकायाः पुण्यराजीये—'प्रत्येकपरिसमाप्तत्वात्' इत्यस्य स्थाने—'प्रत्येकं परिसमाप्तत्वात्' इति पाठः क्वचिद् दृश्यते । स एव च युक्तः । सह सुपेति समासस्यागतिकत्वात् । इतरेषाञ्च समासानामत्राप्राप्तेः ।

अत्रैव पुण्यराजीये—'परमार्थतो भिन्नाऽपि सती' इत्यस्य स्थाने—अपिशब्दरहितः पाठः क्वचिदुपलभ्यते । स तु न युक्तः । 'सरूपेव प्रतीयते' इति पूर्ववाक्यान्वयानुरोधेन अपिशब्दघटितपाठस्यैवौचित्यात् इति । 'परमार्थतो भिन्नाऽपि सती' इत्यस्य स्थाने—'परमार्थतो भिन्नाऽपि मता' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः । तथाहि—तस्मिन् वर्णपदवाक्यश्रुतेः परमार्थतो भेदे तस्यामतत्त्वोपन्यासस्य वैयर्थ्यात् । अत एव स्वोपज्ञवृत्तौ—'अत्यन्तभिन्नोऽप्यर्थः सर्व एव सारूप्येण गृह्यते' इति तद्व्याख्यायां मतशब्दरहित एव पाठो दृश्यते । अन्यथा 'अत्यन्तभिन्नोऽपि मतोऽर्थ सर्वं एव सारूप्येण गृह्यते' इत्येवं वदेत् ।

अत्रैव पुण्यराजीये—'युक्तश्चैतत्' इत्यस्य स्थाने 'युक्तं दिति' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः, अर्थासंगतेः ।

**'नित्येषु तु कुत' इति ॥ २२ ।**

अत्र—'नित्येषु तु कुत' इत्यस्य स्थाने—'नित्येषु च कुत' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः । तस्मिन् पाठेऽपि चकारस्य त्वर्थकस्यैवाभ्युपगम्यत्वेन चकारस्यानेकार्थकत्वेनार्थसंदेहसंभवेनासंदेहार्थं तुशब्दपाठस्यैव युक्तत्वात् ।

अत्रैव पुण्यराजीयेऽवतरणावसरे—'पूर्वापरभाव उपाधिकृतः' इत्यस्य स्थाने पूर्वपरभाव उपाधिकृतः' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः । पौर्वापर्यम्—पूर्वापरीभावः इत्यादिप्रयोगाणां बहुलमुपलम्भात् !

अत्रैवाग्रे पुण्यराजीये—'असंभव्युपाधिकृतः' इत्यस्य स्थाने—'असंख्याद्युपाधिकृतः' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः, अर्थासंगतेः ।

अत्रैवाग्रे पुण्यराजीये—'सदैकरूपतया' इत्यस्य स्थाने—'सदा शक्यरूपतया' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, अर्थासंगतेः।

**'चिरं क्षिप्रमिति ज्ञाने' इति ॥ २३।**

अत्र चतुर्थपादे 'स धर्मो ह्रस्वदीर्घयोः' इत्यस्य स्थाने—'स वर्णो दीर्घह्रस्वयोः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। पुण्यराजीये 'तद्वद् ह्रस्वदीर्घयोर्धर्मः स्वभावोऽवगन्तव्यः' इति व्याख्यादर्शनात्। बुद्धौ अर्थोपस्थितिक्रमेणैव तद्वाचकशब्दोपन्यासस्य युक्तत्वाच्च।

अत्रैवाग्रे पुण्यराजीये—'विततप्रतिभासमिवाभाति' इत्यस्य स्थाने—'विततप्रतिभासमवभाति' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः, चिरज्ञाने विततप्रतिभासत्वस्य वस्तुभूतस्याभावात्।

**'न नित्यः परमात्राभिः' इति ॥ ॥ २४।**

अत्र प्रथमपादे—'न नित्यः क्रममात्राभिः' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। स्वोपज्ञवृत्तौ 'नास्य आदित्यगतिभिर्बह्वीभिरात्मपरिमाणमुत्कृष्यते' इत्यादिव्याख्यादर्शनेन—परमात्राभिरिति पाठस्यैव युक्तत्वप्रतीतेः। पुण्यराजीये च—'अथ परमात्राभिस्तस्य भेद उपचर्यते' इति पाठदर्शनाच्च। अत्र स्वोपज्ञवृत्तौ—'अतिक्रामन्तोऽनैकन्तिकेन' इत्यस्य स्थाने—'अतिक्रामद्भिरनेकान्तत्वेन' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। अस्य विशेषणद्वयस्यापि विशेषस्यासंनिधानेनार्थासंगतेः।

अत्रैवाग्रे पुण्यराजीये—'तस्येदानीम्' इत्यस्य स्थाने—'तस्य भेदानाम्' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। कालस्य भेदानां क्षणादिव्यवहारे बाधकाभावात्। कालस्यैवैकस्य क्षणादिव्यवहारानुपपत्तेः संभाव्यमानत्वात्।

**'ताभ्यो या जायते बुद्धिः' इति ॥ २५।**

'बुद्धिरेका सा भागवर्तिनी' इत्यस्य स्थाने 'बुद्धिरेकासौ भागवर्जिता' इति क्वचित्पाठः। स एव युक्तः। 'यत एकासौ बुद्धिर्निर्विभागेति कथं पूर्वापरव्यवहारं निर्वर्तयेत्' इति पुण्यराजीये तद्व्याख्यादर्शनात्।

अस्या द्वितीये पादे—'एका सा भागवर्जिता' इत्यस्य स्थाने—'एकाऽसौ भागवर्तिनी' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। स्वोपज्ञवृत्तौ—'सात्वेका भागवर्जिता बुद्धिः' इति व्याख्यादर्शनात्। यत्तदोर्नित्यसाकाङ्क्षत्वाच्च। एका भागवर्तिनी, इत्यनयोरर्थयोः परस्परं विरोधाच्च। अत्रैव पुण्यराजीये—'तत्राह' इत्यस्य स्थाने 'अत्राह' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। संनिहिते विषये—इदं प्रकृतिकपदपाठस्यैव युक्तत्वात्।

**'क्रमोल्लेखानुषङ्गेण' इति ॥ २६ ।**

अस्याः पुण्यराजीये 'बुद्धौ यदाहितम्' इत्यस्य स्थाने 'बुद्धौ तत्तदाहितम्' इति पाठः क्वचित् दृश्यते, स तु न युक्तः । इतोऽग्रेऽस्मिन्नेव वाक्ये 'तत्कि व्यतिरिक्तम्' इति पाठदर्शनेन 'यदाहितम्' इति पाठस्यैव समीचीनत्वात् । यत्तदोर्नित्यसंबन्धात् ।

अत्रैव पुण्यराजीये—'तद्वशात् क्रमादिकः, इति, 'तद्वर्णक्रमादिकः' इति च पाठद्वयं समुपलभ्यते । तत्राद्यः पाठ एव युक्तः । द्वितीयपाठे हि बुद्धावाहितस्य वासनारूपस्य बीजस्य बुद्धिव्यतिरेके तद्वर्णक्रमादिके व्यवहारे बुद्धिप्रयुक्तत्वानुपपत्तिः शब्दतः स्फुटं न समर्थिता भवतीति ।

**'भावनासमये त्वेतत्' इति ॥ २७ ।**

अत्र प्रथमे पादे—'भावनासमये-त्वेतत्' 'भावना समयं त्वेतत्' इति पाठद्वयमुपलभ्यते । तत्राद्यपाठ एव युक्तः । पुण्यराजीयेऽत्रैव—'स्वपदार्थभावनावसरे तूपाधिवशात्' इति तद्व्याख्यादर्शनात् । एतत्पदार्थस्य वाच्यस्वरूपस्य विशेषणत्वेऽर्थानुपपत्तेश्च ।

अस्या एव कारिकायास्तृतीयपादे—'व्यावृत्तभेदः, व्यावृत्तिभेदः, व्यावर्तितभेदः, इतिपाठत्रयं समुपलभ्यते । तत्राद्य पाठ एव युक्तः । स्वोपज्ञवृत्तौ—'तद्व्याख्याभेदोऽपि' इत्यादि तद्व्याख्यादर्शनात् । पुण्यराजीयेऽपि—'येनार्थो वाच्यस्वरूपो व्यावृत्तभेदोऽखण्ड एव' इत्येवं तद्व्याख्यादर्शनाच्च ।

अस्या एव कारिकाया अस्मिन्नेव पादे 'येनार्थो' इति—'येनासौ' इति पाठद्वयमुपलभ्यते । तत्राद्य पाठ एव युक्तः । एतद्व्याख्यानावसरे स्वोपज्ञवृत्तौ—'तद्व्यावृत्तभेदोऽपि सर्वोऽशब्दाख्योऽर्थो विरुद्धधर्मक्रमरूपोपग्रहेणासनाऽपि भेदेन प्रयुक्त इवोपलभ्यते इति व्याख्यादर्शनात् । अत्र स्वोपज्ञवृत्तिपाठो भ्रष्टो मया संशोध्य पठितस्तस्य साधुत्वासाधुत्वयोर्विद्वांसः प्रमाणम् । किञ्च पुण्यराजीयेऽपि—'येनार्थो वाच्यस्वरूपः' इत्यादि तद्व्याख्यादर्शनेनाद्यपाठस्यैव युक्तत्वम् । 'किञ्च—'येनासौ' इति पुंस्त्वनिर्देशस्यानुपपत्तिरपि । उपक्रमे स्थितस्य प्रत्ययवर्गस्य एतदपि नपुंसकेन निर्देशात् । तथा सति येनादः इति नपुंसकनिर्देशस्यैवौचित्यात् ।

**'पदानि वाक्ये' इति ॥ २८ ।**

अत्र पुण्यराजीये 'प्रकर्षप्राप्तौ भेद एव' इति—'प्रकर्षं प्राप्तो भेद एव' इति च पाठद्वयमुपलभ्यते । तत्राद्य पाठ एव युक्तः । द्वितीयपाठे हि भागानां प्रकर्षप्राप्तिरभीष्टा न सिध्येत् । अनभीष्टा च भेदस्य प्रकर्षप्राप्तिः प्रतिपद्येत । न हि भेदः सर्वत्र प्रकर्षप्राप्त इति वक्तुं शक्यते । वाक्ये पदभेदस्य प्रकर्षप्राप्तेरभावात् ।

**'भागानामनुपश्लेषान्' इति ॥ २९ ।**

अत्र पुण्यराजीये—'वर्णभागानामनुपश्लेषात्' इति 'वर्णे भागानामनुपश्लेषाद्' इति च पाठद्वयमुपलभ्यते। तत्र द्वितीयपाठ एव युक्तः, आद्यपाठे हि उद्देश्यभूते वर्णरूपेऽधिकरणे भागानामनुपश्लेषस्य विधेयत्वं न प्रतीयेत। एकार्थीभावेन उद्देश्य-विधेययोः पृथगनुपस्थितेः।

अत्रैवाग्रे पुण्यराजीये—'पदाभिव्यङ्ग्यः' इति—'पदाभिधेयः' इति च पाठद्वयं वर्तते। तत्राद्य पाठ एव युक्तः। वाक्यस्फोटस्य पदाभिधेयत्वाभावात्, पदाभि-व्यङ्ग्यत्वाच्च इति।

अस्याः कारिकायाश्चतुर्थे पादे—'किमन्यदपदिश्यताम्' 'किमन्यद् व्यपदिश्य-ताम्' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, स्वोपज्ञवृत्तौ—'अव्यपदेश-त्वाद्धि तेषु प्रतिभागम्' इत्यादि व्याख्यादर्शनात्। यद्यपि पुण्यराजीये—'किमन्यद-पदिश्यताम्' इति स्पष्टमेव दृश्यते। तस्यापि—'व्यपदिश्यताम्' इति पाठ एवाभि-निवेशः प्रतिभाति। तथाहि—इतः पूर्वं तत्रैव—'व्यपदेशाविरहात् किमत्र वाचकम्' इति पाठ उपलभ्यते।

एतत्कारिकापूर्वकारिकाव्याख्यावसरे च—'अतश्च व्यपदेश्यपदार्थविरहितं निरीहमेव जगदापतितम्' इति व्याख्या दृश्यते। किञ्च—कारिकायामपि—'तेषाम-व्यपदेश्यत्वात्' इति व्यपदेश्यपदमेव दृश्यते किञ्चापदिश्यताम् इति पाठेऽपदिशते-र्व्याजार्थकस्य लक्ष्यार्थ एव व्यपदेशः स्यात्। कारिकायाम्—'अपदिश्यताम्' इति निर्देशः शब्दपौनरुक्त्याद् बिभ्यता—बहूनां संयोगाद् उद्वेजकाद् वा बिभ्यता कृत इत्यपि वक्तुं शक्यते।

**'यदन्तःशब्दतत्त्वम्' इति ॥ ३० ।**

अस्या द्वितीयपादे 'भागैरेकम्' 'नादैरेकम्' इति पाठद्वयमुपलभ्यते। तत्राद्य-पाठ एव युक्तः, बहुलमुपलम्भाद्, एतस्या द्वितीयकारिकायाम्—'अर्थभागैरिति प्रयोगसाम्याच्च। किञ्च स्फोटसिद्धौ भरतमिश्रोऽपि 'बुद्ध्यनुसंहारमन्तस्तत्त्वमेकं भागैः प्रकाशितमपरे शब्दमाहुः' इति वदन् आद्यपाठमेवाभिप्रैति।

अस्याः कारिकायास्तृतीये पादे 'तदाहुरपरे शब्दम्' 'तमाहुरपरे शब्दम्' इति पाठद्वयं वर्तते। तदुभयमपि साधु। 'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तल्लिङ्गभाग् भवति' इति नियमात्।

अस्या एव कारिकायाश्चतुर्थे पादे—'तथैकता' 'तथैकताम्' इति पाठद्वयं दृश्यते। तत्र प्रथमान्त पाठ एव युक्तः। स्वोपज्ञवृत्तौ—'तस्य चेत्थंभावे विच्छिन्नपदरूपप्रवि-भागदर्शन एक एवायं वाक्याख्यः शब्दः' इति प्रथमान्तेनैव व्याख्यादर्शनात्। पुण्य-

राजीयेऽपि—'तस्यान्तरस्यैकता निरंशत एव प्रतिपाद्यते' इति प्रथमान्तेनैव व्याख्यादर्शनात् ।

**'अर्थभागैस्तथा तेषाम्' इति ॥ ३१ ।**

अस्याः द्वितीयपादे—'आन्तरोऽर्थः' 'आन्तरार्थः' इति पाठद्वयं दृश्यते । 'तत्रान्तरोऽर्थः' इति पाठ एव युक्तः । अस्मिन् पाठे हि आन्तरस्य अर्थविशेषणत्वं स्फुटं प्रतीयते । समस्तपाठे तु समासान्तरस्यापि संदेहेन न स्फुटा प्रतिपत्तिरिति ।

**'प्रकाशकप्रकाश्यत्वम्' इति ॥ ३२ ।**

अत्र 'प्रकाशकप्रकाश्यत्वम्' 'प्रकाशकप्रकाश्यत्वे' इति पाठद्वयमुपलभ्यते । 'तत्र प्रकाशकप्रकाश्यत्वम्' इति प्रथमान्तपाठ एव युक्तः । प्रकाशकत्वेन प्रकाश्यत्वं विभक्तिमिव प्रत्यवभासते, इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात् । 'कार्यकारणरूपता, इति प्रथमान्तपाठदर्शनेनापि उपक्रमे प्रथमान्त पाठ एव युक्तः प्रतीयते । 'तौ प्रकाश-प्रकाश्यत्वे' इति पाठस्यायुक्तत्वं तु विरुद्धलिङ्गदर्शनेन स्फुटमेव प्रतीयते ।

अस्याः कारिकायाः स्वोपज्ञवृत्तौ 'सर्वव्यतिरेकानतिक्रमात्' इत्यस्य स्थाने—'सर्वव्यतिरेकातिक्रमात्' इति पाठः साधुर्भाति ।

एतत्कारिकाव्याख्यावसरे पुण्यराजीये—'एतच्चादावुक्तम्' इत्यस्याग्रे एव-कारपाठः क्वचिदुपलभ्यते, स तु न युक्तः । तथा पाठे हि उक्तार्थत्वेनास्याः कारिकाया वैयर्थ्यं सम्भाव्येत । एवकाररहितपाठे तु—एतदर्थस्य प्रागुक्तावपि तत्रैव विशेषाभिधानायैतत्कारिकायाः सार्थक्यमस्ति इति वक्तुं शक्यते इति ।

**'तस्यैवास्तित्वनास्तित्वसामर्थ्ये' इति ॥ ३३ ।**

अत्र 'तस्यैवास्तित्वनास्तित्वे सामर्थ्ये' इति पाठोऽपि क्वचिदुपलभ्यते । स एव च युक्तः । स्वोपज्ञवृत्तौ 'द्वे सामर्थ्ये भावाभावाख्ये' इति व्याख्यादर्शनात् । 'अस्तित्व-नास्तित्वसामर्थ्ये' इति समस्तपाठे समासान्तरस्यापि संभवेन यथोऽभीष्टार्थालाभाच्च ।

अस्या एव कारिकायास्तृतीयचरणे—'अक्रमे क्रमनिर्भासि' 'अक्रमेऽनभिनिर्भासि' इति पाठद्वयं दृश्यते । तत्र प्रथमपाठ एव युक्तः । द्वितीयपाठे द्विवचनान्तत्वेन प्रगृह्यत्वप्रवृत्त्या पूर्वरूपासंभवात्, विसन्धौ च छन्दोभङ्गात् ।

अत्रैव पुण्यराजीये 'तत्त्वमाश्रित्यायम्' इति 'तत्त्वमाश्रित्याशयम्' इति च पाठ-द्वयं दृश्यते । तत्र द्वितीयपाठो न युक्तः, अर्थासंगतेः ।

**'संप्रत्ययप्रमाणत्वे' इति ॥ ३४ ।**

अत्र 'संप्रत्ययप्रमाणत्वात्' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः, हेतुत्वस्य तस्य पञ्चम्यन्तात्साक्षादुक्तत्वात् । सप्तम्यन्तपाठे हि सत्सप्तम्यान्वयज्ञापने सति पश्चाद्धेतुत्वं प्रतीयते इति हेतुत्वमर्थापत्तिलभ्यमिति ।

## 'राजशब्देन राजार्थ' इति ॥ ३५ ।

अस्या द्वितीयपाठे—'गम्यते' इत्यस्य स्थाने 'गृह्यते' इति पाठः क्वचिद् दृश्यते। तत्र 'गृह्यते' इति पाठ एव युक्तः । तथाहि गृह्यते इत्यस्य हि शक्त्यानुभूयते इत्यर्थः । गम्यते इत्यस्य तु व्यञ्जनया प्रतीयते इत्यर्थः स्वारसिकः । न च राजशब्देन राजार्थो व्यञ्जनया प्रतीयते इति ।

अस्या एव द्वितीयचरणे—'वृत्तावाख्यातसदृशम्' इति—'वृत्तौ वाक्यार्थसदृशम्' इति पाठद्वयमुपलभ्यते । तत्राद्यपाठ एव युक्तः, द्वितीयपाठेऽर्थासंगतेः । नहि वृत्तौ वाक्यार्थसादृश्यं पदे दृश्यते, नापि दर्शयितुं शक्यते ।

अस्या एव कारिकाया द्वितीयपादे—'पदमन्यत् प्रसज्यते' इति—'पदमन्यत्र सज्यते' इति च पाठद्वयं दृश्यते । 'पदमन्यत् प्रयुज्यते' इति—'पदमन्यत्र प्रयुज्यते' इति पाठद्वयमपि तत्रैव दृश्यते । तत्राद्यपाठ एव युक्तः । अन्यपाठेऽर्थासंगतेः । चतुर्थपाठे प्रयुज्यते इति शब्दस्वरूपासाधुत्वमपि ।

## 'वाक्ये त्वर्थान्तरगतेः' इति ॥ ३७ ।

अत्र क्वचित्—'वाक्येष्वर्थान्तरगतेः' इति पाठ उपलभ्यते । स तु न युक्तः । अत्रैव पुण्यराजीये—'केषाञ्चिच्छद्धानां वाक्ये विग्रहरूपेऽर्थान्तरप्रतीतेः' इति व्याख्यायाम्-'वाक्ये' इति एकवचनप्रयोगदर्शनात्, तत्रैवावतरणिकायाम्-'वाक्य' इति प्रतीकदर्शनाच्च । किञ्च 'वाक्ये' इत्येकवचनप्रयोगे यत्किञ्चिद्वाक्यव्यक्तिविशेषप्रतीतिरिति 'वाक्येऽर्थान्तरगतेरितिहेतोरव्यभिचारित्वेन रूढिशब्दत्वसाधकत्वम् । 'वाक्येषु अर्थान्तरगतेः' इति बहुवचनान्तपाठे तु वाक्यसामान्यप्रतीत्या क्वचिद् वाक्येऽर्थान्तरगतावपि तत्समासे रूढिशब्दत्वाभावेन हेतोरव्यभिचारित्वं स्यात् । क्वचित् 'अर्थान्तरगतेः' इत्यस्य स्थाने 'अर्थान्तरगते' इति पाठः । स तु न युक्तः । पुण्यराजीये 'वाक्ये विग्रहरूपेऽर्थान्तरप्रतीतेः ।' इति व्याख्याविरोधात् ।

क्वचित्तु अस्याः कारिकाया द्वितीयपादे—'सादृश्यपरिकल्पने' इत्यस्य स्थाने—'सादृश्यं परिकल्पते' इति पाठः । स तु न युक्तः । अत्र पुण्यराजीये—'वृत्तिवाक्ययोः सादृश्यपरिकल्पने इत्यादि व्याख्याविरोधात् । विवक्षितार्थासंगतेश्च । अत एव 'सादृश्ये परिकल्पिते' इति 'सादृश्ये परिकल्पने' इति च पाठद्वयमप्ययुक्तम् ।

## 'उपादायापि ये हेया' इति ॥ ३८ ।

अत्र—'उपादेया न ये हेया' इति पाठः क्वचिद् दृश्यते । स तु न युक्तः, स्वोपज्ञवृत्तौ—'तेषां च यदर्थमुपादानं तत्सन्निधाने नियत एषां त्यागः, उपायभावात्' इति व्याख्यादर्शनात् ।

पुण्यराजीयेऽपि—'शास्त्रमुपायः शब्दपरिज्ञाने। ज्ञातेषु तेषु प्रयोजनसंगत्तेरनुपयोग इति तस्य परित्यागः' इति व्याख्यादर्शनाच्च। 'उपादायापि हेयाँस्तानुपायान् संप्रचक्षते' इति स्फोटसिद्धौ अर्थपरिच्छेदप्रकरणे पूर्वार्धपाठः। स तु न युक्तः यच्छब्दाभावे तच्छब्दपाठस्यायुक्तत्वात्।

**'अर्थं कथञ्चित् पुरुष' इति ॥ ३९।**

अस्यास्तृतीयपादे—'संसृष्टा वा विभक्ता वा' इति 'संसृष्टा वाग् विभक्ता वा' इति—'संसृष्टा चाविभक्ता वा' इति च पाठत्रयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। संसृष्टाः—राजपुरुषः, प्लक्षन्यग्रोधौ। विभक्ताः—राज्ञः पुरुषः, प्लक्षश्च न्यग्रोधश्चेति' इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। पुण्यराजीयेऽपि—'तस्मात्—'संसृष्टस्य विभक्तस्य वाऽर्थविशेषस्य' इति व्याख्यादर्शनात्। आद्यादन्यस्मिन् पाठद्वयेऽर्थासंगतेश्च।

**'सोयमित्यभिसम्बन्ध' इति ॥ ४०।**

एतत्कारिकाव्याख्याने पुण्यराजीये—'किं पुनरनेकविशेषविशेषाभिधानविवक्षयोदीरितं पदम्' इति पाठस्य स्थाने क्वचिद् विशेषपदरहितः पाठ उपलभ्यते। स तु न युक्तः, तथा सति अशेषपदार्थस्य विशेष्यालाभेन वाक्यस्य सन्दिग्धार्थत्वापत्तेरिति।

**'केवलेन पदेनार्थ' इति ॥ ४१।**

अस्या द्वितीये पादे—'यावानेवाभिधीयते, इति—'यावानेवावगम्यते' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि–अत्र पाठे अभिधीयते इत्यस्य अभिधया (शक्त्या) बोध्यते इत्यर्थः। अवगम्यते इत्यस्य तु व्यज्यते इत्यर्थः। स च प्रकृतेऽनुपयुक्तः। 'वाक्यस्थं तावतोऽर्थस्य तदाहुरभिधायकम्' इत्युत्तरार्धेन सह विरोधात्।

अस्या एव कारिकायास्तृतीये पादे—'वाक्यस्थं तावतोऽर्थस्य' 'वाक्यार्थान्तरवतोऽर्थस्य' 'वाक्यार्थान्तरवर्तेऽर्थस्य' 'वाक्यार्थतावतोऽर्थस्य' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः। इतरे तु त्रयोऽयुक्ताः, अर्थासंगतेः।

अस्याः कारिकायाश्चतुर्थे पादे—'तदाहुः' 'तमाहुः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तच्छब्देन पदस्य परामर्शात्' पदस्य च नपुंसकत्वात्।

**'संबन्धे सति यत्त्वन्यद्' इति ॥ ४२।**

अत्र—'यदन्यद्' इति पाठान्तरं क्वचिदुपलभ्यते। स तु न युक्तः। स्वोपज्ञवृत्तौ 'यत्तु पदान्तरेण संबन्धे' इत्यादिव्याख्यायां 'यत्तु' इति पाठदर्शनात्। यदन्यदिति पाठे छन्दोभङ्गाच्च।

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतत् पद्यस्य लक्षणम्॥

इति छन्दोविदामुक्तेः।

अत्रैव पुण्यराजीये—'ततः समुदये पदानाम्' 'ततः समुदाये पदानाम्'इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। समुदायपदस्य संघ एव शक्तेः। समुदयपदस्य तु समेत्य उदयः, सम्यग् उदयः इत्यर्थद्वयसत्त्वेन नानार्थकत्वात् तत्र पाठेऽर्थसंदेहः।

## 'स त्वनेकपदस्थोऽपि' इति ॥ ४३ ।

अस्या अवतरणे वाक्यपदीये—'वाक्यार्थस्य चास्य' इति क्वचित् पाठः, क्वचित्तु 'चास्य' इति न पाठः।

वस्तुतस्तु—'चास्य' इति पाठो युक्त एव। इदंपदेन विना पूर्वोक्तस्य वाक्यार्थस्वरूपस्य परामर्शासंभवात्।

## 'भेदानाकाङ्क्षत' इति ॥ ४५ ।

अस्याश्चतुर्थपादे 'तां विशेषे निवेशयन्' इति, 'तां विशेषे निवेशयेत्' इति च पाठद्वयं वर्तते। तत्राद्यपाठ एव युक्तः। तत्र पाठे हि 'निवेशयन्' इत्यस्य संबन्धविशेषणत्वेनैकवाक्यता। 'निवेशयेत्' इति पाठे तु तिङन्तभेदेन वाक्यभेदः स्यादिति स एव दोषः।

अस्या व्याख्याने स्वोपज्ञवृत्तौ-'कस्यचिदनिरूपणादानुगुण्याच्च' इति-'कस्यचिदनिरूपणादन्याग्राच्च' इति च पाठद्वयं समुपलभ्यते। तत्राद्यपाठ एव युक्तः, द्वितीयपाठेऽर्थासंगतेः।

## 'कार्यानुमेयः संबन्ध' इति ॥ ४६ ।

अस्या द्वितीयपादे—'रूपं तस्य न दृश्यते' इति–'रूपं तस्य न विद्यते' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'नहि तस्य संबन्धस्य स्वरूपमवधारयितुं शक्यम्' इति व्याख्यादर्शनात्। पुण्यराजीये च—'इदं तदिति तु रूपं तस्य न दृश्यते' इति व्याख्यादर्शनाच्च।

अस्या एव तृतीयचरणे-'असत्त्वभूतम्' इति 'असत्यभूतम्' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ'अत्यन्तासत्त्वभूतम्' इति व्याख्यादर्शनात्। पुण्यराजीये च-'अत एवासत्त्वभूतम्' इत्यादिव्याख्यादर्शनाच्च।

अस्या एव कारिकायाश्चतुर्थे पादे—'अतस्तं प्रतिजानते' इति—'अतस्तत् प्रतिजानते' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठो न युक्तः, तत्पदेन संबन्धस्यैव परामर्शेन तदनुरोधेन पुंस्त्वस्यैवोचितत्वात्। पुण्यराजीये च—'तमेवंभूतमाचार्याः प्रतिजानते' इतिव्याख्यादर्शनाच्च।

## 'नियतं साधने साध्यम्' इति ॥ ४७ ।

'नियमः सन् प्रकाशते' इत्यत्र 'नियम' इत्यस्य स्थाने 'नियत' इति पाठो युक्तो भाति। एवमेतद् व्याख्याने पुण्यराजीये–'नियमः सन्नेव' इत्यत्र नियत इति पाठो युक्तः।

अस्याश्चतुर्थपादे—'नियमः सन् प्रकाशते' 'नियमः संप्रकाशते' इति पाठद्वयं समुपलभ्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'संस्तु नियमः प्रयोगे' इत्यादि व्याख्यादर्शनात्। पुण्यराजीयेऽपि-'नियमः सन्नेव प्रकाशते' इति व्याख्यादर्शनाच्च।

## 'गुणभावेन साकाङ्क्षम्' इति ॥ ४८।

अस्यास्तृतीये पादे—'साध्यत्वेन' 'साम्यत्वेन' इति पाठद्वयं दृश्यते। किञ्च-'निमित्तानि' 'निमित्तादि' इति पाठद्वयं तत्रैव दृश्यते। तत्र 'साध्यत्वेन निमित्तानि' इति पाठ एव युक्तः। स्वोपज्ञवृत्तौ-'साध्यत्वेनैव तु निमित्तानि क्रियापदमपेक्षन्ते' इति व्याख्यादर्शनात्।

## 'सन्त एव विशेषा ये' इति ॥ ४९।

अस्या द्वितीये पादे—'व्यवस्थिता' इति—'अव्यवस्थिता' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे छन्दोभङ्गात्। अस्या एव तृतीये पादे 'अनुगम्यन्ते' इति-'अनुमन्यन्ते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'अनुगम्यन्ते' इति पाठदर्शनात्। पुण्यराजीये—'अवगम्यन्ते' इति व्याख्यादर्शनाच्च।

अत्रैव पुण्यराजीये—'अभ्याजिक्रियायाम्' इति-'अभ्याजक्रियायाम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अभ्याङ्पूर्वकस्याजधातोरिश्तिपा निर्देशसंभवात्। द्वितीयपाठे तु अभ्याजेति लोडन्तपदघटकधात्वनुपूर्विकायां क्रियायामित्यर्थे लक्षणा स्वीकर्तव्येत्यनौचित्यम्। न च 'अभ्याजि' इति पाठेऽपि धातुनिर्देशस्य धात्वर्थे लक्षणा कर्तव्यैवेति को विशेष इति वाच्यम्। आद्यपाठे साक्षात् सम्बन्धो लक्षणायाः प्रयोजकः, द्वितीयपाठे तु परम्परासम्बन्ध इत्यस्य विशेषस्य सत्त्वात्।

## 'शब्दानां क्रममात्रे च' इति ॥ ५०।

अस्या द्वितीयपादे—'नान्यः शब्दोऽस्ति' इति—'नान्यशब्दोऽस्ति' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। तथाहि—आद्ये पाठे अध्याहृतक्रमपदार्थस्यान्यपदार्थैकदेशेऽन्यत्वे नित्यसापेक्षत्वेनान्वयः। समस्तपाठे तु पदार्थैकदेशैकदेशेनेत्यनौचित्यात्। समस्तपाठे समाससन्देहेनार्थसंदेहात् कर्मधारयसमासार्थस्य झटित्यनुपस्थितेश्च। स्याद्वादरत्नाकरे ४-१० सूत्रव्याख्यानावसरे इयं कारिका उपन्यस्ता। तत्र—'तेन वाक्यं न विद्यते' इत्यस्य स्थाने—'तत्र शब्दो न विद्यते' इति पाठो वर्तते। स तु न युक्तः। स्वोपज्ञवृत्तौ—'तेन वाक्यमित्यवस्तुकमेवेदमभिलापमात्रं पदमेवार्थवदिति' व्याख्यादर्शनात्। 'अत्र पदमेवार्थवत्' इत्युक्त्या शब्दमात्रस्यावस्तुत्वप्रतिपादने तात्पर्याभावाच्च।

अत्र पुण्यराजीये—'अथ क्रम इति किमुच्यते इत्याह—क्रमो हि इति' इत्यस्मादनन्तरम्-'ततो भिन्नम् इति शेषः' इति पाठ उपलभ्यते। स च युक्त एव। क्रमो हि धर्मः कालस्य तेन क्रमाद् भिन्नं वाक्यं वस्तुभूतं न विद्यते इत्यर्थसंभवात्।

**'ये च संभविनो भेदा' इति ॥ ५१ ।**

अत्र 'भेदा' इत्यस्य स्थाने 'भावा' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। स्वोपज्ञवृत्तौ–'यथाह्युच्चरिते पदे संभविनां भेदानाम्' इति व्याख्यादर्शनात्। पुण्यराजीयेऽपि—'पदार्थेषु ये भेदाः पूर्वोक्ताः सन्ति' इति दर्शनाच्च।

**'वर्णानाञ्च पदानाञ्च' इति ॥ ५२ ।**

अस्या द्वितीयपादे—'क्रममात्रनिवेशिनी' 'क्रममात्रनिवेशिता' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—आद्यपाठे क्रममात्रे निविशते तच्छीला इति क्रममात्रनिवेशित्वं पदसंज्ञाया वाक्यसंज्ञायाश्च स्वभावः प्रतीयते। क्रममात्रनिवेशिता इति पाठे तु क्रममात्रनिवेशित्वं न तयोः संज्ञयोः स्वभावः, किन्तु क्रममात्रे ते संज्ञे केनचिद् बलान्निवेशिते इत्यर्थः प्रतीयते, न चैतद् युक्तम्-वाक्यसंज्ञापदक्रम एव युक्ता, तथाऽर्थप्रतीतिदर्शनात्' इति पुण्यराजीयव्याख्याविरोधात्।

**'समानेऽपि तु शब्दत्वे' इति ॥ ५३ ।**

अत्र—'सामान्येऽपि तुशब्दत्व' इति पाठोऽपि क्वचिद् दृश्यते। किन्तु नायं पाठो युक्तः। तथा हि—वर्णपदयोः शब्दत्वे समाने तुल्येऽपि पदार्थसंप्रत्ययो दृष्टः, प्रतिवर्णन्तु नासौ दृष्टः इति वैषम्यस्यात्र प्रतिपिपादयिषितत्वात्। अस्य चार्थस्य—सामान्येऽपि तु-शब्दत्वे इति पाठेनालाभात्। अस्मिन् पाठे हि—शब्दत्वे जातिरूपेऽपि, इत्यर्थो लभ्यते, न त्वसौ।

अस्यामेव कारिकायाम्—'शब्दत्वे दृष्टः' इत्यस्य स्थाने—'शब्दत्वदृष्टः' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः, अर्थासंगतेः।

**'यथा सावयवा वर्णा' इति ॥ ५४ ।**

यथाऽस्याप्यवयवा वर्णा इति पाठोऽपि क्वचिद् दृश्यते। तदेतत् पाठद्वयमपि अयुक्तम्, अर्थासंगतेः। द्वितीयपाठेऽक्षरवृद्ध्या छन्दोदोषाच्च। किन्तु 'यथाऽस्यावयवा वर्णा' इति पाठ एव युक्तः। अस्येति पदस्येत्यर्थः।

अस्या एव कारिकायाः पुण्यराजीये—'वर्णानां समुदायार्थवत्त्वे' 'वर्णानां समुदायार्थत्वे' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठो न युक्तः, अर्थासंगतेः।

अस्या एव कारिकाया उपसंहारे—'इति व्याख्यातम्' इति पाठः क्वचिद् दृश्यते। क्वचित् पुस्तके तु—'व्याख्यातम्' इति पदमग्रिमकारिकाया अवतरणग्रन्थे योजितं दृश्यते, 'व्याख्यातं क्रमपक्षमप्युपसंहर्तुमाह' इति। तत्रोपसंहारे एव पाठो युक्तो

न त्ववतरणे, 'व्याख्यातानि त्रीणि लक्षणानि श्लोकत्रयेणोपसंहरति' इत्यस्य प्रागुक्तत्वेन पौनरुक्त्यापत्तेः ।

## 'अनर्थकान्युपायत्वात्' इति ।। ५५ ।

अत्र अनर्थकान्युपायत्वादिति पाठोऽपि क्वचिद् दृश्यते । तत्र पदानि वाक्यार्थप्रतिपादने उपायत्वात् अनर्थकानि इति—व्याख्यानस्य युक्तिमत्त्वादयं पाठो युक्तो यः प्रथमः । अपायत्वात्—इति पाठस्तु न युक्तः । पदानामपायरूपत्वाभावात्, अपेतत्वेऽपि तेषु अर्थवत्त्वदर्शनाच्च ।

अस्या एव कारिकायास्तृतीयपादे—क्रमेणोच्चारितानि, क्रमेणोच्चरितानि' इति पाठद्वयं दृश्यवे । तत्र—'उच्चारितानि, इति ण्यन्तस्य प्रयोग एव साधुः । स्वयमुच्चरितत्वस्य प्रत्यक्षबाधात् ।

अस्याः कारिकायाः पुण्यराजीये—'संसर्गवशान्निराकाङ्क्षं विशेषावस्थितपदार्थस्वरूपमेव' इति संसर्गवशान्निराकाङ्क्षं विशेषावस्थितपदार्थस्वरूपमेव' इति च पाठद्वयं दृश्यते । तत्र निराकाङ्क्षपदे सानुस्वार पाठ एव युक्तः । तथासत्येव निराकाङ्क्षपदस्याभीष्टान्वयलाभसंभवात् ।

## 'नित्यत्वे समुदायानाम्' इति ।। ५६ ।

अस्यास्तृतीये पादे—'एकस्यैवार्थतामाहुः' इति 'एकस्यैकार्थतामाहुः' इति च पाठद्वयं दृश्यते । तत्राद्यपाठो न युक्तः, अर्थासंगतेः ।

अस्या एव कारिकायाश्चतुर्थे पादे—'वाक्यस्याव्यभिचारिणीम्' इति—'वाच्यस्याभिचारीणीम्' इति च पाठद्वयं दृश्यते । तत्र द्वितीयः पाठो न युक्तः । पदसमुदायात्मको व्यक्तिस्फोट एव वाक्यम्—तच्चैकम् एकार्थप्रतिपादकम् । पदसमुदायाभिव्यङ्ग्यो जातिस्फोट एव वाक्यम्—तथाविधम् इत्यर्थस्यैवैतत्कारिकाप्रतिपाद्यत्वात्, वाच्यार्थस्यैकस्य वाक्याभिधेयत्वप्रतिपादनेऽस्या कारिकाया असंरम्भात् । अत एव पुण्यराजीयेऽस्याः कारिकाया अवतरणमुक्तम्—'स्फोटपक्षमप्युपसंहर्तुमाह' इति ।

अस्या एव पुण्यराजीये—'भिन्नवक्त्रुदीरितेषु वा' इति क्वचित्पाठः । क्वचित्तु 'भिन्नवक्त्रुदीरितेषु भिन्नवदुदीरितेषु वा' इति पाठः । तत्र द्वितीय एव पाठो युक्तः । अस्मिन् पक्षे वाशब्दस्य संनिहितपक्षद्वयविकल्पार्थकत्वरूपस्य विशेषस्य संभवात् । प्रथमपाठे 'इतिमतभेदाद्' इति वक्ष्यमाणेन गतार्थत्वाद् वाशब्दस्यानर्थक्याच्चेति ।

अत्रैवाग्रे पुण्यराजीये—'वाक्यवाक्यार्थयोरुभयोः' इति क्वचित्पाठः । क्वचित्तु—'वाक्यवाक्यार्थयोः' इत्येव पाठः । अयमेव युक्तश्च । द्विवचनेनैव द्वित्वस्य लाभे उभशब्दपाठस्य वैयर्थ्यात् ।

**'अभेदपूर्वका भेदाः' इति ॥ ५७ ।**

अस्यास्तृतीये पादे—'भेदपूर्वानभेदांस्तु' इति—'भेदपूर्वानभेदाश्च' इति पाठद्वयं दृश्यते। तत्र पूर्वस्माद् वैलक्षण्यद्योतनार्थस्तुशब्दपाठ एव युक्तः। चशब्दस्तु नानार्थकत्वेन संदिग्धार्थकत्वात् स्वार्थबोधने प्रकरणादिसव्यपेक्षत्वेन विलम्बेनार्थावबोधकत्वे च हेयः।

**'पदप्रकृतिभावश्च' इति ॥ ५८ ।**

अस्या द्वितीयपादे—'वृत्तिभेदेन' 'व्यक्तिभेदेन' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'पदानां प्रकृतिरिति तत्पुरुषवृत्त्या शब्दसंस्कारमाचक्षाणाः' इति 'ते बहुव्रीहिवृत्त्या शब्दसंस्कारमाचक्षाणाः' इति च व्याख्यायां वृत्तिभेदस्यैव प्रदर्शितत्वात्। पुण्यराजीये च—'वृत्तिभेदमेव प्रदर्शयितुमाह पदानामिति' इत्यवतरणिकादर्शनाच्चेति।

अस्याः कारिकाया द्वितीयपाद एव—'वर्ण्यते, 'वर्त्यते' इति पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः। द्वितीयपाठस्तु अर्थासंगतेरेव परिहर्तव्य इति।

**'पदाम्नायश्च यद्यन्य' इति ॥ ५९ ।**

अत्र—'यदाम्नायश्च' इति पाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः, स्वोपज्ञवृत्तौ—'यद्यन्य एव पदाम्नायो नित्यः' इति व्याख्यादर्शनात्।

पुण्यराजीये च—'यदि हि पदाम्नायः संहिताप्रदर्शको नित्यः' इति व्याख्यादर्शनाच्च।

अस्या एव कारिकाया द्वितीयपादे—'निदर्शकः' इति—'निदर्शितः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अत्रैव पुण्यराजीये—'संहिताया निदर्शकः' इत्यस्य—'संहिताप्रदर्शकः' इति व्याख्यादर्शनात्। निदर्शित इति पाठे—केन दर्शितः क्व दर्शित इत्यपेक्षाया अनुपशमात्, संहिताया इत्यस्यानन्वयाद्, दूरान्वयापत्तेश्चेति।

अस्या एव कारिकायाश्चतुर्थे पादे—'पदं लक्षणदर्शनात्' 'पदलक्षणदर्शनात्' इति व्यस्तः समस्तश्च पाठः समुपलभ्यते। तत्र 'पदम्' इति व्यस्तपाठ एव युक्तः, 'कार्यम्' इत्यस्य अन्वयिनो दर्शनात्।

**'प्रतिवर्णमसंवेद्य' इति ॥ ६० ।**

अस्या द्वितीयपादे—'पदार्थप्रत्ययो यथा' इति—'पदार्थः प्रत्ययो यथा' इति च व्याससमासाभ्यां मिथो भिन्नं पाठद्वयमुपलभ्यते। तत्र व्यस्तो द्वितीयपाठो न युक्तः, अर्थासंगतेः।

अत्रैव पादे—'यथा' इत्यस्य स्थाने 'यदा' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, तृतीयपादे--'एवम्' इत्यस्यानन्वयापत्तेः।

**'सूक्ष्मं ग्राह्यं यथाऽन्येन' इति ॥ ६२ ।**

अत्र—'सूक्ष्मग्राह्यम्' इति समस्तपाठः क्वचिद् दृश्यते। स तु न युक्तः, समाससंदेहेनार्थसंशयसंभवात्। अस्या एव तृतीयपादे—'वर्णोऽप्यन्येन' 'वर्णोप्येनेन' इति इति पाठद्वयमुपलभ्यते। तत्र द्वितीयपाठो न युक्तः, अर्थासंगतेः, अन्वादेशानुपपत्तेश्च।

अस्या एव कारिकायाश्चतुर्थे पादे 'संबद्धो' इति 'संबन्धो' इति पाठद्वयं दृश्यते। तत्रार्थसंगत्याऽऽद्यपाठ एव युक्तः, स्वोपज्ञवृत्तौ तथैव पाठदर्शनाच्च।

**'पदस्योच्चारणादर्थ' इति ॥ ६३ ।**

अस्याः पुण्यराजीये—'तेनैवार्थेन संहता अप्यर्थवन्तः' इति—'तेनैवार्थेनासंहता अप्यर्थवन्तः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, द्वितीयपाठेऽर्थासंगतेः।

**'प्राप्तस्य यस्य' इति ॥ ६४ ।**

'यतः श्रुतिः' इत्यस्य स्थाने क्वचित् 'पुनः श्रुतिः' इति पाठः। स एव युक्तः। तथाहि—पुण्यराजीये—'व्रीहिभिर्यजेतेति पुन व्रीहिश्रुतिरुच्चरन्ती नियममवगमयति' इति व्याख्याने पुनः पदप्रयोगो दृश्यते इति।

**'यजेतेति यदा द्रव्यं' इति ॥ ६५ ।**

अत्र 'यदा द्रव्यम्' इत्यस्य स्थाने 'ततो द्रव्यम्' इति पाठो दृश्यते। स तु न युक्तः, एतत्पद्योत्तरार्धान्ते—'तदा' इत्यस्य दर्शनेनात्र पूर्वार्धे 'यदा' इत्यस्यावश्यकत्वात्, यत्तदोः साकाङ्क्षत्वनियमात्।

स्वोपज्ञवृत्तौ—'यदि सामान्यलक्षणप्राप्तं यवादिद्रव्यं व्रीहिश्रुत्या शास्त्रेण प्रतिषिध्यते' इति 'यदा' इत्यस्य यदि शब्देन व्याख्यादर्शनात्। अस्या एव कारिकायास्तृतीये पादे - 'व्रीहिश्रुत्या निवर्तेत' इति—'व्रीहिश्रुत्या निवर्त्येत' इति च पाठद्वयमुपलभ्यते। तत्रान्त्यपाठ एव युक्तः।

अस्या एव कारिकाया व्याख्यायां प्रागुदाहृतायां स्वोपज्ञवृत्तौ 'व्रीहिश्रुत्या शास्त्रेण प्रतिषिध्यते' इति—शास्त्रस्य कर्तृत्वदर्शनात्। यद्यपि अत्रत्य पुण्यराजव्याख्यादर्शनेन— निवर्तेत' इति पाठस्यैव साधुत्वम्, द्रव्यमात्रस्यैव च कर्तृत्वं प्रतीयते, तथापि तत्स्वोपज्ञवृत्त्यसम्यग्दर्शनप्रयुक्तप्रमादमूलकमिति हेयम्। तात्पर्यार्थपरतया वा नेयमिति।

अस्या एव कारिकायाश्चतुर्थे पादे 'न स्यात्प्रतिनिधिस्तथा' इति 'न स्यात्प्रतिनिधिस्तदा' इति च पाठद्वयमुपलभ्यते। तत्रान्त्यपाठ एव युक्तः। अस्या एव प्रथमे पादे—'यजेतेति यदा द्रव्यम्' इति पाठस्यैव प्राग् व्यवस्थापितत्वात्।

अस्या एव कारिकाया व्याख्याने पुण्यराजीये—'यजेतेत्येतया' इति—'यजेतेत्यनया' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। यजेत इत्यस्य संनिहिततरत्वबोधनाय एतत्पदेन परामर्शस्यैवौचित्यात्।

तथाहि—अमरः—

'इदमस्तु संनिकृष्टं समीपतरवर्ति चैतदो रूपम्।

अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयाद् इति।

अत्र रूपपदम्—रूप्यते—बोध्यते इति रूपमर्थ इति व्युत्पत्त्याऽभिधेयपरम्।

**'तस्माद् व्रीहीत्वमधिकं' इति ॥ ६६।**

अस्याः कारिकाया द्वितीये पादे— 'प्रकल्पयन्' इति—'प्रकल्पयेत्' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। पुण्यराजीये 'अभ्युपकल्पयन् प्रकटीकुर्वन्' ति तद्व्याख्यानदर्शनात्।

स्वोपज्ञवृत्तौ—'प्राप्त्यर्थः सन्न बाधते' इति पाठस्य साक्षादुल्लेखात्। पुण्यराजीयेऽपि—'व्रीहिशब्दोऽत्र प्राप्त्यर्थ इति व्याख्यादर्शनाच्चेति।

**'नच सामान्यवत् सर्वे' इति ॥ ६८।**

एतत्कारिकाव्याख्याने पुण्यराजीये—'अपि तु द्रव्यत्वमेव' इत्यस्य स्थाने क्वचिद् 'अपि तु द्रव्यत्वमात्रम्' इति पाठ उपलभ्यते, स एव तु युक्तः। समासे विशिष्टार्थोपस्थितिस्वीकारेण एकोपस्थित्यैव शाब्दबोधनिर्वाहात्। द्रव्यत्वमेव इति व्यस्तपाठे तु—द्रव्यत्वपदेन द्रव्यत्वस्य, एवकारेण च खण्डशः शक्त्या अन्ययोगस्य व्यवच्छेदस्य चोपस्थित्या शाब्दबुद्धिकारणस्योपस्थितित्रयस्य स्वीकारे गौरवादिति।

**'शुक्लादयो गुणाः सन्त' इति ॥ ६९।**

अस्या द्वितीये पादे—'यथा तत्राविवक्षिताः इति—'यथा तत्र विवक्षिताः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ पुण्यराजीये च तथैव व्याख्यादर्शनात्। व्रीहिभिर्यजेत इत्यत्र व्रीहिगताः शुक्लकृष्णादयो गुणा यथाऽविवक्षितास्तथा द्रव्यत्वसहचारिणो व्रीहित्वस्यापि अविवक्षेति मुख्याभावे तत्सदृशो नीवारादिः प्रतिनिधीयते इत्यर्थस्यैवात्राभिप्रेतत्वाच्चेति।

**'असन्निधौ प्रतिनिधिः' इति ॥ ७०।**

अस्यास्तृतीये पादे—'काम्यस्य वा प्रवृत्तस्य' इति-'काम्यस्येव प्रवृत्तस्य' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, स्वोपज्ञवृत्तौ पुण्यराजीये च तथैव व्याख्यादर्शनात्।

अस्या एव कारिकायाश्चतुर्थे पादे—'इत्युपपद्यते इति—'इत्यपदिश्यते' इति च पाठद्वयं दृश्यते। तत्राद्यपाठः पुण्यराजसम्मतः पुण्यराजीये—'इति प्रतिनिधिरुप-

पद्यते' इति व्याख्यादर्शनात् । एतत्कारिकाव्याख्याने पुण्यराजीये-'समुदायस्य प्रतीतेः' इत्यत्र समुदायपदोत्तरं कर्तव्यतयेत्यस्य शेषो बोध्यः। अन्यपाठस्तु हेलाराजसंमतः। तृतीयकाण्डे जातिसमुद्देशे द्वितीयश्लोकव्याख्यायां तेनोद्धृतत्वात्। 'इत्युपदिश्यते' इत्यपि क्वचित्पाठ उपलभ्यते। अत्र पाठत्रयेऽपि आद्यपाठ एव युक्तः। पुण्यराजेन महता मनःसमाधानेन व्याख्याने उपपादितत्वात्। द्वितीयस्तु हेलाराजेनोद्धृतोऽपि न युक्तः। तेनाव्याख्यातत्वेन प्रमादस्य संभवात्, अर्थाप्राशस्त्याच्च। तृतीयपाठस्तु उभाभ्यामपि उपेक्षितत्वेनोपेक्ष्य एव।

अस्याः प्रथमे पादे—'असंनिधौ' इत्यस्य स्थाने 'असंभवे' इति पाठो हेलाराजसंमतोऽपि हेय एव। स्वोपज्ञवृत्तौ—'असंनिधौ' इत्यस्य-'अङ्गमात्रासंनिधाने' इति-व्याख्यादर्शनात्।

**'विशिष्टैव क्रिया येन' इति ॥ ७१ ।**

अत्र 'विशिष्टस्य क्रिया येन' इति पाठो बहुत्रोपलभ्यमानोऽपि न युक्तः, पुण्यराजीये—'विशिष्टैवेति' इति प्रथमान्तस्यैव प्रतीकदर्शनात्। 'येनाखण्डवाक्यवादिना व्रीहिकरणिका यजतिक्रिया निरस्तावयवार्था व्रीहिभिर्यजेतेत्यत्र वाक्यार्थ इत्युच्यते' इति तद्व्याख्यादर्शनाच्च। षष्ठ्यन्तपाठेऽर्थासंगतेश्च।

**'विज्ञातार्थं पदं यच्च' इति ॥ ७२ ।**

अत्र—'निर्ज्ञातार्थम्' इति पाठः क्वचिदुपलभ्यते, स तु प्रकृते वाक्यार्थे समन्वीयमानोऽपि न युक्तः। पुण्यराजीये—'विज्ञातार्थम्' इत्यस्यैव प्रतीकदर्शनात्। व्याख्यायां समन्वयदर्शनाच्च।

अस्या एव कारिकायास्तृतीये पादे—'पिकादि यदविज्ञातम्' इति-'पिकादिपदविज्ञानम्' इति च पाठद्वयमुपलभ्यते। 'पिकादिपदविज्ञानम्' इत्यपि पाठः क्वचित् केरललिपावुपलभ्यते। पाठत्रयेऽपि—'यदविज्ञातम्' इत्यस्य क्लिष्टकल्पनामन्तरेणार्थ-प्रत्यायकत्वात् अयमेव पाठो युक्तः।

**'सामर्थ्यप्रापितं यच्च' इति ॥ ७३ ।**

एतत्कारिकाव्याख्याने पुण्यराजीये 'यदि च वाक्यो यः सम्बन्धो बलवान् स्यात्' इत्यस्य स्थाने 'बलवान्न स्यात्' इति नञ्घटितः क्वचित्पाठ उपलभ्यते, स तु न युक्तः। श्रुत्यपेक्षया वाक्यदौर्बल्यस्य सिद्धान्तीकृतत्वेन तद्बलवत्त्वाभावस्यैवमापादयितुमशक्य-त्वात् 'श्रुतिप्राप्तो हि सम्बन्धो बलवान् वाक्यलक्षणात्' इति पूर्वोदाहृतवाक्याननु-गुणत्वाच्चेति।

अस्या द्वितीये पादे—'अनुषज्यते' 'अनुपद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तौ—'व्यक्त्यर्थमनूद्यमानमनुषज्यते' इति व्याख्यादर्शनात्। अस्मिन् पाठेऽर्थसंगतेः। अन्यपाठेऽर्थासंगतेश्च।

अस्या एव तृतीये पादे—'श्रुतिरेवानुषङ्गे सा' 'श्रुतिरेवानुषङ्गेण' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। प्रथमे पादे यत्पदपाठेनात्र तत्पदपाठस्यौचित्यात्।

अत्र पुण्यराजीये–'श्वेतगुणयुक्तस्यालम्भनम्' इति-'श्वेतगुणयुक्तस्यालम्भन' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'श्रौतमेव' इत्यग्रेतनेन संबन्धस्येष्टस्य संभवात्। द्वितीये समस्तपाठे तु न तस्य संभव इति स हेयः।

**'अप्राप्तो यस्तु शुक्लादिः' इति ॥ ७४।**

अत्र—'यश्च शुक्लादिः' इति क्वचित्पाठ उपलभ्यते। तत्र तुशब्दघटितः पाठ एव युक्तः। पूर्ववैलक्षण्यरूपार्थावबोधकत्वात्। अत एवाग्रे 'श्रुतिधर्मविलक्षणः' इत्युक्तम्। यद्यपि अत्र चकारोऽपि त्वर्थको भविष्यति इति वक्तुं शक्यते, तथापि चकारस्य नानार्थकत्वेन 'संदिग्धार्थकत्वादत्रोपादानानौचित्यम्।

अस्या एव कारिकायाश्चतुर्थे पादे—'श्रुतिधर्मविलक्षणः' इति-'श्रुतिधर्मे विलक्षणः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। पुण्यराजीये—'श्रुतिधर्मविलक्षणः साक्षात्संबन्धविलक्षणः' इति व्याख्यादर्शनात्, पाठान्तरेऽर्थासंगतेश्च।

अस्या एव कारिकायाः पुण्यराजीये—'द्वितीयाश्रुत्या साक्षात्प्रतिपादितः' इति 'द्वितीयया श्रुत्या साक्षात्प्रतिपादितः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अन्त्यपाठे हि संख्यायां पूरण्यां प्रत्ययप्रसंगात्। प्रकृते तु द्वितीयाविभक्तिरेवेष्यते इति।

अस्या एव कारिकायाः पुण्यराजीये-'प्रतिनिधिसमाश्रयणेन न श्रुतिबाधः' 'प्रतिनिधिसमाश्रयणे न श्रुतिबाधः' 'प्रतिनिधिसमाश्रयणे नास्ति श्रुतिबाधः' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। तृतीया श्रुत्या साक्षात्करणत्वस्याभिधानात्। सत्सप्तम्यां तु अन्वयद्वारा तस्य सूचनात्। तृतीयपाठस्तु अनिष्टार्थप्रसक्त्या हेयः।

अस्या एव कारिकायाः पुण्यराजीये—'संबन्धो बलवान् स्यात्' इति-'बलवान् न स्यात्' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। वाक्यीयसंबन्धस्य हि श्रुतितो बलवत्त्वाभावे न तस्य बलवत्त्वमनिष्टत्वेनापाद्यं स्यान्न तु बलवत्त्वाभावः, तत्र सत्त्वादिष्टत्वाच्चेति।

अत्रैवाग्रे पुण्यराजीये—क्रियासामर्थ्यप्रापितं श्रौतमेव' इति-'क्रियासामर्थ्यप्रापिता श्रौतमेव' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः।

अत्रैव पुण्यराजीये–'व्यक्त्यर्थं स्फुटीकरणाय' इति 'व्यक्तार्थं स्फुटीकरणाय' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। व्यक्त्यर्थम् इत्यस्य व्याख्यानं हि स्फुटीकरणाय इति। अन्त्यपाठस्तु न युक्तः। व्यक्तार्थमित्यस्य प्रकृतवाक्यार्थेऽन्वयासंभवात्।

अत्रैव पुण्यराजीये–'श्वेतादियत्संबध्यते' इति-'श्वेतादिना संबध्यते' इति च पाठद्वयमुपलभ्यते । तत्राद्यपाठ एव युक्तः । अग्रेतनेन-'ततः किमित्याह' इति तत्पदेन परामर्शसंभवात् । द्वितीयपाठे तु यत्पदेन तदर्थस्य प्राक्निर्देशोऽपेक्षणीयः । स च नास्ति इति द्वितीयपाठो हेयः ।

**'अभिन्नमेव वाक्यं तु' इति ॥ ७५ ।**

अस्यास्तृतीये पादे—'तत्सर्वं श्रुतिभूतत्वात्' इति-'तत्सर्वश्रुतिभूतत्वात्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयस्तु न युक्तः, तदभावात् ।

अस्या एव कारिकायाः पुण्यराजीये—'कृतायं प्रविभागः' इति—'कृतार्थप्रविभागः' इति च पाठद्वयमुपलभ्यते । तत्राद्यपाठ एव युक्तः, इदंपदेन शब्दप्रविभागार्थप्रविभागयोरुभयोरपि सामान्येन संग्रहसंभवात् । द्वितीयपाठे तु तदसंभव इति स हेयः ।

अत्रैव पुण्यराजीये—'सर्वस्य श्रौतत्वात्' इति -'सर्वत्र श्रौतत्वात्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । यथाश्रुतनिर्दिष्टेनार्थेन संबन्धसंभवात् । सर्वत्रेति पाठे तु अधिकरणकारकस्य कर्तृकर्मद्वारा क्रियायामेवान्वयस्यौचित्येन अभिप्रेतान्वयासिद्धेः ।

अत्रैव पुण्यराजीये—'न छागाभावे च श्वेतगुणयुक्तस्यान्यस्य स्यात्' इति पाठः 'न श्वेतगुणाभावे छागालम्भनम्' इत्यस्याग्रे आवश्यकः, स तु क्वचिन्न दृश्यते ।

**'वाक्यानां समुदायश्च' इति ॥ ७६ ।**

अत्र—'वाक्यानां समुदायाच्च' इति पाठः क्वचिद् दृश्यते । स तु हेयः, अग्रेतनैः प्रथमान्तपदैरनन्वयात् । अस्या एव कारिकाया द्वितीयपादे—'य एकार्थ-प्रसिद्धये' इति 'य एकार्थः प्रसिद्धये' इति च पाठद्वयमुपलभ्यते । तत्राद्यपाठ एव युक्तः । 'एकस्य मुख्यार्थस्य प्रसिद्धये प्रतीतये' इति पुण्यराजीये व्याख्यानदर्शनात् ।

अस्या एव पुण्यराजीये—'प्रतिपादनं वाऽसंभवीति' इति 'प्रतिपादनं वा न संभवतीति' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः, समासे एकार्थीभावेन विशिष्टैकार्थोपस्थितौ लाघवात् । द्वितीयपाठे तु पृथक्पृथगुपस्थितिरिति गौरवं-स्पष्टमेव ।

**'प्रासङ्गिकमिदं कार्यम्' इति ॥ ७७ ।**

अस्या द्वितीयपादे—'तन्त्रेण लभ्यते' इति—'तर्केण लभ्यते' इति च पाठद्वय-मुपलभ्यते । तत्राद्यपाठ एव युक्तः ।

अत्रैव पुण्यराजीये तन्त्रस्य स्वरूपापवादयोर्निदेशावसरे—'तस्य इदं तन्त्रेण लभ्यते इति स्वरूपम्' इति स्पष्टमुक्तत्वात् ।

अस्या एव कारिकायाश्चतुर्थचरणे--'बाधसमुच्चयौ' 'बाधासमुच्चये' बाधा समुच्चयौ' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः, साधुत्वात्। द्वितीये लिङ्गाशुद्धिर्द्विवचनान्तत्वे, सप्तम्यन्तत्वेऽर्थासंगतिः। तृतीयपाठोऽपि न युक्तः। अत्रैव बाधस्य स्वरूपापवादयोर्निदेशप्रसङ्गे पुण्यराजीये--'तुल्यबलानामविरोधात् समुच्चयो बाधस्यापवादः' इति--'विकल्पोऽपि बाधस्यापवादत्वेन दर्शितः' इति-'बाधसमुच्चयौ इति बाधस्य स्वरूपमपवादश्चोक्तः' इति वाक्येषु बाधशब्दस्यैव प्रयोगदर्शनात्।

**'ऊहोऽस्मिन् विषये न्याय्यः' इति** ॥ ७८।

अत्र 'न्याय्यः' इत्यस्य स्थाने 'न्यायात्' इति क्वचित्पाठः। क्वचित्तु 'न्याय-संबन्ध' इति समस्तपाठः। तत्राद्यपाठ एव युक्तः, संभवति सामानाधिकरण्ये वैयधि-करण्यमन्याय्यम् इति न्यायात्। किञ्च न्यायात् इति पाठे हेतौ पञ्चमी अनपेतपदाध्या-हारेण वेति संदेहे बिलम्बितोऽर्थबोधः। अनपेतपदाध्याहारे गौरवञ्च। तृतीयपादे तु अर्थासंगतिः स्पष्टैव।

**'अर्थित्वमत्र सामर्थ्यम्' इति** ॥ ७९।

अस्या द्वितीये पादे--'अस्मिन्नर्थो न भिद्यते' 'अस्मिन्नर्थिनि भिद्यते' 'अस्मिन्नर्थी न भिद्यते' इति 'अस्मिन्नर्थो न विद्यते' इति पाठचतुष्टयं दृश्यते। तत्राद्यपाठ एव युक्तः। अत्रैव पुण्यराजीये--'स्थिरलक्षणो यथा--राजपुरुष इत्यत्र राजसंबन्धित्वं पुरुषस्य, तद्धि न व्यभिचरति' इतिव्याख्यादर्शनेन--आद्यपाठस्यैव परिपोषसंभवात्। इतरे तु त्रयोऽर्थासंगत्यैव निरस्ताः।

अस्या एव तृतीये पादे--'शास्त्रात् प्राप्ताधिकारोऽयम्' इति--'शास्त्रात् प्राप्ताधिकारार्थो' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः, तथा पाठस्यात्रैव पुण्यराजीये कुलकव्याख्याने स्फुटमुपलब्धेश्च।

**'इयं श्रुत्या क्रमप्राप्तिः' इति** ॥ ८०।

अस्या द्वितीये पादे--'इयमुच्चारणादिभिः'--'इयमुच्चारणादिति' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, एतद्व्याख्याने पुण्यराजीये--'श्रुत्यादिभेदेनायं क्रमोऽनेकप्रकारः' इति व्याख्यादर्शनेनादिपदपाठस्यैवौचित्यात्।

**'इदं पराङ्गैः सम्बद्धम्' इति** ॥ ८१।

अत्र 'इदं पराङ्गैः-संबन्धम्' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः, भावघञन्तत्वेऽर्थासंगतेः। कर्मघञन्तत्वेनार्थसंभवेऽपि संदिग्धार्थकत्वाद्। विना बाहुल-कत्वाभ्युपगमं कर्मणि घञो दुर्लभत्वाच्च। सत्यां गतौ तदङ्गीकारेऽनौचित्याच्च।

अस्या एव तृतीये पादे--इति। प्रयोजकमिदं त्वेषाम्' 'प्रयोजकमिदं तेषाम्'

इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। अस्या एव कारिकाया द्वितीयपादे पठितानामङ्गानां संनिहितानां प्रत्यक्षाणाञ्च इदंशब्देनैव निर्देशस्यौचित्यात्। तुशब्दोऽपि पूर्ववैलक्षण्यावद्योतनाय युज्यत एव।

वस्तुतस्तु पुण्यराजीये 'प्रयोजकमिदं तेषामत्रेदं नान्तरीयकम्' इत्येव पाठः समुद्धृतः! स चोच्चारणे लाघवं सौकर्यञ्चापेक्ष्य युक्तः। किञ्च प्रागनुभूतानामङ्गानां तत्पदेन निर्देश उचितः। इदं पदस्य तु अनुभूयमाननिर्देशकत्वेन तेन तन्निर्देशो नोचितः।

## 'इदं प्रधानं शेषोऽयम्' इति ॥ ८२।

अस्या द्वितीये पादे—'विनियोगक्रमस्त्वयम्' 'इति योगक्रमस्त्वयम्' इति पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। 'अस्यैव शेषशेषिभावस्येति कर्तव्यतां प्रदर्शयितुमाह' 'विनियोगक्रमस्त्वयम्' इति पुण्यराजीयेऽवतरणदर्शनात्, अर्थसङ्गतेश्च।

## 'शक्तिव्यापारभेदादस्मिन' इति॥ ८३।

भेदस्तत्राविवक्षितः' इत्यस्य स्थाने 'भेदस्त्वत्राविवक्षित' इति पाठः क्वचिदस्ति। अयमेव च पाठो युक्तः। सर्वेषां प्रासङ्गिकादीनां न्यायानामत्रेदमैव निर्देशेनात्रापि इदमैव निर्देशस्यौचित्यात्। एतासां कारिकाणामशीतिमारभ्य पञ्चाशीतिपर्यन्तानां पुण्यराजीये—'को धर्मः, किं लक्षणश्चेत्याद्याशङ्कानिरामार्थं चोदनालक्षण इत्युक्त्वा--प्रथमेनाध्यायेन चोदनालक्षणे निर्णीते चोदनैव प्रमाणमित्युक्तम्' इति वाक्ये—इत्याद्याशङ्कानिरासार्थमित्यस्य स्थाने—'इत्याद्याशङ्क्य निरासार्थम्' इति पाठः क्वचिद् दृश्यते, स तु न युक्तः। निरासकर्मणः साक्षादलाभेन सन्निधानादिना, लाभे क्लेशात्। सन्निधानादेः श्रुत्यपेक्षया दुर्बलत्वाच्च। यद्यप्यत्र वाक्ये—'चोदनालक्षण इत्युक्त्वा प्रथमेनाध्यायेन' इत्येतत्पदजातं क्वचिन्नोपलभ्यते, तथापि तदुपादेयैव। तदनुपादाने धर्मलक्षणाशङ्काया अनिरासात्। 'चोदनालक्षणे निर्णीते' इत्यत्रापेक्षितस्य निर्णयकरणस्याप्रतीतेश्चेति।

एतत्कारिका संघव्याख्यानावसरेऽत्रैव पुण्यराजीये—'क्रमोऽत्र बलवानिति तस्यैव बलाबलचिन्ता' इति पाठ एव युक्तः। यद्यपि 'क्रमोऽयमत्र' इत्यस्य स्थाने—'स्वरूपक्रमार्थमत्र' इति पाठः क्वचिदुपलभ्यते तथापि स हेय एव। कारिकायां तस्य पाठस्यानुक्तेः, अर्थासङ्गतेश्चेति। यद्यपि च—'तस्यैव बलाबलचिन्ता' इति पाठः क्वचिन्नोपलभ्यते तथापि स उपादेय एव, तदभावे प्रकृतवाक्यासंगतेः।

अत्रैवाग्रे पुण्यराजीये—'अत्र बाधसमुच्चयाविति बाधस्य स्वरूपम्' इति वाक्ये—'बाधसमुच्चयौ' इति पाठ एव युक्तः कारिकायामपि। अस्मिन् वाक्य एव 'बाधस्य स्वरूपम्' इत्युक्तेः।

अत्रैवाग्रे पुण्यराजीये—'द्वे लक्षणे समुद्देशादूह्ये' इति पाठ एव युक्तः। अन्यथा कस्मात् समुद्देशादित्याकाङ्क्षाया अप्रशमात्। यद्वा द्वे लक्षणे लक्षणसमुद्देशादूह्ये इति पाठोऽवगन्तव्य इति।

अत्रैवाग्रे पुण्यराजीये—'लाघवाच्च न प्रवर्तयन्ति' इत्यस्याग्रे 'अपि त्वेकेनैव यत्नेन तदनुतिष्ठन्ति। वेदेऽपि यथा—अग्नीषोमीयस्य वपया प्रचर्याऽग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपन्ति' इत्यधिकः पाठः समुपलभ्यते क्वचित्। अयं च पाठ आवश्यकः। अग्रिमवाक्येनापेक्षणात्।

अत्रैवाग्रे पुण्यराजीये—'ये प्रयाजादयः ते पूर्वम्' इत्यत्र 'तत्पूर्वम्' इति पाठः क्वचिदुपलभ्यते, स न युक्तः। पूर्वं 'ये' इति यत्पदस्य प्रथमाबहुवचनान्तस्य श्रवणादिति।

अत्रैवाग्रे पुण्यराजीये—'आवृत्तौ तावत्तन्त्रप्रतिपक्षभूतायाम्' इत्यत्र 'तत्र प्रसङ्गभूतायाम्' इति पाठः क्वचिद् दृश्यते, स तु न युक्तः, अर्थासङ्गतेः।

अत्रैवाग्रे पुण्यराजीये—'न चेयत्ता प्रकाराणामस्त्यतस्तेनापि सा न तत्र दर्शिता' इति पाठः श्रीगङ्गाधरशास्त्रिभिः कल्पितः शोभनो भाति।

अत्रैवाग्रे पुण्यराजीये—'समर्थोऽङ्गारार्थो दृष्टः' इत्यत्र—अङ्गारार्थं इत्यस्य स्थाने गीतार्थं इति पाठो दृश्यमानोऽसङ्गतः, अर्थासङ्गतेः।

अत्रैवाग्रे पुण्यराजीये—प्रथमान्त ऊह्यते इत्यत्र प्रथमान्तमिति नपुंसकनिर्देशः समुचितः। देवदत्तपदमिति विशेष्यानुरोधात्। यद्वा देवदत्तशब्द इति विशेष्यानुरोधात् प्रथमान्त इति पुंलिङ्गनिर्देशोऽपि साधुः।

अत्रैवाग्रे पुण्यराजीये—'यावानर्थो ब्राह्मणशब्दं न व्यभिचरति' इत्यत्र 'ब्राह्मण शब्देन' इति पाठ उपलभ्यमानो न युक्तः। ब्राह्मणशब्दाव्यभिचारिण्येवार्थे सम्बद्धानां कार्याणां क्षत्रियेऽतिदेशस्योचितत्वात्।

अत्रैवाग्रे पुण्यराजीये—'यथा ब्राह्मणवदस्मिन् ब्राह्मणे वर्तितव्यम्' इत्यत्र श्रूयमाणो यथा शब्दः क्वचित्पुस्तके न दृश्यते, किन्तु स उपादेय एव। पूर्ववाक्यार्थे दृष्टान्तप्रदर्शनपरत्वादुत्तरवाक्यस्येति।

अत्रैवाग्रे पुण्यराजीये—'अभिनयनदिदृक्षायाम्' इत्यस्य स्थाने—'अभिनये दिदृक्षायाम्' इति पाठः क्वचिद् दृश्यते। तत्र 'अभिनयदिदृक्षायाम्' इति पाठो युक्तः। अभिनयपदस्य वाक्यार्थप्रदर्शने योगरूढत्वात्, अभिनयनपदस्य च योगार्थमात्रपरत्वात् यौगाद् रूढेर्बलीयस्त्वादिति।

अत्रैवाग्रे पुण्यराजीये—'अग्निहोत्रं जुहुयात् स्वर्गकामो ब्राह्मण इत्यत्र' अस्मिन् वाक्ये श्रूयमाणं ब्राह्मणपदं क्वचिन्न दृश्यते, अत्र तस्यादर्शनमेव युक्तम्—त्रैवर्णिकस्याग्निहोत्रहोमेऽधिकारेण ब्राह्मणे तन्नियमनस्यानौचित्यात्।

अत्रैवाग्रे पुण्यराजीये—'मुख्यो यथा सास्नादिमान् गौरिति' इति वाक्ये क्वचित्पुस्तके—'मुख्ये यथा' इति सप्तम्यन्तपाठ उपलभ्यते, स न युक्तः। अर्थोऽष्टादशधा इति प्रथमान्तेनैवोपक्रमात्।

अत्रैवाग्रे पुण्यराजीये—'तत्र शास्त्रस्य प्लुतद्विर्वचनादिविधायकत्वेन' इति वाक्ये—'तत्र' इति पदं क्वचित्पुस्तके न दृश्यते, किन्तु तदावश्यकम्। तेन विना प्लुतादिविषयनिर्देशासंभवात्।

अत्रैवाग्रे पुण्यराजीये—'येन क्रमेण ब्राह्मणाः समानाः प्रविशन्ति' इति वाक्ये क्वचित्पुस्तके—'येनैव' इति पाठो दृश्यते, स तु न युक्तः, एवकारस्यानर्थक्यात्।

अत्रैवाग्रे पुण्यराजीये—'सप्तदश प्राजापत्यान् पशूनालभेत' इत्यत्र 'पशून्' इत्यस्याग्रे 'तूपरान्' इत्यधिकः पाठः क्वचित्पुस्तक उपलभ्यते। स तु युक्त एव। ४५९ कारिकाव्याख्याने पुण्यराजीये 'तथैव शब्दानामपि' इत्यत्र वाक्ये 'तयैव' इत्यस्य स्थाने 'तथैव' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। इतः पूर्वस्मिन् वाक्ये 'ययैव' इति तृतीयान्तस्य यत्पदस्य स्त्रीलिङ्गस्योपादानात्।

अत्रैवाग्रे पुण्यराजीये—'आराच्च तदेव' इत्यस्य स्थाने क्वचित् चकाररहितः पाठो दृश्यते, तत्र चकारयुक्तः पाठः शोभनः। त्वर्थकस्य चकारस्य पूर्वस्माद् वैलक्षण्यप्रदर्शनार्थत्वेनार्थवत्त्वात्।

अत्रैवाग्रे पुण्यराजीये—'प्रयाजादिकं त्वारात्' इत्यस्य स्थाने 'प्रयाजादिकं चाराद्' इति क्वचित् पाठोऽस्ति, स तु न युक्तः। चकारस्यानेकार्थकत्वेन त्वर्थे संदेहसंभवात्।

अत्रैवाग्रे पुण्यराजीये—'नह्यन्यथाऽनाश्रितापादानशक्तिधनुषः करणत्वं संभवति' इत्यत्र 'धनुषः' इत्यस्य स्थाने—'धनुषा' इति पाठ उपलभ्यते, स न शोभनः। करणत्वपदार्थान्वयिन्यास्तृतीयाया अर्थासङ्गतेः।

अत्रैवाग्रे पुण्यराजीये—'यथाऽऽख्यातेषु धातूपात्तायाः क्रियायाः प्रत्ययवाच्यकर्तृभेदे सति सम्बन्धात् क्रियाया अपि भेदः प्रतीयते' इत्यत्र वाक्ये क्वचित्पुस्तके 'सम्बन्धाद्' इति पाठो नास्ति। किन्तु स पाठ आवश्यकः। भिन्नकर्तृसम्बन्धादित्यर्थकस्य सम्बन्धादित्यस्याभावे हि क्रियाभेदे हेतुर्न प्रतीयेत इति।

अत्रैवाग्रे पुण्यराजीये—'यजते, 'ददाति' 'जुहोति' इत्यादौ' इति वाक्ये यजते इत्यस्य स्थाने 'यजति' इति पाठः कुत्रचिदुपलभ्यते, स एव युक्तः। श्रुतिषु यजति इति परस्मैपदप्रयोगस्यैव प्राचुर्येणोपलम्भात्। ददाति जुहोति पदसाहचर्याच्चेति।

एतच्छ्लोकसप्तकरूपकुलकव्याख्यानारम्भे एव पुण्यराजीये—'अथातो धर्मजिज्ञासा इत्युपक्रम्य' इत्यत्र—'इत्युपक्रमात्' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। 'अनन्तरम्' इति पदाध्याहारे गौरवात्।

अत्रैव पुण्यराजीये—'इत्याद्याशङ्कानिरासार्थम्' 'इत्याद्याशङ्क्य निरासार्थम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे—निरासकर्मणः शब्दानुपात्तत्वेन साकाङ्क्षत्वदोषात्।

अत्रैव कुलकव्याख्याने पुण्यराजीये—'बाधासमुच्चयौ' इति 'बाधस्य स्वरूपमपवादश्चोक्तः' इत्यत्र 'बाधसमुच्चयौ' इति पाठ एव युक्तः, उपलभ्यते चासौ। यतोऽत्रापि बाधस्य स्वरूपमित्युच्यते, न तु बाधायाः स्वरूपमिति।

अत्रैवाग्रे पुण्यराजीये—'यो यः कश्चित्तद् व्यवस्थापने न्यायः' इति 'यो यः कश्चिद् व्यवस्थापने न्यायः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तच्छब्दं विना पदपदार्थयोः परामर्शासंभवात्।

अत्रैवाग्रे पुण्यराजीये—'स स कीर्तनीयः' इति—'स कीर्तनीय' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, आम्रेडितेन यच्छब्देनाम्रेडितस्य तच्छब्दस्यापेक्षणात्।

शब्दानुशासने प्रसङ्गस्योदाहरणावसरे पुण्यराजीये 'शक्यो ह्यस्य स्वरूपनिर्देशात् पृथक्' इति-'शक्यो ह्यस्य स्वरूपस्य निर्देशात् पृथक्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, तस्मिन् पाठे हि अस्येति कारकषष्ठी भवति। स्वरूपनिर्देशरूपायां विशिष्टक्रियायां कर्मत्वात्। अन्त्यपाठे तु वैयधिकरण्यमुपपदविभक्तिश्च भवति इति।

अत्रैव पुण्यराजीये—'एकेनैव प्रयत्नेनोभयमत्रावर्तते' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, उभयावृत्तेरत्राभावात्।

अत्रैव तन्त्रोदाहरणावसरे पुण्यराजीये—'शालायामेकं प्रदीपं व्याकरणाध्यायिनः प्रयोजयन्ति' इति 'शालायामेकप्रदीपं व्याकरणाध्यायिनः प्रयोजयन्ति' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः, तथाहि—अत्र प्रदीपमुद्दिश्यैकत्वं विधीयते। न च समासे तस्य संभवः, एकार्थीभावेन विशिष्टार्थोपस्थितेः।

अत्रैवाग्रे पुण्यराजीये—'तत्र तत्र लक्षणेष्वपि तन्त्रलक्षणं प्रभवत्येव' इति 'तत्तल्लक्षणेष्वपि तन्त्रलक्षणं प्रभवत्येव' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अस्मिन् पाठे हि तत्तत्पदार्थानां प्रधानीभूतक्रियान्वयसंभवः, समासे तु प्रधानीभूतप्रभवनक्रियाविशेषणानां लक्षणपदार्थानां विशेषणानि तत्तत् पदार्था इति 'न ह्युपाधेरुपाधिर्भवति विशेषणस्य च विशेषणम्' इति न्यायविरोधः।

अत्रैवाग्रे पुण्यराजीये—'रूपविशेषानुरोधात् तत्तत्प्रदेशेषु तन्त्रेणैव युगपदुभयप्रतिपत्तिरिति' इति-'रूपविशेषानुरोधात् प्रदेशेषु तन्त्रेणैव' इत्यादिकश्च पाठः समुपलभ्यते। तत्राद्यपाठ एव युक्तः। तत्तत्प्रदेशेष्वेव हि तन्त्रेण संख्यापदेन युगपदुभयप्रतिपत्तिर्न तु प्रदेशसामान्ये इति।

अत्रैवाग्रे पुण्यराजीये–'आवृत्तौ तावत्तन्त्रप्रतिपक्षभूतायां निदर्शनम्' इति-'आवृत्तौ तावत्प्रसङ्गप्रतिपक्षभूतायां निदर्शनम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'यथा नैकं वस्त्रमाभरणं वारणभूमिषु भटानामुपयोगाय कल्पते' इत्युत्तर-ग्रन्थे आवृत्तौ तन्त्रप्रतिपक्षत्वस्यैव प्रदर्शनात्। यथा शालायामेकं प्रदीपं व्याकरणा-ध्यायिनः प्रयोजयन्ति तथानैकं वस्त्रमाभरणं वारणभूमिषु भटा उपयुञ्जते इत्येवमावृत्तौ तन्त्रप्रतिपक्षत्वस्य निदर्शनसंभवात्।

प्रसङ्गस्य तु अत्र प्रसङ्ग एव नास्ति कस्यचिदर्थप्रयोजकत्वमन्येषाञ्च तद-प्रयोजकत्वमित्यस्यार्थस्यात्राभावात्। सर्वेषामेव भटानां प्रत्येकं वस्त्राभरणप्रदान-प्रयोजकत्वात् इति। अस्योत्तरग्रन्थे-'यथा एकं वस्त्रमाभरणं वारणभूमिषु भटाना-मुपयोगाय कल्पते' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। प्रागुक्तरीत्याऽर्था-संगतेः। किन्तु 'नैकं वस्त्रमाभरणं वा' इत्यादिको नञ्सहित एव पाठो युक्त इति।

अत्रैवाग्रे पुण्यराजीये–'सप्तदशत्वमावृत्तिसंख्यानात् प्रकल्प्यते' इति प्रकल्पिते इति च पाठः क्वचिद् दृश्यते। तत्रान्त्यपाठ एव युक्तः। सप्तदशत्वस्य कर्तृत्वे संभवति कर्मत्वकल्पनाया अश्रुतकर्तृकल्पनासापेक्षत्वेन युक्तत्वात्।

अत्रैवाग्रे पुण्यराजीये–'भेदस्य तन्त्रप्रतियोगिनो निदर्शनम्' इति-'भेदस्य तन्त्र-प्रतियोगिनोर्निदर्शनम्' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठो न युक्तः। विशेषस्य भेदस्यैकवचनत्वात्, विशेषणस्य द्विवचनत्वायोगात् इति।

अत्रैवाग्रे पुण्यराजीये 'दृष्टादृष्टार्थमप्राप्त्यनुमानमात्रम्' इति–'दृष्टादृष्टार्थ-प्रात्यनुमानमात्रम्' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठोऽयुक्तः, अर्थासंगतेः।

अत्रैवाग्रे पुण्यराजीये—'तक्रदानेन विशिष्टे विषये बाध्यते' इति–'तक्रदानेन विशिष्टविषये बाध्यते' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। पदार्थैकदेशे विशिष्टपदार्थेऽन्वयदोषदर्शनेन बाध्यते इत्यत्राभीष्टान्वयलाभसंभवात्। आद्यपाठे तु प्रत्यासत्त्या विशिष्टपदार्थे एव अन्वयः स्यात्, न तु विप्रकृष्टे बाध्यते इत्यत्रेति अर्थासंगतिः।

अत्रैवाग्रे पुण्यराजीये—'देवदत्तं भोजय लवणेन सर्पिषा शाकेन च' इति चकारसहितः क्वचित्पाठः। क्वचित्तु चकाररहितः। तत्र चकारसहित एव पाठो युक्तः। बहूनां समवाये समुच्चयस्यौचित्यात्।

अत्रैवाग्रे पुण्यराजीये—'लोकेऽपि। किञ्चिदस्य दीयतां न दीयताम् इति' इत्यत्र 'लोकेऽपि' इत्यस्य स्थाने 'लौकिकेऽपि' इति पाठः क्वचिद् दृश्यते। स चायुक्तः। पूर्वम्—'यथा वेदे' इति पाठदर्शनेन। अत्र 'लोकेऽपि' इति पाठस्यैवौचित्यात्।

अत्रैवाग्रे पुण्यराजीये—'नासिकादिभ्यो विभाषायाः सह नञ्-विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन' इत्यत्र—'विभाषायाः' इत्यस्य स्थाने 'विभाषया' इति—

'विभाषा' इति च पाठद्वयं दृश्यते तदुभयमप्ययुक्तम्, अर्थासंगतेः। आद्यपाठस्यैव भाष्ये दर्शनाच्चेति।

अत्रैव पुण्यराजीये—'अयं विधिः सप्रतिषेध' इत्यत्र—'अयं हि विधिः सप्रतिषेध' इति पाठः क्वचिद् दृश्यते। एष एव च युक्तः। तथैव भाष्ये पाठात्।

अत्रैवाग्रे पुण्यराजीये—'तत्र विकारे सूर्यायेत्यूहः' इति—'तत्र विकारे सौर्या-येत्यूहः' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठो न युक्तः। प्रकृत्यूहस्यैव प्रदर्शनीयत्वात्।

अत्रैवाग्रे पुण्यराजीये—'प्रथमान्त ऊह्यते' इति—'प्रथमान्तमूह्यते' इति च पाठद्वयमुपलभ्यते। तत्रान्त्यपाठ एव युक्तः। विशेष्यासंनिधाने सामान्ये नपुंसकस्यैवौ-चित्यात्।

अत्रैवाग्रे पुण्यराजीये—'यावानर्थो ब्राह्मणशब्दं न व्यभिचरति' इति—'यावानर्थो ब्राह्मशब्देन व्यभिचरति' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। कर्मकारक-रकस्य साक्षात् क्रियायामन्वयसंभवात्। 'ब्राह्मणशब्देन' इत्यत्र 'सप्तम्यन्तस्य छेदे तु अधिकरणकारकस्य कर्तृकर्मान्यतरद्वारा क्रियायामन्वयात् परम्परया प्रधानान्वयेन अयुक्तत्वम्। तृतीयैकवचनान्तत्वे तु कारकविभक्तौ—अर्थासंगतिः। सहयुक्ततृतीयान्तत्वे उपपदविभक्तित्वेन अनौचित्यम्।

अत्रैवाग्रे पुण्यराजीये—'ब्राह्मणवदस्मिन् ब्राह्मणे वर्तितव्यम्' इति—'यथा ब्राह्मणवदस्मिन् ब्राह्मणे वर्तितव्यम्' इति द्विधा पाठ उपलभ्यते। तत्र यथाशब्दघटितः पाठः साधुः। अस्य वाक्यस्योदाहरणरूपत्वात्।

अत्रैवाग्रे पुण्यराजीये समुदाहृतश्लोके—'सामान्यमात्रं शब्दार्थः' इति—'सामान्यमात्रं शब्दार्थाः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। कस्यचिदपि शब्दस्य सामान्यमात्रमर्थः। यथा घटशब्दस्य घटसामान्यमर्थः, विशेषास्तु सच्छिद्र-त्वाच्छिद्रत्वशुक्लत्वनीलत्वादयो घटपदस्य व्यभिचारिण इति अबाधितार्थसत्त्वे प्रथमोपस्थितप्रथमैकवचनान्तपाठपरित्यागे कारणाभावात्।

अत्रैवाग्रे पुण्यराजीये—'आग्नेयवत्सौर्ये' इतीदं यद्यपि पूर्वं विलिख्य पश्चाद्रेख-योत्सादितम्, तथापि अयं पाठो युक्त इत्येतदेकवाक्यतापन्नाग्रेतनवाक्यदर्शनात् प्रतीयते। तच्च वाक्यम्—'एकदेवताकस्येत्यादि—'इति कर्तव्यतोच्यते' इत्यन्त-मिति। अस्मिन् वाक्ये—'विध्यन्त इति—'विध्यन्तम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विधेरन्तो विध्यन्त इति षष्ठीतत्पुरुषे विध्यन्तशब्दस्य पुंस्त्वात्। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (पा० २।४।२६) इति सूत्रात्। अन्त-शब्दस्य चात्र प्रकारोऽर्थः। विधेर्विधेयस्य कर्तव्यस्यान्तः प्रकारो विध्यन्तः। इति-कर्तव्यतापदस्यापि कर्तव्यस्येति प्रकारः इतिकर्तव्यं तदेव इतिकर्तव्यता देवादित्वात् स्वार्थे तल् इति व्युत्पादनेनायमेवार्थः—कर्तव्यस्य प्रकार इति।

अत्रैवाग्रे पुण्यराजीये—'प्रयोगस्थञ्च स इतव्यशब्दं प्रतिपादयति' इति—'प्रयोगस्थञ्च शयितव्यशब्दं प्रतिपादयति' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अन्त्यपाठस्तु न युक्तः। नहि अप्रयुक्तः—इतव्यशब्दः प्रयोगस्थं शयितव्यशब्दं प्रतिपादयतीति।

अत्रैवाग्रे पुण्यराजीये—'तत्र वस्तुमात्रं बाह्योऽर्थ' इति—'तत्र वस्तुमात्रं बाह्यार्थ' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। यद्यपि समासे एकार्थीभावेन पदार्थोपस्थितिलाघवं तथापि तत्र विभक्तितदर्थसंदेहाद् अभीष्टार्थस्य विलम्बेनोपस्थितौ गौरवम्। किञ्च—वस्तुमात्ररूपमर्थमुद्दिश्यात्र बाह्यत्वं विधीयते। तच्च बधितं समासे, तत्रैकार्थीभावेन द्विधोपस्थित्यभावेन तदसंभवात् इति।

अत्रैवाग्रे पुण्यराजीये–'आवापोद्धारिकः' आपोद्धारिकः इति पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। अखण्डाद् वाक्यात् प्रकृतिप्रत्ययादिकल्पनया तदर्थापोद्धारस्यैव शास्त्रे कृतत्वात्। आवापस्तु शास्त्रे न क्रियत एव। अत्रनग्रेऽपि पुण्यराजीये—'आपोद्धारिकः' इति पाठ एव युक्तः। तत्र—'एवापोद्धारिकः' इति पाठोऽपि क्वचिद् दृश्यते। सोऽपि च युक्त एवेति।

अत्रैवाग्रे पुण्यराजीये 'श्रुत्यादिभेदेनायं क्रमोऽनेकप्रकारः' इति 'श्रुत्यादिभेदेनायं क्रमो नैकप्रकार' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—अस्मिन् पाठेऽनेकप्रकारत्वस्य क्रमे विधिः। द्वितीयपाठे तु क्रमे एक प्रकारत्वस्य निषेधोऽनेकं प्रकारत्वं तत्रार्थादायाति। अनेकप्रकारत्वमेव चात्र विधित्सितम्। बहूनां क्रमाणामुल्लेखात्। एवञ्च विधेयस्य साक्षान्निर्देशे एवौचित्यमिति।

किञ्च निषेधाविधानं द्विधा–किञ्चित्स्वार्थपर्यवसायि, किञ्चिच्च विधिपर्यवसायि। तत्राद्यं यथा 'न ब्राह्मणं हन्यात्' 'न सुरां पिबेत्' इत्यादि। ब्रह्महत्यासुरापानादौ प्रत्यवायश्रवणात्। द्वितीयं तु 'अनृतौ नोपेयात्' 'परदारान्नोपगच्छेत्' इति—अस्य च—'ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा।' इति विधावेव तात्पर्यम्। इति एतदेव उच्यते। एवञ्च यत्र निषेधस्य विधिपर्यवसायित्वं तत्र विध्यभिधानमेवोचितमिति।

अत्रैवाग्रे पुण्यराजीये—'दुहिना यः क्रमेण संवन्धः' इति—'दुहिना क्रमेण संबन्धः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे–'सोऽर्थसामर्थ्यादुपजायते' इति तच्छब्दपाठस्य यच्छब्दपाठसापेक्षत्वात् इति।

अत्रैवाग्रे पुण्यराजीये—'इन्दुस्वर्णेणमातङ्ग' इत्यस्य स्थाने 'पद्मेन्दुभृङ्गमातङ्ग' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, प्रसिद्धिव्यतिक्रमात्। तथाहि—वक्त्रेण सदृशयोः पद्मचन्द्रयोर्जयः संभाव्यते, कान्त्या तु स्वर्णस्यैव जयो न तु चन्द्रस्य, काञ्चनकान्तेरेव स्त्रीकान्त्युपमानत्वेन प्रसिद्धेः। एवमीक्षणोपमानत्वं मृगस्यैवेक्षणयोर्न तु मृगाणामिति प्रसिद्धिव्यतिक्रमः प्रसिद्ध एव।

अत्रैव पद्ये—"स्वरकेशैस्त्वया जिताः" इत्यस्य स्थाने—'वाणीबालैस्त्वया-जिताः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। स्त्रीवाणीमयूरवाण्योः स्वरप्रयुक्त-स्यैव सादृश्यस्य प्रसिद्धत्वात्। वाणीस्वरयोर्भेदाच्च। वाणी हि स्वरस्याधारः। केश-पदस्य स्थाने बालपदप्रयोगस्तु शिश्वाद्यनेकार्थत्वेन संदिग्धार्थकत्वाद् हेयः।

अत्रैवाग्रे पुण्यराजीये—'कुत्रचिद् याज्ञे कर्मणि' इत्यस्य स्थाने 'कुत्रचिज्ज्ञाते कर्मणि' इति पाठः क्वचिदुपलभ्यते। स तु प्रामादिकः, अर्थासंगतेः।

अत्रैवाग्रे पुण्यराजीये—'येनैव क्रमेण ब्राह्मणा' इति 'येन क्रमेण ब्राह्मणा' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। अग्रे 'तेनैव क्रमेण' इति पाठदर्शनात्। यत्तदोरैकार्थस्यैवोचितत्वात्।

अत्रैवाग्रे पुण्यराजीये—'पशूनालभेत' इति, 'पशून् तूपरानालभेत' इति च पाठद्वयं दृश्यते। तत्राधिकार्थप्रतिपत्त्या द्वितीयपाठ एव युक्तः।

अत्रैवाग्रे पुण्यराजीये—'स्त्रीप्रत्यय उत्पद्यते' इति, 'प्रत्यय उत्पद्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। असंदेहार्थं प्रत्ययविशेषप्रतिपत्तेरौचित्यात्।

अत्रैवाग्रे पुण्यराजीये—उद्धृते भाष्यवाक्ये—'पूर्वापराभावात्' इति। 'पूर्वा-पराभावात्' इति 'एकवर्णवर्तित्वात्' इति 'एकैकवर्णवर्तित्वात्' इति च पाठा उपल-भ्यन्ते। तत्र प्रथमे पाठद्वये द्वितीयपाठ एव युक्तः। 'बुद्धौ कुर्यात् पौर्वापर्यम्' इत्यत्रैव भाष्यप्रयोगात्। 'क्रियानामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्' इत्यत्र भाष्यप्रयोगाच्चैतादृशस्थले पूर्वापरशब्दप्रयोगस्यैवौचित्यात्। द्वितीयस्मिन् पाठद्वयेऽपि द्वितीयपाठ एव युक्तः। तस्मिन्नेव पाठेऽर्थसंगतेः। तथाहि—वाचः स्फोटात्मकस्य शब्दस्य व्यङ्ग्यव्यञ्जकभावसंबन्धेन एकैकवर्णवृत्तित्वाद् इत्यर्थः। स्वीकृतञ्च तत्र भवता हरिणा वाक्ये पदे च प्रत्येकं वर्णानां वाक्यस्फोट-पदस्फोटव्यञ्जकत्वम्, न त्वेककस्येतरवर्णवैयर्थ्यापत्तेः। तदुक्तम्—

प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये।
तेषामत्यन्तभेदेऽपि संकीर्णा इव शक्तयः॥ इति।

( वा० प० १।८८ )

अत्रैव पुण्यराजीये—समुद्धृते भाष्यपद्ये—'कर्ता धीरः' इति, 'वक्ता धीरः' इति, 'तन्वन्नीतिः' इति, 'तद्वन्नीतिः' इति, 'शब्देनार्थान्' इति, 'शब्दान् अर्थान्' इति च पाठद्वयत्रिकं समुपलभ्यते। तत्र प्रथमे पाठद्वये प्रथमपाठ एव युक्तः। वक्ता इति पाठे हि कृत्वा इत्यत्र प्रक्रान्तायाः प्रकृतेः प्रक्रमभङ्गप्रसङ्गो दोषः। कर्ता इति पाठे वक्ता इत्यर्थस्य लाभस्तु—कृभ्वस्तयः क्रियासामान्यवचना—इत्यभियुक्तोक्तिमनुसृत्य समर्थनीयः। द्वितीये पाठद्वयेऽपि तन्वन्नीतिरिति प्रथमः पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु तच्छब्दस्य सर्वनाम्नः स्वीकारेऽर्थासंगतिः। तननं तदिति संपदादित्वाद् भावे क्विपि ततो मतुपि तु रूपासिद्धिः। तसौ मत्वर्थे इति सूत्रेण तान्तस्य भत्वे पद-

त्वबाधाज्जस्त्वासिद्धेः। तृतीये पाठद्वये तु शब्दान् इति द्वितीयपाठ एव युक्तः। वाच्यान्=वचनेन प्रत्याय्यान् शब्दानर्थांश्च बुद्धौ दृष्ट्वा इति योजनायां शब्देनेत्यस्य वैयर्थ्यात्। किञ्च वचनात् पूर्वं शब्दार्थयोरुभयोरपि बुद्धौ दर्शनं प्रयोक्तुरावश्यकमिति शब्दानां बुद्धौ दर्शनस्यासंग्रहश्चात्र पक्षे दोषो बोध्यः। ( ८० )

अत्रैवाग्रे पुण्यराजीये—'फलभेदेऽप्यूह्यमुदाहरणम्' इति, 'फलभेदेऽपीत्थमुदाहरणम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अग्रे 'वेदशास्त्रयोरप्यूह्यम्' इति पाठदर्शनात्। अत्र हि=अपि शब्दस्वारस्येन पूर्वत्रापि अहमित्येव पाठः प्रतिभाति।

अत्रैवाग्रे पुण्यराजीये—'आरात्तदेव पुत्रदारादिषु' इति, 'आराच्च तदेव पुत्रदारादिषु' इति पाठद्वयं दृश्यते। अत्र द्वितीयपाठ एव युक्तः। तथाहि—अत्र पाठे पूर्वस्माद् वैलक्षण्यद्योतनार्थस्त्वर्थकश्चकारः समुचितः प्रतीयते।

अत्रैवाग्रे पुण्यराजीये—'प्रयाजादिकं त्वारादुपकारकम्' इति, 'प्रयाजादिकञ्चारादुपकारकम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे हि चकारस्य समुच्चयेऽर्थे प्रसिद्धस्य त्वर्थे वर्तमानत्वेऽपि संदेहापादकत्वात्।

अत्रैवाग्रे पुण्यराजीये—'धनुषः करणत्वम्' इति, 'धनुषा करणत्वम्' इति च पाठद्वयं दृश्यते। अत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठेऽर्थासंगतिस्तु स्पष्टैव।

अत्रैवाग्रे पुण्यराजीये—'अन्ये त्वायुःप्रभृतिषु' इति, 'अन्ये त्वायुष्यप्रभृतिषु' इति पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तोऽर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः स्पष्टैव। नहि आयुष्यं दानस्य फलम्, किन्तु आयुरिति।

अत्रैवाग्रे पुण्यराजीये—'प्रत्ययवाच्यकर्तृभेदे सति क्रियाया अपि भेदः' इति, 'प्रत्ययवाच्यकर्तृभेदे सति संबन्धात् क्रियाया अपि भेदः' इति, च पाठभेदः प्रतीयते। तत्र द्वितीयपाठ एव युक्तः, क्रियाभेदहेतोः स्फुटमत्र पाठे प्रतीतेः।

अत्रैवाग्रे पुण्यराजीये—'देवदत्तेनेत्यस्मात्तत्प्रतीतिः' इति, देवदत्तेनेत्यस्मात्प्रतीतिः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तदिति सर्वनाम्ना क्रियाभेदस्यावगमात्। द्वितीयपाठे तु निर्विषयायाः प्रतीतेः प्रत्ययः स्यादिति।

अत्रैवाग्रे पुण्यराजीये—'यजते ददाति जुहोति' इति, 'यजति ददाति जुहोति' इति पाठद्वयं दृश्यते। तत्र यजति इति पाठ एव युक्तः। ददाति जुहोतिभ्यां परस्मैपदिभ्यां सह पाठात्।

**'प्रसज्यप्रतिषेधोऽयम्' इति ॥ ८४ ।**

अत्र पुण्यराजीये—'पर्युदासः खलु प्रसज्यप्रतिषेधविपरीतः' इति वाक्ये 'खलु' इत्यस्य स्थाने क्वचित्पुस्तके चकारः श्रूयते। अत्र—खलुशब्दः स्वभावत एव प्रसिद्धि-

मवद्योतयति। चकारस्तु तुकारसमानार्थकः। स च पूर्वस्मिन् वाक्ये सत्येव तद्-वाक्यार्थादेतद्वाक्यार्थे वैलक्षण्यप्रदर्शनाय युक्तो न त्वसति इति।

इतः परम्—'प्रसज्यप्रतिषेधोऽयम्' (८४) इत्यारभ्य 'पदं चेत् स्यादवाचकम्' (८७)। इत्यन्तस्य श्लोकचतुष्टयस्य सहैव व्याख्यानं पुण्यराजीये।

तत्र द्वितीयश्लोके (८५) 'भेदेनाङ्गाङ्गिभावोऽस्य, इति, 'भेदोनाङ्गाङ्गि-भावोऽस्य' इति च पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। एतद्व्याख्यानावसरे पुण्यराजीये तथैव प्रतीकदर्शनात्।

अत्रैव श्लोके द्वितीयपादे—'बहुधेदं विकल्प्यते' 'बहुभेदं विकल्प्यते' इति पाठ-द्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। द्वितीयपाठपरिग्रहे हि नैराकाङ्क्ष्यं न भवति, किं तद् यद् विकल्प्यते इत्याकाङ्क्षाया अनुपरमात्।

अत्रैव तृतीयश्लोके (८६) 'दृष्टाल्लिङ्गाद् भेद' इति, 'दृष्टो लिङ्गाद् भेद' इति पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। एतद्व्याख्यावसरे पुण्यराजीये तथैव प्रतीकदर्शनात्।

अत्रैव श्लोके तृतीयपादे—'अयं शब्दादपोद्धृत्य' इति, 'अयं शब्दैरपोद्धृत्य' इति च पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। एतद्व्याख्यावसरे पुण्यराजीये तथैव प्रतीकदर्शनात्। तथैवार्थसंगतेश्च। शब्दस्य हि अपोद्धारेऽवधित्वमेवोचितम् न तु करणत्वम्।

अत्रैव चतुर्थश्लोकस्य तृतीयपादे (८७)—'सर्वे तेन प्रकल्पेरन्' इति, 'तेन सर्वे प्रकल्प्येरन्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—अत्र पक्षे नञः स्वान्वयिक्रियावाचकपदसंनिधाने पाठ इत्यस्ति आसत्तिः। किञ्च सर्वे ते इति कर्तृपदे श्रुते एवेति न कर्तृपदाध्याहारकल्पनागौरवम्। द्वितीयपाठे तु नञो नास्ति स्वान्वयिक्रियापदासत्तिः। किञ्चात्र पाठे 'सर्वे ते' इत्यनयोः कर्मपदत्वेन कर्तृपदाध्याहारे गौरवञ्च।

'पर्युदासोऽयमत्र तु' इत्यस्य व्याख्यावसरे पुण्यराजीये—'तत्र ह्याख्यातेन नैव नञः संबन्धः' इति, 'तत्र ह्याख्यातेनैव नञः संबन्ध' इति च पाठद्वयं दृश्यते। तत्राद्य-पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्त्वयुक्तः, लक्षणदोषात्। नहि पर्युदासस्य नञ आख्यातेनैव संबन्धः समुचितः, उत्तरपदेनैव तत्संबन्धात्। तदुक्तमभियुक्तैः—

'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' इति।

अत्रैवाग्रे पुण्यराजीये—'नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः' इति, 'नाम-धात्वर्थयोगेन नैव नञ् प्रतिषेधकः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः। तृतीयार्थासंगतेः। तृतीयार्थो वैशिष्ट्यमिति तु न वाच्यम्, योगशब्देन सह पौनरुक्त्यापत्तेः।

इदं गौणमित्यस्योदाहरणावसरे पुण्यराजीये—'यूपादिरप्यादित्यादिरित्युच्यते' इति, 'यूपादिरादित्यादिरित्युच्यते' इति च पाठद्वयं दृश्यते। तत्रापिशब्दघटितः पाठ एव साधुः। अपिशब्दसंनिधानेन हि यूपादेरादित्यादितोऽत्यन्तं भिन्नत्वं प्रतीयते। आदित्यादितोऽत्यन्तं भिन्नोऽपि यूपादिरादित्यादिरित्युच्यते इति च तदर्थः।

अत्रैवाग्रे पुण्यराजीये—'अत्र शास्त्रे यथा' इति, 'तत्र शास्त्रे यथा' इति च पाठद्वयं दृश्यते। तत्र इदमः संनिहितार्थकत्वेन 'अत्र' इति पाठ एव युक्तः।

अत्रैवाग्रे पुण्यराजीये—'संनिहत्याममरसिन्धुस्नानम्' इति, 'संनिहत्यामरसिन्धुस्नानम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु समासेऽर्थसंदेहादयुक्तः स पाठः।

अत्रैवाग्रे पुण्यराजीये—'इत्यादिना गुरुः' इति, 'इत्यादिना गुरुरुपाय' इति च पाठद्वयं दृश्यते। तत्राद्यः पाठ एव युक्तः। पूर्ववाक्योक्तस्यैव उपायपदस्यात्रानुकर्षात्। 'स एव तु' इति तत्पदेन परामर्शाद्वा। अत्र पुनरुपायपदस्य वैयर्थ्यात्।

अत्रैवाग्रे पुण्यराजीये—'गुरुप्रक्रम उपजायते' इति, 'गुरुक्रम उपजायते' इति च पाठद्वयं दृश्यते। तत्र 'गुरुः प्रक्रम उपजायते' इति पाठ शोभनो भाति।

अग्रे—'लघुत्वं तु प्रक्रमस्य' इति प्रक्रमशब्दपाठात् प्रक्रमशब्दपाठः समुचितः। 'एकत्र क्रियमाणयोरिति षष्ठीनिर्देशात्—'गुरुः प्रक्रमः' इति व्यस्तपाठो युक्तः।

अत्रैव—'बहुव्रीहेस्तत्रेति' 'बहुव्रीहिस्तत्रेति' पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रक्रमस्य लघुत्वे तत्र बहुव्रीहेरित्यस्य हेतुत्वात्, हेतुवाचकपदोत्तरञ्च पञ्चम्या एव युक्तत्वात्।

अत्रैवाग्रे पुण्यराजीये नीतिशतकात् समुद्धृते पद्ये—'शरदि सरिदाश्यानपुलिनेनि', 'शरदि सरितः श्यानपुलिना' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। उपक्रमे प्रथमैकवचनान्तस्यैव पाठात्। एकवचनान्तद्वयमध्ये पाठेन पूर्वापरसाहचर्यस्यैव नियामकत्वाच्च। एवमग्रेऽपि 'सुरतमृदिता बालललना' इति प्रथमैकवचनान्तपाठस्यैवौचित्यम्, न तु बहुवचनान्तपाठस्येत्यवधेयम्। 'गलितविभवाश्चार्थिषु नराः' इत्यत्र तु बहुवचनान्तपाठ एव समुचितः। 'शोभन्ते' इति बहुवचनान्तपदसांनिध्यात्। अन्यथा शोभते इति वचनविपरिणामः कल्पयितव्यः स्यात्। क्वचित्तु नरा इत्यस्य स्थाने नृपा इति पाठ उपलभ्यते। स एव तु समुचितः प्रतिभाति। नृपाणां नरपालनार्थं गलितविभवत्वस्य संभावकत्वात्।

अत्रैवाग्रे पुण्यराजीये—बहुभेदं विकल्प्यते इति' इत्यस्याग्रे—'तत्र शास्त्रे यथा' इत्ययं पाठः क्वचिदुपलभ्यते क्वचिन्नेति। किन्तु अग्रे—'वेदे यथा' 'लोके यथा' इति पाठदर्शनेन अयं पाठो युक्त एव प्रतिभाति।

अत्रैवाग्रे पुण्यराजीये—'वाचं विसृजेत्', 'वाचं विसृजते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। विधित्वस्य स्फुटं प्रतिपत्तेः। द्वितीयपाठे तु लड्लेटोः संदेहः।

अत्रैवाग्रे पुण्यराजीये—'वर्ज्यमानशेषस्य' इति, 'वर्ज्यमानस्य' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि–शेषस्यैवानुदात्तत्वमिष्यते, न तु वर्ज्यमानस्य, तस्य तूदात्तत्वं स्वरितत्वं वा इति।

यद्यपि—

इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः।
सर्वे ते न प्रकल्पेरन् पदं चेत् स्यादवाचकम् ॥

इति श्लोकः क्वचिन्न दृश्यते, तथापि पुण्यराजीये व्याख्यात इत्यावश्यकः।

अत्रैव पुण्यराजीये—'पदार्थविशेषसंप्रत्ययप्रतिबद्धा' इति, 'शब्दार्थविशेष-संप्रत्ययप्रतिबद्धा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। पद्यते गम्यतेऽर्थो येन इति व्युत्पत्त्या पदस्यार्थवत्त्वाव्यभिचारात्। शब्दस्य तु अनर्थकस्यापि संभवात्।

**'अविभक्तेऽपि वाक्यार्थे' इति ॥ ८८ ।**

अत्रैव पुण्यराजीये—'ततो महावाक्यापेक्षयाऽवान्तरवाक्योपप्लवनेन' इत्यत्र उपप्लावनेन' इति पाठः क्वचिद्दृश्यते। स एव च युक्तः। अवान्तरवाक्यानां स्वत उपप्लवासंभवादिति।

अस्य श्लोकस्यावतरणावसरे पुण्यराजीये—'दूषणव्राते' इति, 'दूषणजाते' इति च पाठद्वयमुपलभ्यते। तत्राद्यपाठ एव युक्तः। व्रातपदस्य संघे प्रसिद्धशक्तिकत्वात्। जातशब्दस्य तु जननकर्तरि शक्तस्य संघरूपे तस्मिन् पदान्तरसमभिव्याहाररूपवाक्य-सापेक्षप्रतिपत्तिकत्वात्।

अत्र द्वितीयपादे—'शक्तिभेदाद्, 'गीतिभेदाद्' इति पाठद्वयमुपलभ्यते। तत्र गीतिभेदादिति अर्थासंगत्याऽसंगतः पाठः।

अत्रैव चतुर्थे पादे–'यथोक्तं न विरुध्यते' इति, 'यच्चोक्तं न विरुध्यते' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'एतत्सर्वं यथोक्तमस्मत्पक्षे न विरुध्यते' इति पुण्यराजीये व्याख्यादर्शनात्।

अत्रैव पुण्यराजीये—'एकस्मिन्नपि तस्मिन्' इति, 'एकस्मिन्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। तथाहि—'एकस्मिन्नपि' इति अविभक्तेऽपि इत्यस्य व्याख्यानम्। तस्मिन्नित्यनेन तु वाक्यार्थे इत्यस्य परामर्शः। द्वितीयपाठे तु नैषोऽर्थो लभ्यत इति।

अत्रैव पुण्यराजीये—'निर्विभागमेकमेव' इति, 'निर्विभागमेव' इति च पाठौ दृश्येते। तत्राद्यपाठ एव युक्तः। निर्विभागपदस्यावयवविभागरहितमित्यर्थकत्वात्। एकमित्यस्य च सजातीयद्वितीयरहितमित्यर्थकत्वेनापौनरुक्त्यात्।

अत्रैवाग्रे पुण्यराजीये—'सत्त्वं स्वलक्षणम्' इति, 'सत्त्वं लक्षणम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयस्तु न युक्तोऽर्थासंगतेः।

अत्रैवाग्रे पुण्यराजीये—'अवान्तरवाक्योपप्लावनेन' इति, 'अवान्तरवाक्योपप्लवनेन' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अवान्तरवाक्यस्य स्वयमुपप्लवनासंभवात्।

**'यथैवैकस्य गन्धस्य' इति ॥ ८९।**

अत्र पुण्यराजीये—'अयं पुष्पगन्धोऽयं चन्दनगन्ध इत्यादि' इति वाक्यानन्तरम्—'तथा वाक्य एवार्थापोद्धारसमाश्रयणेन पदार्थभेद उपपद्यते, अयं देवदत्तपदार्थोऽयं गोपदार्थ इत्यादि' इति पाठः क्वचित्पुस्तके न दृश्यते। इदं न युक्तम्। कारिकायां यथातथापदयोरुपन्यासेनैतत्पाठोपन्यासस्यैवौचित्यादिति।

**'गवये नरसिंहे' इति कारिका ॥ ९०।**

अत्र चतुर्थे पादे—'विधीयते' इति, 'अभिधीयते' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठो न युक्तः। परिकल्पनापदार्थस्याभिधानकर्मत्वाभावात्। विधानकर्मत्वस्य तु संभवात्। अत एव पुण्यराजीये 'विधीयते' इत्यस्य 'उपपाद्यते' इति व्याख्यानं कृतम्। उपपद्यते इति पाठस्तु व्याख्यायामयुक्त एव। द्वयोरपि तयोरुपपद्यते इत्यर्थासंभवात्।

अस्या द्वितीयपादे—'एकज्ञानावृते', 'एकज्ञानादृते', 'एकज्ञानकृते' इति पाठत्रयं दृश्यते। तत्राद्यपाठ एव युक्तः। पुण्यराजीये 'एकज्ञानेनाभिन्नेनैवावृते विषयीकृते' इति व्याख्यादर्शनात्।

अत्रैव पुण्यराजीये—'एकज्ञानेनाभिन्नेनैवावृते' 'एकज्ञानेन भिन्ने नावृते' इति पाठद्वयं दृश्यते। तत्राद्यपाठो न युक्तः। एवकारस्य वैयर्थ्यात्। ज्ञानद्वयव्यवच्छेदस्यैकपदेनैव अभिन्नपदेनापि च संभवात्।

एतत्कारिकाव्याख्यानावसरे पुण्यराजीये—'श्रुतिवाक्यविरोधश्च' 'स्तुतिवाक्यविरोधश्च' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, श्रुतिवाक्यविरोधस्य मीमांसासु प्रसिद्धत्वात्। द्वितीयपाठस्तु नात्र कामपि संगतिं लभते।

**'अप्रसिद्धं तु यत्' इति ॥ ९१।**

अस्या उपोद्धाते—'पिकादिसंदेहे चोद्यम्' 'पिकादिसंदेहचोद्यम्' इति पाठद्वयं दृश्यते। तत्राद्यो व्यस्तपाठ एव युक्तः। समस्तपाठे 'सप्तमीशौण्डैः' इत्यत्र शौण्डादिगणे संदेहशब्दस्य पाठाभावात्, योगविभागस्य भाष्येऽदृष्टत्वात्, 'सहसुपा' इति समासस्यागतिकगतित्वात्।

अस्यामेव कारिकायां प्रथमे पादे—'यं भागम्' 'यद् भागम्' इति, तृतीयपादे–'तावत्यसंविदम्', 'तावत्त्वसंविदम्' इति 'तावत्यसंविदन्' इति च पाठा दृश्यन्ते। तत्र यं भागमिति व्यस्तपाठ एव युक्तः। 'यद् भागम्' इति पाठे यत्पदार्थस्य भागपदार्थे विशेषणत्वेन तावत्पदघटकतत्पदेन परामर्शासंभवात्। सर्वनाम्नामुत्सर्गतः प्रधान-परामर्शित्वात्। इतरपाठत्रये तु आद्यपाठ एव युक्तः, अर्थसंगतेः। असंविदन् इति शतुरनुपपत्तेश्च। 'तावत्त्वसंविदम्' इति पाठे तु शब्दव्यावर्त्याप्रसिद्धेश्च।

**'तथा पिकादियोगेन' इति ॥ ९२।**

कारिकायास्तृतीयपादे 'सदृशस्येव संज्ञानम्' इति, 'सदृशस्य व संज्ञानम्' इति पाठद्वयं दृश्यते। तत्रार्थसंगत्याऽऽद्यपाठ एव युक्तः। द्वितीयपाठस्यासाधुत्वं तु स्पष्टमेव। 'सज्ञानम्' इति निरनुस्वारपाठोऽप्ययुक्त एवार्थासंगतेः।

**'एकस्य भागे सादृश्यम्' इति' ॥ ९३।**

अत्रैव—'किञ्चिद्धि चित्रज्ञानं नीलहरितोल्लेखि' इत्यत्र—'किञ्चिद् विचित्र-ज्ञानम्' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। ज्ञाने वैचित्र्यस्य विषयवैचित्र्या-देव संभवे न घटपटाद्युल्लेखिज्ञानस्यापि वैचित्र्यसंभवेन तदनुदाहृत्य—नीलहरितो-ल्लेखि पीतहरितोल्लेखि इत्युदाहरतः पुण्यराजस्य 'चित्रज्ञानम्' इति पाठ एव तात्पर्यात्। चित्रज्ञान एव नानावर्णोल्लेखसंभवाद् इति।

कारिकायां तृतीयपादे—'प्रकाशस्य', 'प्रत्ययस्य' इति पाठद्वयं दृश्यते। तत्राद्य-पाठ एव युक्तः। प्रत्ययपदस्य हेत्वादिरूपानेकार्थकत्वेन संदिग्धार्थकत्वात्। अस्या एव कारिकायाश्चतुर्थे पादे—'चेतसा' 'तेजसा' इति पाठद्वयं दृश्यते। तत्र चेतसा इति पाठ एव युक्तः। चेतःपदस्य विज्ञानार्थकत्वेनार्थसंगतेः। तेजसा इति पाठे तु नार्थसंगति-रिति सुधीभिरवधेयम्।

अस्या एव कारिकाया व्याख्याने पुण्यराजीये—'प्रकाशस्वभावं निरंशमेव', 'प्रकाशस्वभावान्निरंशमेव' इति पाठद्वयं दृश्यते। तत्राद्यः प्रथमान्तपाठ एव युक्तः, अर्थसंगतेः। द्वितीये पञ्चम्यन्तपाठे तु नार्थसंगतिः। प्रकाशस्वभावस्य निरंशत्वे हेतुत्वा-संभवात्। नित्यत्वगुणत्वादेरेव निरंशत्वे हेतुत्वसंभवात्।

अत्रैवाग्रे पुण्यराजीये—'तत्र सादृश्यम्', 'तत् सादृश्यम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, असंदिग्धत्वात्। 'तत्सादृश्यम्' इति पाठे तु तदिति तं समस्तं वा, समासेऽपि कर्मधारयः, षष्ठीतत्पुरुषः, तृतीयातत्पुरुषः, सप्तमीतत्पुरुषो वा इति बहुविधसंदेहसमुदयादयुक्तत्वम्।

**'रूपनाशे पदानां स्यात्' इति' ॥ ९५।**

अत्र चतुर्थे पादे—'कथञ्चार्थो विविच्यते', 'कथमर्थो विविच्यते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। चकारस्यानर्थक्यात्।

एतद्व्याख्याने पुण्यराजीये—'तदर्थो विविच्यताम्', 'तदर्थो विविच्यते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। कारिकायां विविच्यते इति पाठे सर्व-संप्रतिपत्तेः।

**'संसर्ग इव रूपाणाम्' इति' ॥ ९६।**

अत्र प्रथमे पादे—'संसर्ग इव', 'संसर्गादेव'; द्वितीये पादे–'शब्देऽन्यत्र', 'शब्दोऽन्यत्र', चतुर्थे पादे; 'तन्त्रेणापरम्' 'तन्त्रेण परम्' इति; तृतीयपादे—'नानारूपेषु', 'नानारूपेण' इति पाठा उपलभ्यन्ते। तत्राद्ये पाठद्वये—'संसर्ग इव' इति, द्वितीये तु—'शब्देऽन्यत्र' इति, चतुर्थे तु 'तन्त्रेणापरम्' इति, तृतीये पादे 'नानारूपेषु' इति पाठाः साधवः प्रतिभान्ति। तथैव पुण्यराजेन व्याख्यातत्वात्।

**'तस्मिन्नभेदे भेदानाम्' इति' ॥ ९७।**

अत्र द्वितीयपादे—'संसर्ग इव वर्तते', 'संसर्ग उपपद्यते', 'संसर्ग उपवर्तते' इति पाठत्रयम्; चतुर्थपादे–'तस्मादनन्यत् प्रविभज्यते', 'तस्मादनन्यप्रत्यविभज्यते', 'तस्मादनन्यत्प्रत्यविभज्यते' इति पाठा उपलभ्यन्ते। तत्राद्यपाठत्रये आद्यपाठ एव युक्तः। पुण्यराजीये—'संसर्ग इव स्थितः' इति तद्व्याख्यादर्शनात्। द्वितीये पाठत्रयेऽपि आद्यपाठ एव युक्त.। 'तस्मात्तद्रूपं रूपान्तरादनन्यदपि प्रविभज्यते' इति पुण्यराजीये तद्व्याख्यादर्शनात्। द्वितीयतृतीयपाठयोः शब्दाशुद्धेश्च।

एतत्कारिकाव्याख्याने पुण्यराजीये—'इत्येवंरूपे' 'इत्येवरूपे' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्यैव निरस्तो वेदितव्यः।

**'शास्त्रे प्रत्यायकस्यापि' इति ॥ ९८।**

अस्यास्तृतीये पादे—'प्रत्याय्येन' इति, 'प्रत्याय्ये तु' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। प्रथमोपस्थितां तृतीयां परित्यज्य सप्तम्युपादाने कारणाभावात्। सप्तम्यन्तपाठपक्षे तु शब्दस्यानर्थक्यात्। प्रथमविकल्पे तुशब्दोपादानस्यानौचित्याच्च।

अस्या एव कारिकायाश्चतुर्थे पादे—'ग्रहणग्राह्ययोः' इति, 'ग्राह्यग्रहणयोः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। ब्रह्मकाण्डे—'ग्रहणग्राह्ययोः सिद्धा नियता योग्यता यथा' (वा० प० ब्रह्म० ९७) इति पाठस्य दर्शनात्। ग्रहीतृग्रहणग्राह्येषु 'तत्स्थतदञ्जनता समापत्तिरिति योगसूत्रे ग्रहणशब्दस्यैव प्राक्प्रयोगदर्शनाच्च। ग्रहणस्य करणत्वेन प्राग्भावित्वात्, ग्राह्यस्य कर्मत्वेन पश्चाद् भावित्वादपि यथायोग्यं पौर्वापर्येणोपन्यासः समुचितः। अत एव न्यायसूत्रेऽपि 'प्रमाणप्रमेय' इति करणस्यैव प्रागुपन्यासः कृतः।

अस्या एव कारिकाया अस्मिन्नेव पादे--'स्थितः' इति, 'स्मृतः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठस्तु असंगतः। नहि क्वचिदपि ग्रहण-ग्राह्ययोर्भेदो व्याकरणस्मृत्या बोधितः। 'स्यतासी लृलुटोरि'त्युदाहरणेऽपि ग्रहणग्राह्ययो-र्भेदस्य स्मरणाभावात्।

## 'ऊ इत्यभेदमाश्रित्य' इति ॥ ९९ ।

अत्र पुण्यराजीये--'ह्रस्वादिषु समसंख्याऽप्रसिद्धेरुद्देशनिर्देशवैषम्यात्' इत्यत्र क्वचित् पुस्तके--अप्रसिद्धिरिति प्रथमान्तपाठ उपलभ्यते। स एव च युक्तः। 'उद्देश-निर्देशवैषम्यात्' इत्यस्यात्र हेतुत्वस्य विवक्षितस्योपपत्तेः। पञ्चम्यन्तपाठे हि साध्य-स्यानिर्देशः प्राप्नोति।

अत्र प्रथमे पादे--'ऊ इत्यभेदमाश्रित्य' इति, 'ऊ इत्यभेदत्वमाश्रित्य' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः। नापि च छन्दःशुद्धिः। पादस्य नवाक्षरत्वसंपत्तेः।

अस्या एव कारिकाया व्याख्याने पुण्यराजीये--'समसंख्याऽप्रसिद्धिरुद्देशनिर्देश-वैषम्यात्' इति, 'समसंख्याऽप्रसिद्धेरुद्देशनिर्देशवैषम्यात्' इति च पाठद्वयं दृश्यते। तत्र प्रथमः प्रथमान्तपाठ एव युक्तः। तदर्थस्य साध्यत्वात्। पञ्चम्यन्तपाठे तु साध्य-त्वानुपपत्तिः।

अत्रैव पुण्यराजीये--'त्रयाणां हि विकारनिर्देश इति' इति पाठः क्वचिद् दृश्यते, क्वचित्तु इतिशब्दस्य पाठो नास्ति। तत्र इतिशब्दस्य पाठ एव समुचितः। उद्ध्रियमाणवाक्यस्यानुकरणवाक्यत्वेन तदग्रे इति शब्दप्रयोगस्य स्वरससिद्धत्वात्।

अत्र क्वचित् 'लृङ्लृटोर्ग्रहणे' इति पाठ उपलभ्यते। स एव च युक्तः। पुण्य-राजीये--'स्यतासी लृलुटोः' इत्यत्र 'लृशब्देन लृङ्लृटौ प्रत्याख्येते' इति व्याख्यादर्शनात्। एवञ्च लृशब्देन लृङ्लृटोर्ग्रहणे इत्यर्थोऽवधेयः।

अस्यामेव कारिकायां द्वितीयपादे--'सहकल्पितः' इति, 'परिकल्पितः' इति च पाठद्वयं दृश्यते। तत्र सहशब्दघटितः पाठ एव युक्तः। परिकल्पित इति पाठे 'ग्राह्याभ्याम्' इत्यस्य कर्तृकरणयोरन्यतरतृतीयान्तत्वप्रत्ययापत्तेः।

एतत्कारिकाव्याख्यानावसरे पुण्यराजीये--'एचोऽयवायाव इत्यनिर्देश' इति, 'अयवायाव एच इत्यनिर्देश' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। उप-क्रमे 'णलादयः परस्मैपदानाम्, 'डारौरसः प्रथमस्य' इति स्थानिनः पश्चान्निर्देश-दर्शनात्।

अत्रैवाग्रे पुण्यराजीये--'चोद्यमेवम्' इति, 'चोद्यमेव' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अवधारणार्थकस्यैवकारस्यात्र न काऽपि संगतिः।

**'यस्येत्येतदणो रूपम्' इति ॥ १०० ।**

एतद्व्याख्याने पुण्यराजीये--'रूपमणः' इति, 'रूपमणोः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्विवचननिर्देशे फलाभावात्।

अत्रैवाग्रे पुण्यराजीये--'प्रत्यायनस्यासंभव' इति, 'प्रत्यायनस्य संभव' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु विरुद्धार्थप्रत्यायकत्वेन सावद्य इति।

**'ऊ इत्येतदभिन्नश्च' इति ॥ १०१ ।**

अस्यास्तृतीये पादे--'भेदेन ग्रहणं चास्य' इति, 'भेदेन ग्रहणं यस्य' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः, अत्र प्रतिनिर्देश्यार्थकस्य तच्छब्दस्याभावात्।

**'प्लुतस्याङ्गविवृद्धिश्च' इति ॥ १०२ ।**

अस्या व्याख्याने पुण्यराजीये--'य उपदर्शित' इति क्वचित् पाठः। क्वचित्तु यच्छब्दरहितः पाठः। स तु न युक्तः। अग्रे--'स पराकृतः' इति तच्छब्दस्य पाठात्।

अत्रैवाग्रे पुण्यराजीये--'समर्थनं नज्ज्यायः' इति, 'समर्थनं न ज्यायः' इति च पाठद्वयं दृश्यते। इदं पाठद्वयमपि न साधु, अर्थासंगतेः। किन्तु--'यत्समर्थितं न तज्ज्यायः' इति पाठ एव युक्तः, अर्थसंगतेः।

**'अर्द्धर्चादिषु शब्देषु' इति ॥ १०३ ।**

अस्या द्वितीये पादे—'क्रमाद् यथा' इति, 'क्रमो यथा' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। पुण्यराजीये—'क्रमवशेन' इति व्याख्यादर्शनात्। अस्याश्च व्याख्यायाः क्रमपदस्य पञ्चम्यन्तत्व एव संभवात्।

अत्रैव पुण्यराजीये—'अर्चोऽर्थम्' इति, 'अचोऽर्थम्' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठो न युक्तः, अनर्थकत्वात्।

**'संहिताविषये वर्णा' इति ॥ १०४ ।**

अत्र 'संहिताविषया वर्णाः' इति पाठोऽपि क्वचिदुपलभ्यते। किन्तु अत्राद्यः सप्तम्यन्त पाठ एव युक्तः। तथाहि—विषयशब्दोऽत्र देशपरः। दृश्यते च लोके विषयशब्दस्य देशे बाहुल्येन प्रयोगः। अनिरम्योऽयं विषयः। देश इति गम्यते। तथाच भगवान् पाणिनिरपि—विषयो देशे इति सूत्रयाञ्चकार। तत्र संहिताविषये इति सप्तम्यन्तपाठे संहिताविषये इति च षष्ठीतत्पुरुषः। देशश्चोच्चारणकाल एवात्र गृह्यते। संहिताविषये स्थिता इति स्थितिक्रियामध्याहृत्याधिकरणकारकत्वं निर्वाह्यम्। अत्र च संहिताया एकस्मिन् काले स्थितिः कालिकविशेषणता संबन्धेन। तत्पुरुषसमासे च

वर्तिपदार्थप्राधान्यम् । संहिता विषया इति प्रथमान्तपाठे तु संहिता 'परः संनिकर्षः' विषयो देशो येषां ते तथा भूता इति बहुव्रीहिः ।

अत्र च वर्णधर्मभूतायाः संहिताया न साक्षाद् वर्णदेशत्वं संभवति—इति कालिकनिरूपणतासंबन्धावच्छिन्नसामानाधिकरण्यरूपपरम्परासंबन्धेन तन्निर्वाह्यम् इति परम्परासंबन्धकल्पनायां गौरवम् । किञ्चात्र बहुव्रीहेरन्यपदार्थप्राधान्यमिति तत्पुरुषापेक्षयाऽनभ्यर्हितत्वमस्य ।

किञ्च पुण्यराजीये—'संहिताविषये प्रतिभासते' इति व्याख्यादर्शनादपि सप्तम्यन्तपाठस्यैव युक्तत्वं प्रतीयते इति ।

## 'इन्द्रियादिविकारेण' इति ॥ १०५ ।

अस्याश्चतुर्थे पादे 'भिन्नं ग्रहणम्' इति, 'भिन्नग्रहणम्' इति च पाठद्वयं दृश्यते । तत्रान्त्यः समस्तपाठ एव युक्तः । तथाहि—अस्मिन् पाठे भिन्नस्य ग्रहणमित्यर्थस्य संभवः । व्याख्यातञ्च पुण्यराजेन—'एकाकारमपि वस्तुनानारूपतयाऽवभासते' इति । व्यस्तपाठे तु ग्रहणे भेदः शब्दतः प्रतीयते, न तु ग्राह्ये इति ।

अत्रैव पादे 'सक्रमः श्रुतौ' 'संक्रमः श्रुतौ' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । तत्पदेन पूर्ववाक्यार्थस्य परामर्शः एकवाक्यतासंभवात् । द्वितीयपाठे तु यथा किञ्चिदन्यत्र वर्तमानमन्यत्र संक्रामति, तथा श्रुतौ शब्दे संहितावशाद् रूपनानात्वमित्यर्थसंभवेऽपि पूर्ववाक्यार्थऽस्यार्थस्यान्वयदौर्लभ्येन हेय एव सः ।

## 'अभिधानक्रियायोगा' इति ॥ १०६ ।

अत्र चतुर्थपादे—'तदैवैकं प्रकाशते' इत्यत्र तदेवैकम् इति पाठः क्वचिद् दृश्यते। स एव च युक्त इति पुण्यराजव्याख्यादर्शनेन प्रतीयते ।

अत्र—'अभिधानक्रियाभेदात्' इति पाठोऽपि क्वचिद् दृश्यते । स तु न युक्तः । 'श्वेतो धावति' इत्यादौ संहितयोच्चारणरूपाया अभिधानक्रियाया भेदाभावात् । 'अभिधानक्रियासंहितयोच्चारणमेव, तया योगात्, सत्संबन्धात्' इति पुण्यराजीये तद्व्याख्यादर्शनाच्च ।

अस्या एव द्वितीयपादे—'शब्देष्वविकृतेष्वपि' इति, 'शब्देषु विकृतेष्वपि' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । पुण्यराजीये एतद्व्याख्यानावसरे—'अविकृतेष्वपि' इत्येवमेव पाठदर्शनात् ।

अस्या एव चतुर्थे पादे—'तदेवैकम्' इति, 'तदैवैकम्', 'तदैकत्वम्' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः । अभिधानक्रियायोगात् । अविकृतेष्वपि शब्देषु यदेकमेव रूपं दृष्टं तदेव शक्त्यन्तरपरिग्रहादत्यन्यभेदेन प्रकाशते इत्यर्थस्य संभवात् ।

इतरस्मिन् पाठद्वये तु यदेवैकं रूपम्--अथवा एकत्वं दृष्टम्, तदेव अत्यन्तभेदेन प्रकाशतेइत्यर्थस्यासंगतेः। तथाहि--संहितयोच्चारणकाले एकत्वं दृष्टम्, शक्त्यन्तर-परिग्रहकाले तु अत्यन्तभेदेन प्रकाश इति कालभेदात्।

**'ऋचो वागीति मात्रं वा' इति ॥ १०७।**

अत्र पुण्यराजीये—'इत्यत्रोक्तं प्रकारेण तत्प्रतिपक्षेण वा' इत्यत्र—'उक्तप्रकारेण' इति समस्तपाठः क्वचिद् दृश्यते। स एव युक्तः, अर्थसंगतेः।

अस्यास्तृतीये पादे 'गीतिभेदाद् विगृह्यन्ते' इति, 'गीतिभेदात्तु गृह्यन्ते' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। आद्यपाठे तु 'विगृह्यन्ते' इति 'विपदस्य विकृता' इति पदस्य वा वैयर्थ्यं प्रसज्यते, एकेनैव गतार्थत्वात्।

अत्रैव पुण्यराजीये—'इत्यत्रोक्तप्रकारेण' इति, 'इत्यत्रोक्तं प्रकारेण' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठो न युक्तः, अर्थासंगतेः।

अत्रैव पुण्यराजीये—'तन्त्रेण तत्प्रतिपक्षेण' इति, 'तत्प्रतिपक्षेण' इति केवलश्च पाठ उपलभ्यते। तत्राद्यपाठ एव युक्तः। अन्यथा तत्प्रतिपक्षेणेत्यत्र तत्पदेन न कस्य परामर्शः स्यात्।

**'उपायाच्छ्रुतिसंहार' इति ॥ १०८।**

अस्या अवतरणे पुण्यराजीये--'एतत्समर्थयितुम्' 'तत्समर्थयितुम्' इति पाठ-द्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। समीपतरवर्तिनो रूपस्य ( अर्थस्य ) परामर्शार्थम् एतत्पदप्रयोगस्यैवौचित्यात्।

अस्यामेव कारिकायाम्--'उपायाः श्रुतिसंहार' इति उपायपदस्य प्रथमा-बहुवचनान्तस्य पाठस्तु न युक्तः। अर्थासंगतेः। 'उपायान्तरलक्षणाद्' इति पुण्यराजीये पञ्चम्यन्तपदपाठस्यैव दर्शनाच्च। अस्यामेव कारिकायां चतुर्थपादे--'साधुत्वमुच्यते, 'साधुत्वमिष्यते' इति पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। तन्त्रेणोच्चारणे शब्द-साधुत्वस्य शास्त्र एकयोगानुरोधेन इष्यमाणत्वेऽपि उच्यमानत्वाभावात्।

**'परिगृह्य श्रुतिं चैकाम्' इति ॥ १०९।**

अत्र—'परिगृह्य' इत्यस्य स्थाने—'परिलभ्य' इति पाठः क्वचिद् दृश्यते। तत्र परीत्यस्य वाक्यालंकारार्थं पठितत्वेन गृहीत्वा इत्यर्थकः परिगृह्य इति पाठ एव युक्तः। अर्थसंगतेः। प्राप्येत्यर्थकः परिलभ्य इति पाठस्तु न युक्तः। अर्थासंगतेः। तथाहि— तन्त्रेणोच्चारणे एकश्रुतिपरिग्रहस्य ल्यबन्तपदप्रयोगावगतं साधनत्वम्, न तु एकश्रुति प्राप्तेः। दृश्यते हि लोके परिगृह्यमाणानामेव वास्यादीना करणत्वं न तु प्राप्तानामिति। प्रकृतकारिकायाम् एव—'चैकाम्' इति, चैकमिति, 'रूपभेदवतामपि' 'रूपं भेदवतामपि' इति, चतुर्षु पाठेषु 'चैकाम्' इति, 'रूपभेदवतामपि' इति च पाठ-

द्वयं साधुप्रतीयते । रूपभेदवतामपि चैकां श्रुतिं परिगृह्य इत्यादिरूपेण पदानां समन्वयसंभवात् । भेदवतामपि चैकं रूपं श्रुतिञ्च परिगृह्य इत्यर्थे भेदप्रतियोगिनोऽनिर्देशात् साकाङ्क्षत्वेनार्थबोधासंभवः । रूपपदस्यार्थपरत्वस्यैव वक्तव्यतया अक्षा इत्यादौ अनेकार्थके तन्त्रेणोच्चारणस्याभावप्रसङ्गश्चेत्यादिकमपि दूषणमत्र पाठे बोध्यम् ।

## 'सरूपाणाञ्च वाक्यानाम्' इति ॥ ११० ।

अस्या द्वितीये पादे--'शास्त्रेण पतिपादितम्' इति, शास्त्रेणाप्रतिपादितम् इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठोऽवतरणिकया सह न संगच्छते इति नादृतः । तत्र हि पुण्यराजः कारिकापाठं 'प्रतिपादितम्' इत्येवं रूपं धृत्वा उक्तमित्यनेन पदेन व्याख्यातवान् ।

## 'एकस्यानेकरूपत्वम्' इति ॥ १११ ।

अत्र--'एकधानेकरूपत्वम्' इति पाठोऽपि क्वचिदुपलभ्यते । स तु न युक्तः । अर्थासंगतेः । 'यथैकोऽपि ध्वनिर्नालिकादिपरिग्रहाद् नानाविधषड्जादिरूपभेदवानुपजायते'' इति पुण्यराजेन व्याख्यातत्वाच्च ।

अस्या एव कारिकायास्तृतीये पादे—''यथा तथैव तन्त्रात्स्यात्'' इति, ''यथा तथैकतन्त्रात्स्यात्'' इति, ''यथा तथैव तत्र स्यात्'' इति च पाठत्रयमुपलभ्यते । तत्र प्रथमपाठ एव युक्तः । अर्थसंगतेः । तथैव, न त्वन्यथा इति व्याख्यानेन एवकारस्य सार्थक्यसंभवाच्च । द्वितीयपाठे तु एकपदस्य वैयर्थ्यम् । तृतीयपाठेऽपि न ज्ञायते कया विधया बहूनामेकरूपता भवतीति ।

## 'यथा पदसरूपाणाम्' इति ॥ ११२ ।

अत्र पुण्यराजीये—'यदि तथा न प्रकल्पेत' इत्यत्र प्रकल्प्येत । इति यन्तस्य कर्मणि लिङः प्रयोगो दृश्यते । स एव च युक्तः । 'अपोद्धारबुद्ध्या संभवमुपकल्प्य इति पूर्वत्र ण्यन्तस्यैव प्रयोगदर्शनात् ।

अत्र—'तथापदसरूपाणाम्' इति पाठोऽपि क्वचिद् दृश्यते । स तु न युक्तः । अग्रे तथापदस्य पाठेनात्र यथापदपाठस्यैवौचित्यात् ।

अस्या एव व्याख्याने पुण्याराजीये—यदि तथा न प्रकल्येत' इति, 'यदि 'तथा न प्रकल्येत' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । महावाक्योपयोगी व्यवस्थाप्यते' इति इतः प्राक् पाठेन प्रकल्प्येत—इत्यस्य व्यवस्थाप्येत इत्यर्थसंभवात् । प्रकल्पेत इति कर्तृपदप्रत्ययान्तपदपाठे तु न तस्यार्थस्य संभव इति हेयः सः । एवं तत्र 'कल्पेत' इति प्रशब्दरहितः पाठोऽपि हेय एव ।

**'अभिधेयः पदस्यार्थ' इति ॥ ११३ ।**

अस्या अवतरणिकायाम्—'इति पक्षं दूषयितुमाह' इति, 'इति पक्षे दूषयितुमाह' इति च पाठद्वयं दृश्यते तत्राद्यपाठ एव युक्तः । तथासति वाक्यस्य नैराकाङ्क्ष्येण वाक्यार्थप्रतिपादकत्वात् । द्वितीयपाठस्य तु नौचित्यम् । तत्र कर्माकाङ्क्षाया अनिवृत्तेः ।

अस्या एव पुण्यराजीये—'इति यत् किञ्चिदेतत्' इति 'इति यत् किञ्चित्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । इति एतत्' इत्यस्य इति वाक्यप्रतिपाद्यं वस्तु यत्किञ्चित्—तुच्छम्, इत्यर्थसंभवात् । एतत्पदस्यात्र बुद्धिस्थपरामर्शकत्वेन तदुपपत्तेः । एतत्पदाभावे तु—इति पदस्य वाक्यस्वरूपव्यवस्थापकत्वेन प्रकृतवाक्यस्यैव तुच्छत्वं प्रतीयेत, न तु तदर्थस्येति ।

**'तत्र क्रियापदान्येव' इति ॥ ११४ ।**

अस्यास्तृतीये पादे—'क्रियापदानुपक्तम्' 'क्रियापदानुपक्तश्च' इति पाठद्वयं दृश्यते । तत्राद्यपाठो न युक्तः । तथाहि—द्वितीयपाठे चोहेतौ । पूर्वार्धे च साधनानि इत्यस्याध्याहारः । एवकारश्च तत्राप्यर्थकः ।

चतुर्थपादे च—अर्थ इति पाठो न युक्तः । तत्र—'अतः' इति पाठ एव युक्तः । अर्थसंगतेः । तथा चैतस्मिन्पक्षे इयं पदयोजना । य—यत्र, तत्र वाक्ये, क्रियापदानि साधनपदान्येव—अपि, परस्परं व्यपेक्षन्ते—आकाङ्क्षावन्ति भवन्ति, अतः क्रियापदानुपक्तः साधनपदानां संबन्धः प्रतीयते ।

अत्र—व्याख्याने सम्बन्धपदे भावे घञ् । चतुर्थपादेऽर्थं इति पाठे तु कर्मणि घञ् । स च बाहुलकात् कल्पनीयः, अप्रसिद्धः, प्रायेण च कर्मघञन्तं भेदादिपदं नपुंसकमेव दृश्यते इति च कृत्वा न युक्तः । 'क्रियापदानुपक्तः परस्परसंबन्धो निराकाङ्क्षस्तस्मादुपपन्न इति' इति ब्रुवन् पुण्यराजोऽपि 'अतः' इति पाठ एवानुकूल इति विज्ञायते । तस्मादित्यस्य—अतः इत्येतद् व्याख्यानरूपत्वात् ।

**'आवृत्तिरनुवादो वा' इति ॥ ११५ ।**

अस्या अवतरणिकायां पुण्यराजीये—'न युक्तमिव' इति, 'न युक्त्यापन्नमिव' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । लाघवात् । द्वितीयपाठे तु निष्प्रयोजनं गौरवमिति स न युक्तः ।

अस्या एव द्वितीयपादे—'पदार्थव्यक्तिकल्पने' इति, 'पदार्थापत्तिकल्पने' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थसंगतेः । व्याख्यातञ्च पुण्यराजेन—'उक्तस्य वाऽर्थस्य स्फुटीकरणायानुवादः' इति । द्वितीयपाठस्तु अर्थासंगतेरयुक्त इति ।

अस्या एव व्याख्याने पुण्यराजीये—'पूर्वस्य पूर्वस्य तिरोहितत्वात्' इति, 'पूर्वस्य तिरोहितत्वात्' इति च पाठद्वयं दृश्यते । तत्राद्यो वीप्सितपाठ एव युक्तः ।

द्वितीयपाठे हि क्वचित्कदाचित् सहभावस्य संभवोऽपि स्यात् । वीप्सया पाठे तु सर्वथा सहभावस्यासंभव एव प्रतीयते इति । अत्रैवाग्रे पुण्यराजीये—समुद्धृते पद्यार्धे—'व्यक्तोपव्यञ्जनासिद्धिः' इति, 'व्यक्तोपव्यञ्जनात् सिद्धिः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः । सिद्धिपदेन सामानाधिकरण्ये संभवति वैयधिकरण्यस्यान्याय्यत्वात् । पञ्चम्यन्तपाठे साध्वर्थासंगतेश्च ।

## 'अविकल्पोऽपि वाक्यार्थे' इति ॥ ११६ ।

अविकल्पितवाक्यार्थे इति पाठोऽपि क्वचिद् दृश्यते । तत्राद्यपाठ एव युक्तः । "वाक्यार्थोऽविकल्प एव निर्विभाग एवाभ्युपगन्तुं युक्तः" इति पुण्यराजीये तद्व्याख्यादर्शनात् । द्वितीयपाठस्तु न युक्तः । तत्र पाठे वाक्यार्थे विकल्पनक्रियागोचरीकृतत्वरूपविकल्पितत्वस्याभावबोधनेऽपि विकल्पस्य तत्राप्रतिषेधात् । स विकल्पस्यापि वाक्यार्थस्य कदाचिद् विकल्पनक्रियागोचरीकृतत्वाभावसंभवात् इति ।

अस्या एव कारिकायास्तृतीये पादे—'अत्राधिकरणे वादाः' इति, 'अत्राधिकरणे वाचाम्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । 'अस्मिन्नधिकरणे विचारस्थाने पूर्वेषामाचार्याणां प्रवादा बहुधा गताः" इति पुण्यराजीये–तथैव व्याख्यादर्शनात् । वाचामिति पाठेऽर्थासंगतेः । उचितस्य संबन्धिनोऽनिर्देशात् । यदि तु अधिकरणे इत्यत्र वाचामित्यस्य संबन्धस्तदाऽपि अधिकरणे यथाकथंचित् तत्संबधित्वस्य अर्थतोऽसंभवेन तस्य पाठस्याकिञ्चित्करत्वम् ।

अस्या एव कारिकायाश्चतुर्थे पादे—'बहुधा गताः,' 'बहुधा मताः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । 'बहुधा गता' इति पुण्यराजीयेऽपि तथैव पाठदर्शनात् । मता इति पाठस्तु न युक्तः । पूर्वेषां वादा इत्युक्त्यैव मता इत्यर्थस्य लाभसंभवात् ।

## 'अभ्यासात् प्रतिभाहेतुः' इति ॥ ११७ ।

अस्या द्वितीये पादे—'सर्वः शब्दोऽपरैः स्मृतः' इति, 'शब्दः सर्वोऽपरैः स्मृतः' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । सर्व इत्यस्य शब्दविशेषणत्वेन प्राक् पाठस्यैव औचित्यस्वारस्याभ्यां सिद्धत्वात् । 'सर्वः यः कश्चिच्छब्दः' इति पुण्यराजीये तथैव व्याख्यानाच्च ।

तथैव—'शब्दोऽपरैः' इति, 'शब्दः परै' इति च पाठद्वयं दृश्यते। तत्र 'अपरैः' इति पाठ एव युक्तः । 'अपरैराचार्यैः' इति पुण्यराजीये व्याख्यादर्शनात् । किञ्च परशब्दस्यान्यवाचित्वात्पूर्वं कस्यचित् प्रतियोगिनोऽनुपन्यासे परशब्दप्रयोगस्यानौचित्यम् इत्यतोऽपि अपरशब्दप्रयोग एव युक्तः । 'सर्वः शब्दः समासतः' इति तत्त्वसंग्रहे विधिविवेके च पाठः । अयमपि पाठोऽर्थसंगत्या वाचस्पतिमिश्रैर्न्यायकणिकायां व्याख्यातत्वाद् युक्त एव ।

**'अनागमश्च सोऽभ्यास' इति ॥ ११८ ।**

अस्या व्याख्याने पुण्यराजीये—'तथैवोपदिष्टम्' इति, तदेवोपदिष्टम' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। ''इति जन्मान्तरभाव्येव'' इत्यग्रेतनग्रन्थानुरोधात्।

अस्या एव चतुर्थे पादे—'अस्मादित्युपदर्शकः' इति, 'अस्मादित्युपदर्शनम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। ''स चानन्तरमिदं कार्यमित्युपदर्शनस्वभावः'' पुण्यराजीये व्याख्यादर्शनात्।

अस्या एव व्याख्याने पुण्यराजीये—'वाजिनोऽतियान्ति, इति, 'वाजिनोऽभियान्ति' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ युक्तः। अतिशयेन यान्ति इत्यर्थस्यैवात्र पूर्वापरानुसंधानेन विवक्षितत्वावगमात्। अभिमुखं यान्ति इत्यर्थस्यात्राननुकूलत्वात्।

**'अस्त्यर्थः सर्वशब्दानाम्' इति ॥ ११९ ।**

अस्या व्याख्याने पुण्यराजीये—'अपूर्वदेवतादिपदेषु हि नाकारप्रथनम्'' इति, ''अपूर्वदेवतादिषु हि नाकारप्रथनम्'' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'यत्तु गवादिपदेषु आकारप्रथनम्' इत्यग्रिमग्रन्थानुरोधात्।

**'प्रयोगदर्शनाभ्यासात्'इति ॥ १२० ।**

अस्याश्चतुर्थे पादे—'स हि यत्नान्तराश्रय'' इति, ''स तु यत्नान्तराश्रय'' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। हि शब्दस्य यत इत्यर्थकत्वेन तृतीयपादार्थरूपे वाक्यार्थे हेतुत्वसंभवात्। तु शब्दपाठे तु तृतीयपादार्थस्य हेत्वभावेन नोपपत्तिसंभवः। ''यस्मात्प्रयोगदर्शनाभ्यासेन यत्नान्तरेण शब्दावगम्यातिरिक्तेन स प्रथते। ततश्च शब्दव्यापारोऽसौ न भवति'' इति पुण्यराजीये उत्तरार्थव्याख्यादर्शनेन हेत्वर्थकहिशब्दपाठस्यैवौचित्यप्रतीतेश्च।

अस्या एव व्याख्याने पुण्यराजीये—''तत्राकारपरिग्रहो यः'' इति, ''यत्राकारपरिग्रहो यः'' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। यत्रेत्येतदर्थपरामर्शकस्य तच्छब्दस्याग्रेऽनुपलम्भात्।

अत्रैव किञ्चिदग्रे पुण्यराजीये—''शब्दव्यापारोऽसौ'' इति, ''शब्दो व्यापारोऽसौ'' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु नार्थसंगतिः।

**'केचिद् भेदाः प्रकाश्यन्ते' इति ॥ १२१ ।**

अस्याश्चतुर्थे पादे—'शब्दार्थं इति मन्वते' 'शब्दार्थानिति मन्वते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'शब्दार्थ इति' इत्यस्य मतेरभिलापरूपत्वेन मतिरूपे धात्वर्थेऽभेदान्वये वाक्यार्थस्य कर्मत्वेन ततो द्वितीयाया अनुपपत्तेः।

**'जातेः प्रत्यायके शब्दे' इति ॥ १२२ ।**

तत्र—'जातेः प्रत्यायके शब्दे' इति, 'जातिप्रत्यायके शब्दे' इति च पाठद्वयं दृश्यते । तत्र समस्तो द्वितीयपाठ एव युक्तः । समासे वर्णमात्रालाघवसत्त्वात् । समासतदभावयोर्भावानुष्ठानस्यैवाधिकधर्मजनकत्वेनौचित्याच्च ।

अस्या एव कारिकायास्तृतीये पादे—'न तद्व्यक्तिगतान् भेदान्' इति, 'न तान् व्यक्तिगतान् भेदान्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । पूर्वं 'या व्यक्तिः' इति व्यक्तिपदसमानाधिकरणयत्पदनिर्देशे व्यक्तिपदसमानाधिकरणतत्पद-निर्देशस्यैवौचित्यात् ।

अस्या एव कारिकाया व्याख्याने पुण्यराजीये—'जातिपदार्थपक्षे' इति, 'जातिपदार्थपक्ष' इति च पाठद्वयं दृश्यते । तत्र सप्तम्यन्तपाठ एव युक्तः । न तु प्रथमान्तः, अर्थासंगतेः ।

**'घटादीनां न चाकारान्' इति ॥ १२३ ।**

अस्याश्चतुर्थे पादे—'नान्तरीयकी'—'नान्तरीयका' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठे ङीबादेर्दुर्लभत्वात् ।

**'क्रिया विना प्रयोगेण' इति ॥ १२४ ।**

अस्याश्चतुर्थे पादे—'शब्दार्थ इति गम्यते' इति, 'शब्दार्थ इति मन्यते' इति वा पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । "शब्दार्थोऽवगन्तव्य" इति पुण्यराजीये व्याख्यानात् । मन्यते इत्यस्य कर्मकर्तृसाधारणतया संदिग्धार्थकत्वाच्च ।

**'नियतास्तु प्रयोगा' इति ॥ १२५ ।**

अस्या अवतरणे पुण्यराजीये—'गुणप्रधाने भावेन' इत्यस्य स्थाने—'गुणप्रधान-भावेन' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । अर्थौचित्यात् ।

तस्या एवावतरणे पुण्यराजीये—'गुणप्रधानभावेन'—'गुणप्रधानभावेन' इति पाठद्वयं दृश्यते । स चापपाठः, अर्थासंगतेः ।

अस्या एव व्याख्याने पुण्यराजीये—'तस्मात् प्रतीतम्' यस्मात्प्रतीतम्' इति 'पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठस्तु न युक्तः । अग्रे 'तस्मात्' इति पदाभावात् ।

**'समुदायोऽभिधेय' इति ॥ १२६ ।**

अत्र—'समुदायोऽभिधेयः स्यादविकल्पसमुच्चय' इति, 'समुदायोऽभिधेयो वा-ऽप्यविकल्पसमुच्चयः' इति च पाठद्वयं दृश्यते । तत्रान्त्यपाठ एव युक्तः । अस्य पक्षान्तरत्वेन वा शब्दपाठस्यैवौचित्यात् । अत्रापि शब्द एवकारार्थकः समुदायपदोत्तरं द्रष्टव्यः । प्रथमपाठस्तु न युक्तः । पक्षान्तरत्वस्य एवकारार्थस्य चालाभात् ।

**'असत्त्यो वाऽपि संसर्ग इति ॥ १२७ ।**

अत्र—'असत्त्योपाधिसंसर्गः' इति पाठोऽपि क्वचिदुपलभ्यते । स तु न युक्तः । तत्त्वसंग्रहे—'असत्त्यो वाऽपि' इति पाठस्यैवाङ्कितत्वात् । अस्याः पुण्यराजीयव्याख्या-दर्शनेन अस्यैव पाठस्यौचित्यप्रतीतेश्च ।

**'असत्त्योपाधि यत्सत्त्यम्' इति ॥ १२८ ।**

क्वचित्तु—'असत्त्यो वाऽपि यत्सत्त्यम्' इति पाठो दृश्यते । स तु न युक्तः । पुण्यराजीये—एतदवतरणिकादर्शनेन—असत्त्योपाधीति पाठस्यैव प्रतीतेः ।

अस्या एव कारिकायास्तृतीये पादे—'शब्दो वाऽप्यभिजल्पत्वम्' इति, 'शब्दो वाऽप्यभिजन्यत्वम्' इति च पाठो दृश्यते । तत्रान्त्यपाठो न युक्तः । वक्ष्यमाणे श्लोकेऽभिजल्पस्वरूपनिरूपणात् ।

**तयोरपृथगर्थत्वे' इति ॥ १२९ ।**

अत्र—'तयोरपृथगात्मत्वे' इति पाठः क्वचिदुपलभ्यते । स एव युक्तोऽपि । शब्दस्यापृथगर्थत्वसंभवेऽपि अर्थस्य तदसंभवात् । 'अपृथगात्मत्वे' इति पाठे तु न कश्चिद्दोषः ।

अस्या एव द्वितीये पादे—'रूढेरव्यभिचारिणी' इति च पाठद्वयं दृश्यते । तत्रान्त्यपाठो न युक्तः । अस्यान्वययोग्यपदाभावात् ।

अस्या एव तृतीये पादे—'क्वचिद्रूपम्' 'क्वचिद्द्रव्यम्' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः ।

अस्या एव कारिकाया व्याख्याने पुण्यराजीये—'किंचिदेव रूपम्' इति पाठ दर्शनात् । किञ्च—रूपम् इति पाठे शब्दार्थयोरुभयोरपि रूपस्य संग्रहः । द्रव्यमिति पाठे तु केवलस्य अर्थस्यैव संग्रह इत्ययुक्तोऽयं पाठः ।

**'अशक्तेः सर्वशक्तेर्वा' इति ॥ १३१ ।**

अस्या एव व्याख्याने पुण्यराजीये—'अथवा सर्वशक्तिः' 'अथ चासर्वशक्तिः' इति द्विधा पाठ उपालभ्यते । तत्र द्वितीयः पाठोऽयुक्तः । कारिकायां सर्व सर्वशक्तेरिति पाठदर्शनेन शब्दनिष्ठस्य सर्वशक्तित्वस्यात्र प्रतिपादयितत्वात् ।

अस्या एव व्याख्याने पुण्यराजीये—'शक्त्यार्थः' इति, 'शक्त्यर्थः' इति च पाठद्वयं दृश्यते । तत्र द्वितीयः पाठो न युक्तः । तथा पाठे—अभिधीयते ऽन्यनेन सह शक्तिपदार्थस्यान्वयासंभवेनाभिधानक्रियायाः करणत्वालाभात् ।

**'यो वाऽर्थो बुद्धिविषय' इति ॥ १३२ ।**

अस्या अवतरणिकायां पुण्यराजीये—'अथवा बुद्ध्यपारूढ एव' इति क्वचित्पाठः । क्वचित्तु—अथवा शब्दरहितः पाठः । स तु न युक्तः, पक्षान्तरोपन्यासे—अथवाशब्दपाठस्यैव युक्तत्वात् ।

अस्यास्तृतीये पादे—'स बाह्यं वस्तु' इति, 'स बाह्यवस्तु' इति च पाठद्वयं दृश्यते। तत्र समस्तपाठो न युक्तः। वस्तूद्देशेन बाह्यत्वस्यात्र विधेयत्वात्। समासे च विशिष्टशक्त्यभ्युपगमेन विशिष्टे पदार्थे उद्देश्यविधेयभावप्रतीत्यसंभवात्। अस्मिन् पाठे कर्मधारयगर्भो बहुव्रीहिरिति वृत्तिद्वयकल्पने गौरवात्। आद्यपाठे तु त्रिपदो बहुव्रीहिरिति एकैव वृत्तिरिति युक्तः स पाठः।

अस्या एव चतुर्थे पादे—'शब्दार्थ इति गम्यते' इति, 'शब्दार्थः कैश्चिदिष्यते' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। 'शब्दार्थ इष्यते' इति पुण्यराजीये व्याख्यादर्शनात्। पक्षान्तरोपन्यासेऽस्यैव पाठस्यौचित्याच्च।

**'आकारवन्तः संवेधा' इति ॥ १३३।**

अस्या द्वितीयपादे—'व्यक्तस्मृतिनिबन्धनाः' इति, 'व्यक्तिस्मृतिनिबन्धनाः' इति च पाठद्वयम्, अस्या एव तृतीयपादे—'एते प्रत्यवभासन्ते' इति 'ये ते प्रत्यवभासन्ते' इति च पाठद्वयम्, अस्या एव चतुर्थे पादे—'संविन्मात्रं ततोऽन्यथा' इति, 'संविन्मात्रं त्वतोऽन्यथा' इति च पाठद्वयं दृश्यते। तत्र सर्वत्रापि द्वितीयपाठ एव युक्तः।

तथाहि—ये संवेधा व्यक्तिस्मृतिनिबन्धनास्ते आकारवन्तः प्रत्यवभासन्ते। अतोऽन्यथा तु संविन्मात्रम्। सामान्यधर्मपुरस्कारेण संवित्सामान्यमेवोपजायते, न तु आकारविशेषभानं तत्रेत्यर्थे द्वितीयपाठानामेव संगतिः। व्यक्तस्मृतिनिबन्धना इति पाठे स्मृतेर्विषयालाभः। एते इति पाठेऽर्थसंगतिः। ततोऽन्यथा इति पाठोऽपि एतत्कारिका-पादत्रयार्थस्य प्रत्यक्षत्वेन तत्प्रत्यायनाय इदमः प्रयोग एवोचितो न तु तदः। किञ्च पूर्ववैलक्षण्यावद्योतनार्थं तु शब्दप्रयोगोऽपि समुचित एव।

**'यथेन्द्रियं संनिपतत्' इति ॥ १३४।**

अस्या एव द्वितीयपादे 'उपदर्शकम्' 'उपदर्शनम्' इति पाठद्वयं दृश्यते। तत्राद्य-पाठ एव युक्तः। द्वितीयपाठे भावकरणल्युडन्तयोः संदेहात्।

**'वक्त्रान्यथैव प्रक्रान्त' इति ॥ १३५।**

अस्यास्तृतीयपादे—'स्वप्रत्ययानुसारेण' इति, 'स्वप्रत्ययानुकारेण' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठो न युक्तः, अर्थासंगतेः। पुण्यराजीये स्वप्रत्ययानुसारेण इति पाठदर्शनाच्च।

अस्या एव व्याख्याने पुण्यराजीये—'प्रतिपत्तनुकारेण' इति, 'प्रतिपत्रनुसारेण' इति च पाठद्वयं दृश्यते। तद्द्वयमपि असाधु। तत्र—'स्वप्रतिपत्यनुसारेण' इति पाठ एव शोभनो भाति।

**'एकस्मिन्नपि दृश्येऽर्थे' इति ॥ १३६ ।**

अस्या द्वितीयपादे—'दर्शनं विद्यते पृथक्' 'दर्शनं विद्यते क्वचित्' इति पाठद्वयमुपलभ्यते। तत्र द्वितीयः पाठ एव युक्तः। पृथगित्यस्य क्वाप्यन्वयेऽर्थासंगतेः।

अस्या एव तृतीयपादे—'कालान्तरेण चैकोऽपि' 'कालान्तरेण वैकोऽपि' इति पाठद्वयमुपलभ्यते। तत्र वाशब्दघटितः पाठोऽयुक्तः। पुण्यराजीये—'एकोऽपि च पुरुषः' इति चकारेण व्याख्यादर्शनात्। किञ्च वाशब्दस्य यथा विकल्पे प्रसिद्धिर्न तथा चार्थे। किञ्च—'एकोऽपि च पुरुषः' इति पुण्यराजाभिप्रेतस्य अन्वयस्य एकः एव तु पुरुषः' इत्यभिप्रायः। एवं च वाशब्दस्य त्वर्थकत्वासंभवेन वाशब्दघटितः पाठो न युक्तः।

**'एकस्यापि च शब्दस्य' इति ॥ १३७ ।**

अस्या व्याख्याने पुण्यराजीये—'स्वप्रत्ययानुकारेण—'स्वप्रत्ययानुसारेण' इति पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः, अर्थसंगतेः।

**'तस्माददृष्टतत्त्वानाम्' इति ॥ १३८ ।**

अस्यास्तृतीयपादे—'दर्शनं वचनं चापि, 'दर्शनं वचनं वापि' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। पुण्यराजीये—'तथासति वचनमपि तेषां तथैव' इति व्याख्यायां समुच्चयार्थस्यैव प्रतीतेः। यद्यपि वाशब्दस्यापि समुच्चयोऽर्थः संभवति, तथापि वा शब्दस्य समुच्चयोऽर्थो विकल्पवन्न प्रसिद्ध इति सन्देहजनकत्वेन हेयः।

**'ऋषीणां दर्शनं यच्च' इति ॥ १३९ ।**

अस्यास्तृतीयपादे—'न तेन व्यवहारोऽस्ति' तेन न व्यवहारोऽस्ति' पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। प्रथमपाठे नतेन इत्येकपदत्वभ्रमसंभवात्। किञ्च द्वितीयपाठे—'व्यवहारोऽस्ति' इत्यनेन नञोऽव्यवहितः संबन्धोऽपि सिध्यति इति युक्तः स पाठः।

**'तलवद् दृश्यते व्योम' इति ॥ १४० ।**

अस्या अवतरणिकायाम्—'तथैव व्यवहरिष्यामः' इति, 'तथैव च व्यवहरिष्यामः' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठोऽयुक्तः। चकारस्य वैयर्थ्यात्। अस्या द्वितीयपादे—'हव्यवाडिव' 'हव्यवाडिति' इति पाठद्वयं दृश्यते। तत्र द्वितीयः पाठो न युक्तः। उत्तरार्धदर्शनेन इव शब्दपाठस्यैवौचित्यप्रतीतेः। अस्यास्तृतीये पादे—'नैव चास्ति तलम्' इति, 'नचैवास्ति तलम्' इति 'न चेन्नास्ति तलम्' इति च पाठत्रयं दृश्यते। तत्र मध्यपाठ एव युक्तः। तथाहि न चेति निपातसमुदायस्य निषेधार्थकत्वात्। नैवास्ति तलम् इत्यर्थः। नैव चास्ति इति पाठे तु चकारो न केनापि पदेन संगतिं भजते। तृतीयपाठस्तु अत्यन्तमसंगत इति न तिरोहितम्।

**'असमाख्येयतत्त्वानाम्' इति ॥ १४२ ।**

अस्याश्चतुर्थे पादे—'तत्प्राज्ञो न विकल्पयेत्' इति, तत्प्राज्ञो न कल्पयेत्' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। यथा इत्यस्य तद्वत् इत्यनेन प्रतिनिर्देशसंभवात्। अत एव पुण्यराजीयेऽपि—'तथैव तदनुसारेण शब्दार्थमाश्रित्य व्यवहारं निर्वाहयेत्' इति व्याख्या दृश्यते।

**'विच्छेदग्रहणेऽर्थानाम्' इति ॥ १४३ ।**

अस्या द्वितीयपादे—'प्रतिभाऽन्येव जायते' इति, 'प्रतिभाऽथैव जायते' इति च पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। द्वितीयपाठे—'अद्यैव' इत्यस्यार्थासंगतेः।

**'इदं तदिति साऽन्येषाम्' इति ॥ १४४ ।**

अस्यास्तृतीयपादे—'प्रत्यात्मवृत्तिसिद्धा सा' इति, 'प्रत्यर्थवृत्तिसिद्धा सा' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। प्रतिभाया वृत्तिविशेषरूपत्वेन प्रत्यर्थवृत्तित्वासंभवात्।

अस्या एव व्याख्याने पुण्यराजीये-'स्वसंवेदनसिद्धैवासौ' इति 'स्वसंवेदनसिद्धयैवासौ' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, द्वितीयपाठे हि वैयधिकरण्येनान्वयः' स च संभवति सामानाधिकरण्येऽन्याय्यः। किञ्चास्मिन् पाठे तृतीयान्तस्य 'निरूपयितुमशक्या' इति दूरेऽन्वयोऽपि दोषः।

अत्रैव पुण्यराजीये—'प्रतिपन्नाऽपि' इति 'प्रतिपन्नाऽपि' इति च पाठद्वयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। मूले—'कर्त्राऽपि न निरूप्यते' इति निर्देशदर्शनात्।

**'उपश्लेषमिवार्थानाम्' इति ॥ १४५ ।**

अस्या द्वितीये पादे—'स करोति' इति, 'आकरोति' इति च पाठद्वयं दृश्यते तत्राद्यपाठ एव युक्तः। पुण्यराजीये—'असौ उपश्लेषं मेलनं करोति' इति व्याख्यादर्शनात्। 'अविचारिता' 'आपन्ना' इति विशेषणपदयोविशेष्यपदनिर्देशस्यौचित्याच्च।

अस्या एव व्याख्याने पुण्यराजीये—'पदार्थानां वासौ' इति, 'पदार्थानां चासौ' इति च पाठद्वयं दृश्यते। तत्र द्वितीय पाठ एव युक्तः। पक्षान्तरोपन्यासाभावेन वाशब्दार्थविकल्पासंगतेः। चकारार्थे वाशब्दप्रयोगस्तु भ्रामकत्वादयुक्तः।

**'साक्षाच्छब्देन जनिता' इति ॥ १४६ ।**

अस्या एव तृतीये पादेऽपि—'इति कर्तव्यतायाताम्' इति प्रथमान्त पाठ एव। प्रथमपादे द्वितीयान्तपाठे तु—तृतीयपादे—'इति कर्तव्यतायां ताम्' इति पाठः। अनयोः पाठयोः प्रथमान्त पाठ एव युक्तः। आदृतश्च विधिविवेके न्यायकणिकायाञ्च।

**'प्रमाणत्वेन तां लोक' इति ।। १४७ ।**

अस्या द्वितीये पादे—'सर्वः समनुगच्छति' इति, 'सर्वः समनुपश्यति' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। अस्या व्याख्याने पुण्यराजीये—'प्रमाणत्वेन पश्यति' इति पाठदर्शनात्। समनुगच्छति इत्यस्य समनुपश्यति इत्यर्थे लक्षणां—विनाऽनिर्वाहाच्च।

अस्या एव तृतीये पादे—'समारम्भाः' 'व्यवहाराः' इति पाठद्वयम्, 'प्रतायन्ते' 'प्रतीयन्ते' 'प्रवर्तते' इति पाठत्रयं च दृश्यते। तत्र प्रथमे पाठद्वये—'समारम्भाः' इति पाठ एवादर्तव्यः। वस्तूनां व्यवहाराणां च समारम्भबोधकत्वेन व्यापकत्वात्। अन्त्ये पाठत्रये तु—'प्रवर्तन्ते' इति पाठ एव युक्तः। प्रतायन्ते, प्रतीयन्ते इति पाठद्वयस्याप्यन्ते—प्रवर्तन्ते इत्यत्रैव पर्यवसानात्। प्रवर्तन्ते इति पाठस्यैव विधिविवेके सामदृतत्वाच्च।

**'यथा द्रव्यविशेषाणाम्' इति ।। १४८ ।**

अस्यास्तृतीये पादे—'मदादिशक्तयः' इति 'मन्दादिशक्तयः' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठो नेष्टार्थसमर्पक इति हेयः।

**'स्वरवृत्तिं विकुरुते' इति ।। १४९ ।**

अस्या द्वितीये पादे–'मधौ पुंस्कोकिलस्य कः' इति, 'मधौ पुस्कोकिलः कथम्', इति च पाठद्वयं दृश्यते। अस्या एव चतुर्थे पादे—'केन शिक्षिताः' 'शिक्षिताः कथम्' इति पाठद्वयं दृश्यते। उभयत्रापि पाठद्वये प्रथमपाठ एव युक्तः। आहारादिषु कः प्रयोक्ता मृगपक्षिणामित्यग्रिमकारिकायामुपसंहारानुरोधात्। किञ्च प्रथमपाठे स्वरविकृतेः शिक्षाया वा निषेधः प्रतीयते, द्वितीपाठे तु स्वरविकृतेः शिक्षाया वा न निषेधः किन्तु प्रकारस्य इति न द्वितीयपाठे अभीप्सितार्थसिद्धिः।

**'आहारप्रीत्यपद्वेष' इति ।। १५० ।**

अत्र—'आहारप्रीत्यभिद्वेषेति' पाठः क्वचित्। क्वचित्तु—'आहारप्रीतिविद्वेषेति पाठः। क्वचित्तु—'आहारणीत्यपद्वेष' इति पाठः। तत्रापद्वेषाभिद्वेषविद्वेषेषु विद्वेषेति पाठ एव युक्तः। प्रीतिविरोधित्वात्। अपद्वेषाभिद्वेषयोर्विद्वेषार्थेऽप्रसिद्धेश्च। विद्वेषपदे तदपेक्षयाऽल्पाक्षरत्वाच्च। नीतिस्तु न क्वापि जात्यन्वयप्रसिद्धेति नीतिपदं नात्र युक्तम्। नीतिस्तु समयवसात् परिस्थितिवसाच्च। क्वाचित् कदाचित् समाश्रियते इति नियतेति।

**'भावनानुगतादेतद्' इति ।। १५१ ।**

'भावनानुगमादेतत्' इति क्वचित् पाठः। स तु न युक्तः। आगमादित्यनेन सामानाधिकरण्यानुपपत्तेः।

**'स्वभावचरणाभ्यास' इति ।। १५२ ।**

अत्र—'स्वभावचरणाभ्यासयोगाद्दष्टोपपादिताम्' इति 'विशिष्टोपहिताम्' इति द्वितीयान्तं पदद्वयं क्वचित् । क्वचित्तु पदद्वयमपि प्रथमान्तम् । तत्र प्रथमान्तपाठ एव युक्तः । प्राचीनमते निपातेन इति पदेन कर्मत्वस्याभिधानात् । नव्यभूतेऽपि इति परिगणनया 'षड्विधामिति योजनायामुपपादितोपहितयोर्वेदनकर्मत्वासंभवाच्चेति' ।

**'यथा संयोगिभिर्द्रव्यैः' इति ।। १५३ ।**

अस्या अवतरणिकायां पुण्यराजीये—'पदार्थविचारोपक्रममाह' 'विचारोपक्रममाह' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । विचारक्रर्मणो निर्देशात् ।

अस्या एव प्रथमे पादे—'यथा संयोगिभिद्रव्यैः' इति, 'यथासंयोगि निद्रव्यैः' इति,'यथा संयोगिनिर्द्रव्यैः' इति पाठत्रयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु न युक्तः । अत्र पाठे संयोगिपदस्य व्यवहितेन संवन्धात् ।' प्रथमपाठे तु अव्यवहितेन संबन्धरूपासत्तिसत्वात् । 'यथा संयोगिनिर्द्रव्यैरिति' तृतीयपाठस्तु अनर्थकत्वाद् हेयः ।

अस्या एव द्वितीये पादे—'प्रयुज्यते' 'प्रवर्तते' इति पाठद्वयं दृश्यते । तत्राद्य पाठ एव युक्तः । प्रवर्तते इत्यस्य प्रयुज्यते इत्यत्रैव पर्यवसानात् ।न हि गोशब्देऽचेतने प्रयत्नरूपा प्रवृत्तिः संभवति ।

अस्या एव व्याख्याने पुण्यराजीये—'आकारवर्णसंस्थानादयः' इति, 'आकारावर्तसंस्थानादयः' इति, 'आकारवर्णसंत्यानादयः' इति पाठत्रयं दृश्यते । तत्र प्रथमपाठ एव युक्तः । द्वितीयपाठे आवर्तस्य रोमभ्रमिरूपस्य आकारे एवान्तर्भावसंभवात् । तृतीयपाठोऽपि न युक्तः । संस्त्यानस्य संघातरूपस्य संघातिनामपेक्षायां सन्निहितवर्णपदार्थस्य तदन्वयेऽक्षरसंघातप्रतीत्यापत्तेः । अक्षरसंघातस्य च गवि असंभवात् ।

**'संस्थानवर्णावयवैः' इति ।। १२५ ।**

अस्या द्वितीये पादे—'विशिष्टे यः प्रयुज्यते' 'विशेषे यः प्रयुज्येत' 'विशिष्टेऽर्थे प्रयुज्यते' इति पाठत्रयं दृश्यते । तत्राद्यपाठ एव युक्तः, अर्थसंगतेः । द्वितीयपाठस्तु न युक्तः । संस्थानवर्णावयवैरित्यस्यानन्वयापत्तेः । तृतीयपाठोऽपि न युक्तः । यच्छब्दाभावे उत्तरत्र तत्पदासंगतेः ।

**'संख्याप्रमाणसंस्थाननिरपेक्ष' इति ।। १५६ ।**

अस्या व्याख्याने पुण्यराजीये—'बहुलमिति' 'वहलम्' इति पाठद्वयं दृश्यते । तत्र प्रसिद्धत्वाद् बहुलशब्दप्रयोग एव समुचितः । अत्रैवाग्रे पुण्यराजीये—'शब्दा' इति, 'शब्द' इति, 'प्रवर्तन्ते' इति, 'प्रवर्तते' इति, पाठचतुष्टयं दृश्यते । तत्राद्ये पाठ-

द्वये प्रथम पाठ एव युक्तः। 'जात्यादिकं त्वार्थीकृत्य' इति दर्शनेन अस्य वाक्यस्य शब्द-सामान्यविषयकत्वेन बहुवचनोपादानस्यैवौचित्यात्।

**'संस्कारादिपरिच्छिन्न' इति कारिका ॥ १५७।**

अस्या उत्तरार्धे—'आहैकदेशं तत्त्वेन तस्यावश्यवर्तिता' इति, आहैकदेशतत्त्वेन तस्यावयववर्तिताम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। समादृतश्चैष पाठस्तदनुगुणं व्याचक्षाणेन पुण्यराजेन। तस्यावयववर्तितामिति द्वितीय-पाठस्तु न युक्तः। एकदेशतत्त्वेन इत्येतदर्थस्य पदान्तरानन्वयात्। अर्थासंगतेश्च। 'तस्यावयववर्तिनाम्' इति पाठस्तु अपार्थ एव।

अस्या एवावतरणिकायां पुण्यराजीये—'नेक्षिता नातिशब्दानामित्यस्याग्रे—'समुदायानुपातिता' इति, 'समुदायानुपातिनाम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे हि ईक्षतिकर्मणोऽनिर्देशेनार्थासंगतिः। अस्या एव चतुर्थे पादे—'जातिसंगता' इति, 'जातिसंश्रया' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे—जातिः संश्रयः—आश्रयो यासां व्यक्तीनामित्यर्थप्रतीत्या दृष्ट-विरोधात्।

**'येनार्थेनाभिसंबन्धम्' इति ॥ १५८।**

अत्र—'येनार्थेनाऽभिसंबन्धम्' इति, 'येनार्थेनाभिसंबन्धम्' इत्यपि पाठद्वयं दृश्यते। तत्र—'येनार्थेनाभिसंबन्धम्' इति प्रथमः पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु अर्थासंगतिः। तृतीयपाठेऽपि—अभिसंबन्धाभिधानयोरनन्वयः। कर्म-घञन्तत्वस्वीकारस्तु अगतिकगतिकः। सूत्रे—संज्ञायामित्यस्य दर्शनेन शिष्टप्रयोगानु-रोधेनैव तस्य स्वीकारात्—भाष्ये संबन्धपदस्य कर्मघञन्तस्य दर्शनेऽपि अभिसंबन्ध-पदस्य तदर्थेऽदर्शनात्। अतोऽभिसंबन्धमिति समुपलभ्यमानः पाठ एव युक्तः।

अस्या एव तृतीये पादे–'तदर्थापगमे' इति, 'तदर्थोपगमे' इति, पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु—'तस्य प्रयोगो विनिवर्तते' इत्यनेन सह विरोधः।

अत्र—'प्रयोगो विनिवर्तते' 'प्रयोगोऽपि निवर्तते' इति पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः, अपि शब्दप्रयोगे हि समुच्चयेन अर्थनिवृत्तिप्रयोगनिवृत्त्यो-रविनाभावः सूच्यते इति।

**'यांस्तु संभविनो धर्मान्' इति ॥ १५९।**

अस्या द्वितीये पादे—'अन्तर्णीय' 'अन्तर्नीय' इति पाठद्वयं दृश्यते। तत्राद्य-पाठ एव युक्तः। णत्वे विधेये—अन्तरित्यस्योपसर्गत्वातिदेशस्योपसंख्यानात्।

अस्या एव तृतीये पादे—'न सांनिध्यम्' ससांनिध्यम्' इति पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। स्वोपज्ञवृत्तौ पुण्यराजीये च नञर्थानुरोधेनैव व्याख्यानात्।

**'यथा रोमशफादीनाम्' इति ॥ १६० ।**

अस्या द्वितीये पादे—'व्यभिचारेऽपि दृश्यते' इति, 'व्यभिचारोऽपि दृश्यते' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठेऽर्थासंगतेः ।

**'दुर्लभं कस्यचिल्लोके' इति ॥ १६१ ।**

अस्याश्चतुर्थे पादे—'अर्थः कृत्स्नोऽनुमीयते' इति, 'अर्थः कुत्र न नीयते' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठेऽर्थासंगतेः ।

अस्या एव व्याख्यायां स्वोपज्ञवृत्तौ--'दधिमात्रदर्शने' इति पाठो दृश्यते । तत्र 'बालधिमात्रदर्शने' इति पाठः समुचितः प्रतिभाति । 'पटप्रावरणादिदर्शने' इति अग्रिमग्रन्थानुरोधात् ।

अस्या एव व्याख्याने पुण्यराजीये—'सकलमर्थस्वरूपम्' इति, 'सकलार्थस्वरूपम्' इति, पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थस्वरूपोद्देशेन सकलपरिच्छेदस्य विधेयत्वात् । समासे उद्देश्यविधेयभावप्रतीतेः ।

**'तथा जात्युत्पलादीनाम्' इति ॥ १६२ ।**

अत्र यथाशब्दपाठोऽपि क्वचिद् दृश्यते । स तु न युक्तः । अग्रे तथाशब्दस्यानुपादानात् । अत्र तथाशब्दपाठे तु पूर्वपद्ये यथाशब्दाध्याहारो न विरुध्यते ।

अस्या द्वितीये पादे–'सहचारिणा' इति, 'सहचारिणाम्' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । द्वितीयपाठस्य—'नित्यसंबन्धिनाम्' इत्यनेन गतार्थत्वात् ।

अस्या एव तृतीये पादे—'नित्यसंबन्धिनाम्' इति 'नित्यसंबन्धिना' इति च पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । 'गुणानाम्' इत्यनेन सामानाधिकरण्यसंभवात् ।

अस्या एव व्याख्याने पुण्यराजीये--'तत्सहचरितम्' 'तत्सहचारि' इति पाठद्वयं दृश्यते । तत्र द्वितीयपाठ एव युक्तः । प्रथमपाठे ताच्छील्यार्थस्य अनवगमात् ।

**'तस्मात्संभविनोऽर्थस्यत्' इति ॥ १६३ ।**

अस्यास्तृतीये पादे—'अदृष्टविप्रयोगोऽर्थः' 'अदृष्टविप्रयोगार्थः' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अर्थोद्देशेन अदृष्टविप्रयोगत्वस्य विधानात् । समासे उद्देश्यविधेयभावासंप्रत्ययात् ।

अस्या एव चतुर्थे पादे—'गम्यते' इति, 'वर्तते' इति पाठद्वयं दृश्यते । तत्राद्यपाठ एव युक्तः । अस्या एव व्याख्याने पुण्यराजीये—'वाच्यत्वेन गम्यते' इति व्याख्यादर्शनात् ।

**'ये शब्दा नित्यसंबन्धा' इति ॥ १६६ ।**

अस्या द्वितीये पादे—'विवेकज्ञातशक्तयः' इति, 'विवेके ज्ञातशक्तयः' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। समासेऽर्थसंदेहात्। विवेके सति इति पुण्यराजीये व्याख्यादर्शनाच्च।

अस्या एव व्याख्याने पुण्यराजीये—'शब्दार्थविभागे कृते' 'शब्दार्थप्रविभागे कृते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे प्रशब्दपाठवैयर्थ्यात्।

अत्रैवाग्रे पुण्यराजीये—'प्रकृतिप्रत्ययार्थविभागो व्यवस्थाप्यते' इति 'प्रकृति-प्रत्ययार्थप्रविभागे व्यवस्थाप्यते' इति च पाठद्वयं दृश्यते। कर्मनिर्देशसंभवात्। द्वितीय-पाठे तु कर्मनिर्देशाभावः प्रशब्दवैयर्थ्यञ्च दोषः।

**'यत्र चाव्यभिचारेण' इति ॥ १६७ ।**

अत्र—'यथा चाव्यभिचारेण' इति, 'यावच्चाव्यभिचारेण' इति पाठद्वयमपि दृश्यते। अस्मिन् पाठत्रये आद्यपाठ एव युक्तः। अस्य पाठस्य पुण्यराजीये प्रतीकरूपेण धृतत्वात्।

अस्या एव कारिकाया उत्तरार्धे तृतीयपादे—तत्रेतिप्रतिनिर्देश्यबोधकपद-निर्देशात्। द्वितीयपाठे—'तथा' इति, तृतीयपाठे—'तावत्' इति प्रतिनिर्देश्या-निर्देशाच्च।

अस्या एव तृतीये पादे—'न त्वेवम्' इति, 'तत्त्वेन' इति च पाठद्वयं दृश्यते। अत्राद्य पाठ एव युक्तः, अर्थसंगतेः। द्वितीयपाठे तु—'नियमोनुट्शबादिषु' इत्यस्य असांगत्यम्। तत्त्वेन इत्यत्र पदद्वयस्वीकारेऽपि व्यर्थमेव प्रतिपत्तिगौरवं समाश्रितं स्यात्।

अस्या एव चतुर्थे पादे—'नियमो नुट्शबादिषु' इति, 'नियमेन शबादिषु' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। द्वितीयपाठे तु अर्थासंगतिः।

अस्या एव व्याख्याने पुण्यराजीये—'तत्रैव नियमः' इति, 'तत्रैव नियत' इति च पाठद्वयं दृश्यते। तत्राद्य एव युक्तः। द्वितीयपाठे विशेष्यानिर्देशादनौचित्यम्।

अत्रैवाग्रे पुण्यराजीये—'शबविकरणार्था' इति, 'विकरणार्था' इति च पाठद्वयं दृश्यते। तत्र द्वितीयपाठ एव युक्तः। विकरणविशेषनिर्देशे कारणाभावात् फलाभावाच्च।

**'संभवे वाऽभिधानस्य' इति ॥ १६८ ।**

अत्र पुण्यराजीये—'शब्विकरणार्था इति चेत्' इत्यत्र 'विकरणार्था' इत्येव क्वचित्पाठः। स एव च युक्तः। उत्तरत्र—'कृताऽभिहितेषु विकरणाभाव इति सामान्येनाभिधानात्।

अत्र 'लक्षणं तु न कल्प्यते' इत्यत्र 'न कल्पते' इति कर्तरि लट् प्रयोगः क्वचिद् दृश्यते। तत्र कर्मणि लट् प्रयोग एव शोभनो भाति। एतत्कारिकावतरणावसरे पुण्यराजीये—'न तूपलक्षणार्थत्वं कल्पनीयम्' इति णिजन्तस्य कर्मणि अनीयरप्रत्ययान्तस्य प्रयोगदर्शनात्। लक्षणत्वं न कल्प्यते' 'लक्षणं तु न कल्प्यते' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः।

स्वोपज्ञवृत्तौ—'न तस्य लक्षणभावाभ्युपगमो युक्तः' इति व्याख्यादर्शनात्। अत्र लक्षणभाव उपलक्षणत्वम्।

अत्रैव पुण्यराजीये—'नियता एव–प्रातिस्विक्य इव' इत्यत्र—'प्रातिस्विक्य एव' इति पाठः क्वचिद् दृश्यते। स एव युक्तः। तथाहि—'नियता एव' इत्यस्य 'प्रातिस्विक्य एव' इति व्याख्यानम्। एवञ्चात्र इवशब्दपाठो न युक्तः। एवकारार्थलाभस्तु असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायात्।

अत्र—'संभवेनाभिधानस्य' इति क्वचित्पाठः। अत्र वाशब्दघटितः पाठ एव साधुः। पुण्यराजीये—'संभवे' इति सप्तम्यन्तप्रतीकदर्शनात्।

अत्रैव कारिकायाम्—'न कल्प्यते' 'न कल्पते' 'प्रकल्पते' इति पाठत्रयं दृश्यते। तत्र तृतीयपाठेऽर्थासंगतिः। अभिधानसंभवे लक्षणत्वप्रक्लृप्त्यसंभवात्। द्वितीयपाठोऽपि न युक्तः। अभिधानस्य संभवे—उपलक्षणत्वस्य कल्पनकर्तृत्वासंभवेन तन्निषेधाप्रसक्तेः। तस्य कल्पनाकर्मत्वस्यैव संभवेन तन्निषेधस्यैवौचित्यादिति।

## 'न कूपसूपयूपानाम्' इति ॥ १६९।

कूपयूपसूपानामिति पाठो दृश्यते। तत्र वर्णमातृकाक्रमाश्रयणेन अयमेव पाठो युक्तः, वर्णमातृकासु सकारापेक्षया यकारस्य प्राक्पाठात्। अस्या द्वितीये पादे—'अन्वयोऽर्थस्य दृश्यते' इति, 'अन्वयोऽर्थस्य विद्यते' इति च पाठद्वयं दृश्यते। तत्र द्वितीय पाठ एव युक्तः, स्वोपज्ञवृत्तौ—'तस्यान्वयाभावात्' इति व्याख्यादर्शनात्। 'दृश्यते' इति पाठे हि—'तस्यान्वयादर्शनात्' इति व्याख्यानं स्यात्।

## 'अन्वाख्यानानि विद्यन्ते' इति ॥ १७०।

एतत्कारिकावतरणे पुण्यराजीये—'अपोद्धारेणान्वाख्यातं पदभागयोः कार्यम्' इत्यत्र अन्वाख्यानमिति नकारघटितः पाठः शोभनः, तथैवार्थसंगतेः।

अत्रैव व्याख्यानावसरे पुण्यराजीये—'तत्र क्वचिदेव नैयत्येनाश्रित्यान्वाख्यानं क्रियते' इत्यत्र 'अनैयत्येन' इति पाठः क्वचिद् दृश्यते। स एव च युक्तः। 'कैश्चित् कथंचिदाख्याता निमित्तावधिसंस्कारैः' इत्युत्तरकारिकैकदेशदर्शनेन निमित्तानैयत्यस्यैव प्रतीतेः।

अत्र क्वचित्—'अथाख्यानानि विद्यन्ते' इति पाठो दृश्यते। स न युक्तः, स्वोपज्ञवृत्तौ—'भिन्नान्यन्वाख्यानानि दृश्यन्ते' इति व्याख्यादर्शनात्। पुण्यराजीये—'अन्वाख्यानानि इति' इति प्रतीकदर्शनाच्च।

अस्या एव चतुर्थे पादे—'किञ्चिदिष्यते' इति, 'किञ्चिदुच्यते' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, प्रवृत्तिनिमित्ताभिधानस्य 'अस्मात्पदादयमर्थो बोधव्यः', 'इदं पदमेतदर्थबोधकं भवतु' इति इच्छापूर्वकत्वेन प्रथमोपस्थिताया इच्छायाः परित्यागे कारणाभावात्।

अस्या एव व्याख्याने पुण्यराजीये—'किञ्चिदेवानैयत्येन' इति, 'किञ्चिदेव नैयत्येन' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'बहूनां संभवेऽर्थानां निमित्तं किञ्चिद् दृश्यते' इत्युत्तरार्धदर्शनेन अन्वाख्याने निमित्तानैयत्यस्यैवोपपत्तित्वात्।

## 'वैरवासिष्ठगिरिशा' इति ॥ १७१।

अत्र 'वैनवासिष्ठे'ति पाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः, 'वीरकर्म वैरम्' 'वीरेषु भवं वैरम्' इति स्वोपज्ञवृत्तौ व्याख्यादर्शनात्। पुण्यराजीये 'वैरेति' इति प्रतीकदर्शनाच्च।

## 'यथापथः समाख्यानम्' इति ॥ १७२।

अत्र—'पथाम्' इति बहुवचनान्तपाठोऽपि क्वचिद् दृश्यते। स तु न युक्तः, प्रथमोपस्थितैकवचनपरित्यागे कारणाभावात्। एकवचनान्तपाठे दोषाभावाच्च। अस्या द्वितीयपादे—'वृक्षवल्मीकपर्वतैः' इति, 'वृक्षवल्लिकपर्वतैः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। स्वोपज्ञवृत्तिपुण्यराजीयव्याख्ययोर्दर्शनेनाद्यपाठस्यैवौचित्यप्रतीतेः। वल्लिकशब्दाप्रसिद्धेश्च। वृक्षवल्लीकपर्वतैरिति पाठोऽपि न युक्तः। वल्लीकशब्दार्थयोरप्रसिद्धेः।

## 'अन्यथा च समाख्यानम्' इति ॥ १७३।

अत्र—'एकदेशेऽवधारणात्' इति चतुर्थपादे—'एकदेशावधारणात्' इति समस्तः पाठः क्वचिद् दृश्यते। स एव च युक्तः, अर्थसंगतेः। तथाहि—'किंशुको न पलाशो' इति वाक्यैकदेशस्य किंशुक इत्यस्य अवधारणात्—वाक्यात् पृथक्करणाद् नामत्वेन समाख्यानमिति अस्त्यर्थसंगतिरिति। प्रागुक्तस्य वाक्यस्य एकदेशे किंशुक इत्यत्र अवधारणात्—नामत्वनिश्चयादित्यर्थे तु नामत्वनिश्चये हेतुर्नोक्त इति न्यूनता। किञ्चैवमवधारणस्य नामत्वनिश्चयस्य समाख्याने नामत्वेनाख्यानरूपे हेतुत्वमप्यसाधितस्य न संभवति इत्यवधेयमिति।

अस्या एव व्याख्याने पुण्यराजीये—'तत्समाख्यानं करोति' इति, 'तत्समाख्यातं करोति' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः, अर्थसंगतेः।

द्वितीयपाठे तु अर्थासंगतिः। तथाहि—'तत् समाख्यातं' इत्यत्र व्यासे यत्पदेनोक्त-स्यावस्थाभेदस्य तत्पदेन परामर्शे नपुंसकत्वानुपपत्तिः। समासे तु विशिष्टशक्ति-स्वीकारेण तत्पदार्थे उद्देश्यत्वस्य समाख्यानकर्मकक्रियायां विधेयत्वस्य चाप्रतीतिः।

अत्रैवाग्रे पुण्यराजीये—'किंशुको नेति' इति, 'किंशुके नेति' इति च पाठद्वयं दृश्यते। तत्राद्य पाठ एव युक्तः। प्रथमाविभक्ति प्रथमोपस्थितां परित्यज्य तृतीया विभक्तिपर्यन्तानुधावने फलाभावात्। किञ्च 'किंशुको न पलाशे' इति वाक्यैकदेशा-वधारणे पलाशवृक्षे फलाभावेन शुकाभावो वाक्येन प्रत्याय्यते। 'किंशुकेन पलाशे क्रियते' इति वाक्यैकदेशावधारणे तु न पलाशे शुकाभावो बोध्यते, किन्तु तत्र शुक-क्रियायाः फलभक्षणरूपाया अभावः इति पलाशे फलाभावं दृष्ट्वा फलगृध्नोः शुकस्य तत्रोपवेशाभावेनाभाव एव वक्तुमुचित इति।

## 'कैश्चिन्निर्वचनं भिन्नम्' इति ॥ १७४।

अस्यास्तृतीये पादे—'गदतेर' इति, 'गर्दतेर्' इति च पाठद्वयं दृश्यते। तत्राद्य पाठो न युक्तः। गदतेर्व्यक्तवाग्वदनक्रियावाचित्त्वेन गवि तस्या असंभवात्। द्वितीयपाठस्तु युक्तः। नर्दनस्येव गर्दनस्यापि अव्यक्तशब्दत्वात्, तस्य च गवि संभवात्।

यत्तु भाष्यटीकायां हरिणा—'गच्छति, गदति, गर्जति वा गौरिति' इति व्युत्पत्ति-प्रदर्शनं तत्र गर्दति इत्येव पाठो युक्तः। 'गवतेर्' इति, 'गुवतेर्' इति च पाठद्वयं दृश्यते तत्राद्यपाठ एवं युक्तः गणपाठक्रमेण। भौवादिकस्य गुधातोः प्रागुपस्थित्या तत्परित्यागे कारणाभावात्। शब्दार्थकधातुसाहचर्येण शब्दार्थकस्यैव ग्रहणौचित्याच्च। अत्रैव—क्वचित् पुस्तके—'गडतेर्' इति पाठः। स तु न युक्तः। पूर्वसाहचर्यस्य पूर्वार्धवि-च्छिन्नत्वेन परसाहचर्यस्य बलीयस्त्वेन समानार्थकत्वेन च शब्दार्थकस्य गवतेरुपादान-स्यैवौचित्यात्गदतेः सेचनार्थत्वात्।

अस्याश्चतुर्थे पादे—'अनुदर्शितं, इति, 'अनुदर्शनम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। निर्वचनमनुदर्शितमिति संबन्धसंभवात्।

## 'गौरित्येवं स्वरूपाद्वा' इति ॥ १७५।

अस्यास्तृतीये पादे—'व्युत्पाद्यते न वा सर्वः' इति, 'व्युत्पाद्यते यथा सर्वः' इति, 'व्युत्पाद्यते न वा सर्वम्' इति पाठत्रयं दृश्यते। तत्रान्त्यपाठ एव पुण्यराजीये धृतो युक्तः। सामान्ये नपुंसकनिर्देशस्यैवौचित्यात्। द्वितीयपाठस्तु न युक्तः। 'यथा' इत्युद्देश्यस्य तथा इति प्रतिनिर्देश्यानिर्देशात्। आद्यपाठे सर्वं इति पुंस्त्वनिर्देशो न युक्तः। सामान्ये नपुंसकमित्यभ्युपगमात्। अस्याश्चतुर्थे पादे 'कैश्चित्तच्चोभयथेष्यते' इति, 'कैश्चिच्चोभयमिष्यते' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठ एव युक्तः। स्वरूप-निर्मितमुभयमेव वेति दर्शितम्' इति पुण्यराजीये व्याख्यादर्शनात्।

अस्या एव स्वोपज्ञवृत्तौ—'एकत्वादव्यावृत्तिभेदः स' इति पाठ क्वचिदुपलभ्यमानो न युक्तः। अर्थासंगतेः किन्तु—'एकत्वादिवृत्तिभेदस्तु' इति पाठस्तत्र साधुः। अस्मिन् पाठे अर्थसंगतिस्तु अम्बाकर्त्र्यामुपदर्शिता इति तत एव बोध्या।

**'सामान्येनोपदेशश्च' इति ॥ १७६ ।**

अस्यास्तृतीये पादे—'जात्यन्तरवदस्यापि' इति, 'जात्यन्तरवदन्नस्य' इति, 'जात्यन्तरपदं न्यस्य' इति च पाठत्रयं दृश्यते। तत्राद्य पाठ एव युक्तः। 'विशेषा एतेऽस्यैव जात्यन्तरवत् प्रतिपादका उच्यन्ते' इति पुण्यराजीये व्याख्यादर्शनात्। अन्यस्मिन् पाठद्वयेऽर्थासंगतेश्चेति।

**'अर्थान्तरे च यद् वृत्तम्' इति ॥ १७७ ।**

अस्या व्याख्याने पुण्यराजीये—'तदन्यस्मिंस्तुल्यरूपं न रूढावनुपज्यते' इति पाठः क्वचिद् दृश्यते'। क्वचिन्न। तत्रायं पाठो न युक्तः। एतदग्रे—'रूढौ च तुल्यरूपमित्यादिकस्य 'तत्त्वतस्तद्भिन्नमेव' इत्यन्तस्य व्याख्याग्रन्थस्य दर्शनेनास्य पाठस्यानुपयोगात्।

**'भिन्ना विजातीयधातू' इति ॥ १७८ ।**

अस्याश्चतुर्थे पादे—'चित्रं हि प्रतिपादनम्' इति, 'चित्रं हि प्रतिपादितम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'चित्रा हि प्रतिपादनोपाया' इति स्वोपज्ञवृत्तौ, पुण्यराजीये च—'इति प्रतिपादनवैचित्र्यम्', इति व्याख्यादर्शनेन आद्यपाठस्यैव युक्तत्वावगमात्।

**'एवञ्च वालवायादि' इति ॥ १७९ ।**

अत्र वालवायपदे दन्तोष्ठ्यादि पाठ एव युक्तः। प्रायेण सर्वेषु पुस्तकेषु तथोपलम्भात्। वालवायशब्दस्याव्युत्पन्नत्वेन तत्र बालशब्दप्रवेशसंभावनाया अप्यभावाच्च। तत्प्रवेशेऽर्थसंगत्यभावाच्च।

अस्या एव व्याख्यानावसरे पुण्यराजीये समुद्धृतपद्ये 'प्रकृत्यन्तरमेव वा' इति, 'प्रकृत्यन्तरमेव सा' इति च पाठद्वयं दृश्यते। तत्रान्त्यपाठो न युक्तः। स्त्रीलिङ्गेन तत्पदेन पुंनपुंसकयोः प्रागुक्तयोः परामर्शासंभवात्। पुण्यराजीये—'अथवाऽन्यो वृत्तिविषये विदूरशब्द उच्यते' इति व्याख्यादर्शनेन वाशब्दघटितस्याद्यपाठस्यैव युक्तत्वावगमाच्चेति।

अत्रैव—'वृत्तिविषये' इति, 'वृत्तिविषयः' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'तत्पुरुषे वर्तिपदार्थस्य प्राधान्यम्' बहुव्रीहौ तु अन्यपदार्थप्राधान्यम्' इति तत्पुरुषापेक्षया बहुव्रीहेर्गर्हितत्वात्।

अत्रैवाग्रे पुण्यराजीये—'भेदपक्षाश्रयणे च' इति, 'भेदपक्षाश्रयेणैव' इति पाठद्वयं दृश्यते। तत्रान्त्यपाठो न युक्तः। विशेष्यानिर्देशेन अर्थासंगतेः।

## 'अडादीनां व्यवस्थार्थम्' इति ॥ १८० ।

अस्या द्वितीये पादे—'पृथक्त्वेन प्रकल्पनम्' इति, 'पृथक्त्वेन विकल्पनम्' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। कोटिद्वयोपस्थितिं विना विकल्पनासंभवेनार्थासंगतेः। प्रकल्पनामिति पाठेऽर्थासंगतिस्तु स्पष्टैव।

## 'तथाहि संग्रामयतेः' इति ॥ १८१ ।

अस्यास्तृतीये पादे—'क्रियाविशेषाः संघातैः, 'क्रियाविशेषाः संघाते, 'क्रियाविशेषाः संपाते' इति पाठत्रयं दृश्यते। तत्र 'संघातैः' इति पाठ एव युक्तः। करणस्य क्रियायाः साधकतमत्वेनाधिकरणरूपकारकनिर्देशापेक्षयाऽभ्यर्हितत्वात्। किञ्च संघातैः प्रक्रम्यन्ते इति पाठे प्रकृष्टक्रमविशिष्टैः संघातैर्बोध्यन्ते इत्येष संगतोऽर्थः प्रतीयते। संघाते प्रक्रम्यन्ते इति पाठे तु न सोऽर्थोऽन्यो वा संगतोऽर्थः प्रतीयते इति सप्तम्यन्तपाठो हेयः। संघाते इति पाठे त्वत्यन्तमर्थासंगतिरिति सोऽपि हेयः।

अडादीनां व्यवस्थार्थमिति कारिकाया अवतरणे पुण्यराजीये—'पृथक्त्वकल्पनम्' इति, 'यथोक्तकम्पनम्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु न युक्तः। धातूपसर्गयोः पृथक्त्वेन कल्पनस्य प्रागुक्तत्वाभावात्।

तथाहि-संग्रामयतेरिति कारिकाव्याख्याने पुण्यराजीये—'असंग्रामयत' इति, 'असंग्रामयत्' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। संग्रामयतेरनुदात्तत्त्वेनात्मनेपदित्वात्।

## 'कार्याणामन्तरङ्गत्वम्' इति ॥ १८२ ।

अत्र—'एव धातूपसर्गयोः' इति द्वितीयपादे 'एवम्' इति पाठः क्वचिदुपलभ्यते, स एव युक्त इति पुण्यराजीये—'एवं धातूपसर्गाश्रयाणि यानि कार्याणि' इत्यादिव्याख्यादर्शनेन निश्चीयते।

अत्रैव पुण्यराजीये—'कारकाणां प्रवृत्तिविशिष्टक्रियायाम्' इत्यत्र 'विशिष्टक्रियाया' इति पाठः क्वचिदुपलभ्यते। स चायुक्तः अर्थासंगतेः।

अस्या द्वितीये पादे—'एवं धातूपसर्गयोः, 'एव धातूपसर्गयोः' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। 'अतः किं भवतीत्याह—कार्याणामिति। एवं धातूपसर्गाश्रयाणि यानि कार्याण्यन्तरङ्गाणीत्युच्यन्ते' इति पुण्यराजीये अवतरणिकाया व्याख्यायाश्च दर्शनात्। अत्र 'यानि कार्याणि अन्तरङ्गाणि इत्युच्यन्ते इति' इति शब्दद्वयघटितः पाठ इति शब्दद्वयवैयर्थ्याद् हेयः।

अस्या एव तृतीये पादे—'साधनैर्याति संबन्धम्' 'साधनैर्यदि संबन्धः' 'साधनैर्यदि संबन्धम्' इति पाठत्रयं दृश्यते। तत्र प्रथमपाठ एव युक्तः। अर्थसंगतेः। अन्यस्मिन् पाठद्वये तु कर्मान्वययोग्यक्रियाया अभावोऽर्थासंगतिश्च।

अस्या एव कारिकाया व्याख्याने पुण्यराजीये समुद्धृते भाष्यवार्तिके 'कारकाणां प्रवृत्तिविशिष्टक्रियायां' 'कारकाणां प्रवृत्तिविशिष्टक्रियाया' इति पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयपाठस्तु अर्थासंगत्याऽयुक्तः।

**'प्रयोगार्हेषु सिद्धः सन्' इति ॥ १८३ ।**

अस्याः पूर्वार्धे—'प्रयोगार्हेषु सिद्धः सन् भेत्तव्योऽर्थो विशिष्यते' इति, 'प्रयोगाद्येषु सिद्धैः सत् भेत्तव्यो हि विशिष्यते' इति च पाठद्वयं दृश्यते। तत्राद्यपाठ एव युक्तः। अर्थसंगतेः। द्वितीयस्तु पाठो भ्रष्ट एव। दशदाडिमादिवाक्यवदनर्थकत्वात्।

अत्र चतुर्थपादे 'क्रियामि'ति द्वितीयान्तपाठः प्रामादिकः, अर्थासंगतेः। तस्मात्प्रथमान्तपाठ एव युक्तः। अत्र पुण्यराजीये—'न तु पूर्वकाल आख्याते विशेषणयोगः' इत्यत्र 'न तु' इत्यस्य स्थाने 'ननु' इति पाठः क्वचिदस्ति, स चासंगतः, अग्रेऽनिषेधात्।

अत्रैवाग्रे पुण्यराजीये—'तदाऽव्युत्पन्नायास्तस्याः' इत्यत्र—'अनुत्पन्नाया' इतिपाठः साधुः। वैयर्थ्यात्, अर्थान्तरप्रतीतिकारित्वाच्च। अत्रैव पुण्यराजीये 'कथंचित्……ष सम्बन्धः' इत्यत्र चित्शब्दरहितः पाठः क्वचिद् दृश्यते, स एव च युक्तः। अर्थसंगतेः।

**'बुद्धिस्थादभिसम्बन्धात्' इति ॥ १८६ ।**

अत्र पुण्यराजीये—'धातूपसर्गयोः सम्बन्धे' इत्यत्र 'सम्बन्धः' इति प्रथमान्तपाठः क्वचिदुपलभ्यते। स तु न युक्तः। तथा सति वाक्यभेदप्रसंगात्। अर्थासंगतेश्च।

**'क्वचित् सम्भविनो भेदाः इति ॥ १८७ ।**

अत्र द्वितीयपादे—'केवलैरभिदर्शिताः' इत्यत्र—'केवलैरनिदर्शिताः' इति पाठः क्वचिदुपलभ्यते स एव च युक्तः। तथा सत्येव हि—'उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना' इत्युत्तरार्धं संगच्छते।

**'स्वादिभिः केवलैर्यच्च' इति ॥ १८९ ।**

अत्र पुण्यराजीये—'उभयवादिसंमतानेकार्थयजत्यादिधातुवत्' इत्यत्र 'अनेकार्थं' इति पदं क्वचित्पुस्तके नास्ति। अनेकार्थेतिपदरहितपाठ एव च युक्तः। यजतेरनेकार्थत्वाव्यभिचारेण तस्य तद्विशेषणत्वानुपपत्तेः।

**'समुच्चिताभिधानेऽपि' इति ॥ १९७ ।**

अस्यावतरणावसरे पुण्यराजीये—

प्रतिप्रयोगं जात्यङ्गे संबन्धमुपगच्छति ।
विशेषणं ततो धर्मान् जातिस्थान् प्रतिपद्यते ॥

इत्यत्र 'प्रतिप्रयोगे' इति सप्तम्यपाठः, 'प्रतिप्रयोगजात्य.....' इति समस्तपाठो वा न युक्तः । आद्ये जात्यङ्गे इत्यस्य विशेषणत्वशङ्काक्रान्तेः । द्वितीये चार्थसंगतेः । तस्य संबन्धविशेषणत्वात् । 'जातिस्थान्' इत्यस्य स्थाने 'जातिस्तान्' इति पाठोऽपि क्वचिदुपलभ्यमानो न युक्तः । विशेषणमित्यस्य प्रतिपद्यते इत्यत्र कर्तृत्वाद् जातिस्तानिति पाठेऽर्थासंगतेः ।

**'जनयित्वा क्रिया काचित्' इति ॥ १९७ ।**

अत्र—'जनयित्वा क्रियां कांचित् संबन्धो विनिवर्तते' इत्यत्र—'जनयित्वा क्रिया काचित् संबन्धं विनिवर्तते' इति पाठः साधुरिति अत्रत्यपुण्यराजीयव्याख्यानदर्शनेन प्रतीयते । 'क्रिया काचित्संबन्धित्वे' इति पाठस्तु क्वाचित्कः सर्वथोपेक्षणीय एव । जनयित्वा इत्यस्य कर्मालाभात् । 'संबन्धित्वे विनिवर्तते' इत्यर्थस्यासंगतेश्च । 'सम्बन्धं जनयित्वा क्रिया विनिवर्तते' इति पुण्यराजीयव्याख्यानविरोधाच्च ।

**'तत्र षष्ठी प्रतिपदं' इति ॥ १९८ ।**

अत्र पुण्यराजीये 'यदि शेषत्वस्यापि यदि शेषत्वेनास्य विवक्षिताःस्युः' इति वाक्ये—'यदि शेषत्वस्यापि' इति पाठोऽधिकः, असंबद्धत्वात् । अत्र 'अस्य' इत्यस्य स्मरणस्येत्यर्थः ।

अत्रैवाग्रे पुण्यराजीये—'प्राप्ता प्रतिपदं षष्ठी' इत्यत्र प्रोक्ता इति पाठो युक्तः । क्वचिदुपलभ्यते च स एव ।

**'येन क्रियापदाक्षेपः, इति ॥ २०० ।**

अत्र पुण्यराजीये—'युज्यते इति दृश्यते' इत्यत्र 'दृश्यताम्' इति पाठः क्वचिद् दृश्यते । स तु न युक्तः । उत्तरत्रोदाहरणोपन्यासात् । उदाहरणं हि सिद्धं भवति । लोटा तु तस्य साध्यत्वं प्रतीयेत ।

**'तिष्ठतेरुपयोगश्च' इति ॥ २०१ ।**

अत्र पुण्यराजीये—'तिष्ठतेरुपयोग आक्षेपः' इत्यत्र 'व्याक्षेपः' इति पाठः क्वचिद् दृश्यते । स तु न युक्तः, वेर्वैयर्थ्यात् ।

**'क्रियाया द्योतको नायं' इति ॥ २०४ ।**

अत्र पुण्यराजीये—'नैवायं क्रियाद्योतकः' इत्यत्र 'नायम्' इत्येवकाररहितः पाठः क्वचिदुपलभ्यते । स एव युक्तः । क्रियायां तस्यादर्शनात्, आनर्थक्याच्च ।

**'अनर्थकानां संघातः' इति ॥ २०५ ।**

अस्या अवतरणावसरे पुण्यराजीये—'सप्रपञ्चपदार्थभेदमुपपादयिष्यति' इत्यत्र 'सप्रपञ्चम्' इत्यसमस्तः पाठः क्वचित्समुपलभ्यते । स एव च युक्तः । सप्रपञ्चमित्यस्य-उपपादयिष्यति इत्यत्र क्रियाविशेषणत्वात् ।

अत्रैवाग्रे पुण्यराजीये—'जातिर्वा द्रव्यमेव च' इत्यत्र 'द्रव्यमेव वा' इति पाठः क्वचिद् दृश्यते । स एव च युक्तोऽपि । उपक्रमे वाशब्दस्यैव सत्त्वात् ।

अत्रैवाग्रे पुण्यराजीये—'एवमखण्डवाच्यवादिना' इत्यत्र 'एवमखण्डवादिना' इति पाठः क्वचिद् दृश्यते । स एव तु न युक्तः । वाक्यार्थस्यैवाखण्डत्वसखण्डत्वयो-रत्र विचार्यत्वात् ।

अत्रैवाग्रे पुण्यराजीये—'निरुक्तकारमतानुसारेण' इत्यत्र 'निरुक्तकारवचना-नुसारेण' इति पाठः क्वचिद् दृश्यते । स तु न युक्तः । मतस्य व्यवस्थितत्वात् । वचनस्य तु नानार्थकत्वेनाव्यवस्थितत्वात् । व्यवस्थार्थं तात्पर्याद्याश्रयणे गौरवात् ।

**'अर्थवद्भ्यो विशिष्टार्थः' इति ॥ २०८ ।**

अत्र पुण्यराजीये—'इति नास्त्यवयवार्थवद्भ्यो व्यतिरिक्तः संघातार्थस्य संभवः' इत्यस्य स्थाने 'इति नास्त्यवयवार्थव्यतिरिक्तसंघातार्थसंभवः' इति पाठः क्वचित्समुप-लभ्यते । स एव युक्तश्च । उपपन्नार्थकत्वात् ।

**'वर्णेन केनचिन्न्यूनः' इति ॥ २१४ ।**

अत्र पुण्यराजीये—'न्यूनवर्णोऽपि पूर्ववर्णः' इत्यत्र न्यूनवर्णेनापि पूर्ववर्णः इति पाठो युक्तः । एवं सत्यर्थसंगतेः ।

**'पदवाच्यो यथा नार्थैः' इति ॥ २१६ ।**

पुण्यराजीये—'यथा नैव पदानां चान्यः कश्चिदर्थोऽस्ति' इत्यत्र 'चान्य' इत्यस्य स्थाने 'वाच्यः' इति पाठः क्वचिद् दृश्यते । स एव च समुचितः । 'सत्यपि वातच्छ्रवणकाले तदर्थप्रत्यये' इत्याद्युत्तरग्रन्थस्वारस्यात् ।

**'कश्च साधनमात्रार्थान्' इति ॥ २१९ ।**

अत्र पुण्यराजीये—'यदा च पदानि सत्यार्थानि विद्यन्ते' इत्यत्र 'यदा' इत्यस्य स्थाने यदि इति पाठो दृश्यते क्वचित् । किन्तु स पाठो न युक्तः । उत्तरत्र तदा शब्द-प्रयोगदर्शनेन दाप्रत्ययान्तयच्छब्दप्रयोगस्यौचित्यात् । यत्तदोरेकार्थकत्वस्य लोक-प्रसिद्धत्वात् ।

अत्रैवाग्रे पुण्यराजीये 'अवयवानां सत्यार्थत्वे' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तोऽर्थसंगते पूर्वपाठे तदसंगतेः ।

**'गर्गा इत्येक एवायं' इति ॥ २२१ ।**

अस्यावतरणे पुण्यराजीये—'अखण्डसमुदायो वाक्यार्थोऽभिधीयते' इत्यत्र 'वाक्यार्थे' इति सप्तम्यन्तपाठः क्वचित् दृश्यते । स च न युक्तोऽर्थासंगतेः ।

**'यच्च द्वन्द्वपदार्थस्य' इति ॥ २२३ ।**

अत्र पुण्यराजीये—'पदार्थस्य वाक्यार्थव्यतिरेकेणासंभवात्' इत्यत्र 'वाक्यार्थ-व्यतिरेकेण' इति पाठः क्वचिद् दृश्यते । स एव च युक्तः ।

अत्रैवाग्रे—'वाक्यार्थव्यतिरेकेण सति च पदार्थे' इति पाठदर्शनात् । पूर्व-पाठेऽर्थासंगतेश्च ।

अत्रैवाग्रे पुण्यराजीये—'केवलव्यावृत्तारूपे विशिष्टे' इत्यत्र 'केवलम्' इति व्यस्तपाठः क्वचिदुपलभ्यते । स एव च युक्तः । केवलमित्यस्य आभाति इति क्रियायामन्वयस्यैवौचित्यात् । 'न तु वास्तवोऽत्र' इत्याद्युत्तरवाक्यस्वारस्याच्चेति ।

**'प्रतिपादयता वृत्तिम्' इति ॥ २२६ ।**

एतत्कारिकाया अवतरणे पुण्यराजीये—'यदि च पदपदार्थासंभवः' इत्यत्र—'यदि च पदार्थासंभव इत्येव' पाठ उपलभ्यते क्वचित् । स एव च युक्तः । अग्रे 'अर्था-भिधानमनुपपन्नम्' इति पदार्थस्यैवोपसंहारे उपन्यासात् ।

**'अभेदादभिधेयस्य' इति ॥ २२७ ।**

अत्र पुण्यराजीये—'प्रतिपादयिष्यते' इत्यस्य स्थाने 'प्रतिपादयिष्यति' इति-पाठः क्वचिदुपलभ्यते । स एव युक्तश्च । प्रतिपादनस्य परार्थत्वात् ।

**'अन्वाख्यानस्मृतौ ये' इति ॥ २३१ ।**

अत्र तृतीयपादे—'निर्दिष्टार्थप्रकृत्यर्था इत्यत्र--'निर्दिष्टास्ते प्रकृत्यर्थाः' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । इत्येतत्कारिकाव्याख्यानस्य पुण्यराजी-यस्य दर्शनादवसीयते । तत्र हि—'ये प्रत्ययविधाने प्रत्यर्था निबन्धनं निर्दिष्टास्तस्य एव स्मृत्यन्तरे प्रकृत्यर्था निबन्धनमुदाहृताः' इत्युक्तम् ।

**'अनिबद्धं निमित्तेषु' इति ॥ २३४ ।**

अत्र पुण्यराजीये—'विद्यायां शास्त्रोपाया इव लक्ष्यन्ते' इत्यत्र—'विद्यायां शास्त्राण्युपाश्रा इव लक्ष्यन्ते' इति पाठः क्वचिदुपलभ्यमान एव युक्तः । अन्यथाऽर्था-संगतेः' ।

**'अथाभ्यासं हि' इति ॥ २३५ ।**

अत्र प्रथमपादे—'अथाभ्यासं हि'—इत्यस्य स्थाने 'यथाभ्यासं हि' इति पाठः क्वचिदुपलभ्यमानः प्रकृतवाक्यार्थोपपत्त्यनुरोधेन युक्तः प्रतिभाति ।

**'घटादिदर्शनाल्लोकः' इति ॥ २३७ ।**

अत्र पुण्यराजीये—शाश्वतमपि ब्रह्मादिमदिति लोके व्यपदिश्यते इत्यत्र 'लोकै-र्व्यपदिश्यते' इति पाठः क्वचिदुपलभ्यते । व्यपदेशकर्तृत्वस्य लोकेषु प्रसिद्ध्यैव लाभ-

संभवात् । सप्तम्यन्तपाठस्तु युक्तः । वेदे ब्रह्मणो नित्यत्वव्यपदेशेन तद्व्यावृत्त्यर्थं लोकपदस्य सप्तम्यन्तस्योपन्याससार्थक्यात् ।

**'अन्यथा प्रतिपाद्यार्थं' इति ।। २३९ ।**

अत्र पुण्यराजीये—'सत्यभूताः' इत्यस्य स्थाने —'सत्त्यं भूताः' इति पाठः क्वचिद् दृश्यते । स चार्थासंगत्या हेयः । अत्रैवाग्रे पुण्यराजीये—'अन्यथा प्रतिपद्यते' इत्यस्य स्थाने 'अन्यथा प्रतिपद्य' इति ल्यबन्तपाठः क्वचिद् दृश्यन्ते । स एव युक्तोऽपि। ल्यबन्तपाठे हि एकवाक्यता । आख्यातपाठे वाक्यभेद इति विशेषात् ।

**'उपात्ता बहवोप्यर्था' इति ।। २४० ।**

अत्र चतुर्थचरणे—'तस्मात्तास्तत्र नाश्रयेत्' इति अनुस्वाररहितः पाठ उपलभ्यमानो न युक्तः । अर्थासंगतेः । पुण्यराजीये सानुस्वारपाठस्यैवोल्लेखाच्च । अत्रैव पुण्यराजीये—'पदार्थप्रतिभाससमये' इत्यस्य स्थाने 'पदार्थप्रतिभासमये' इति पाठः क्वचिदुपलभ्यते, स चायुक्तः । अर्थासंगतेः ।

**'वृक्षो नास्तीति वाक्य' इति ।। २४१ ।**

अस्या अवतरणे—'सत्यत्वमत्र' इत्यस्य स्थाने 'सत्त्यत्वमात्रम्' इति पाठः क्वचिदुपलभ्यते। स चायुक्तः। सत्त्यत्वमात्रमित्यनेन हि—सत्त्यत्वमेव युक्तं न तु असत्त्यत्वमपि इत्यर्थः प्रतीयते, न च वाक्यवाक्यार्थयोरमन्यत्वविशिष्टं सत्त्यत्वं कस्यिचिदभिप्रेतं यद् व्यवच्छिद्येत । तस्मात्पूर्वपाठ एवात्र युक्तः ।

अत्रैव पुण्यराजीये—'तदा वृक्षलक्षणे पदार्थे व्यवस्थिते न सम्बन्धस्तस्य नोपपद्यते' इत्यत्र 'तदा वृक्षलक्षणे पदार्थे वाक्ये व्यवस्थिते नञासम्बन्धस्तस्य नोपपद्यते' इत्येवं पाठो युक्तः प्रतिभाति । यद्यपि क्वचित् 'व्यवस्थिते' इत्यतः प्राग्—'वाक्ये' इति पदं दृश्यते, तथापि तत्र 'न सम्बन्ध' इत्यत्र 'नञा सम्बन्धः' इति पाठो न दृश्यते ।

अत्रैवाग्रे पुण्यराजीये—'लब्धात्मलाभस्य' इत्यस्य स्थाने 'लब्धात्मकस्य' इति पाठो युक्तः । अन्यथाऽर्थपुनरुक्तेः ।

अत्रैवाग्रे पुण्यराजीये—'निवृत्तासाविति' इत्यस्य स्थाने—'निवृत्तोऽसाविति' इति पाठः क्वचिद् दृश्यते । स एव च युक्तः । असावित्यनेन वृक्षपदार्थस्य परामर्शात् ।

**'विच्छेदप्रतिपत्तौ च' इति ।। २४२ ।**

एतत्कारिकाव्याख्याने पुण्यराजीये—'बुद्धिस्त्वर्थालम्बनात् शब्दाभिधेयत्वमर्हति' इत्यत्र—'अर्थालम्बना न शब्दाभिधेयत्वमर्हति' इति पाठो युक्तः । 'अशब्दवाच्या सा बुद्धिरि'ति एतत्कारिकायाः तृतीयपादानुरोधात् ।

**'अथ यज्ज्ञानमुत्पन्नं' इति ।। २४३ ।**

अत्र 'अथ यज्ज्ञातमुत्पन्नम्' इत्यत्र 'ज्ञातमि'त्यस्य स्थाने 'ज्ञानम्' इति पाठो युक्तः । नञा ज्ञानमिथ्यात्वस्यैव प्रतिपिपादयिषितत्वात् । एवमेव हि उत्तरार्धं संगच्छते नान्यथा इत्यपि बोध्यम् ।

**'विरुद्धं चाभिसम्बन्धम्' इति ॥ २४६ ।**

अत्र—'विरुद्धवदार्थप्रतिभासावसरे' इत्यत्र 'वदार्थ' इत्यस्य स्थाने 'पदार्थ' इति पाठो युक्तः । अर्थसंगतेः ।

**'स्तुतिनिन्दाप्रधानेषु' इति ॥ २४७ ।**

अत्र द्वितीयपादे—'वाच्येषु' इत्यस्य स्थाने 'वाक्येषु' इति पाठो युक्तः । एवमेव हि उत्तरार्धस्वारस्येन प्रतीयते । अत्रैव व्याख्याने पुण्यराजीये—'परार्थसंपादनषाड्गुण्येन' इत्यत्र परार्थसंपादनसाद्गुण्येन' इति पाठो युक्तः, तथैवार्थसंगतेः ।

**'एकमाहुरनेकार्थम्' इति ॥ २५० ।**

अस्या व्याख्याने पुण्यराजीये—'तदेवमेतैस्त्रिभिः पक्षैश्चत्वारोऽपि पक्षाभिहिता द्वादश संपद्यन्ते' इत्यत्र 'पक्षाभिहिता' इत्यस्य स्थाने क्वचित् 'पक्षाभेदिता' इति व्यस्तः पाठः समुपलभ्यते । स एव च युक्तः । 'पक्षाभिहिता' इत्येवं समस्तपाठे हि अभिहितपक्षा—इति साधुः स्यात् । अभिहितत्वस्य पक्षविशेषणत्वेन पूर्वनिपातप्रसंगात् । किञ्चास्मिन् पाठे 'त्रिभिः पक्षैरि'त्यस्य करणत्वोपपत्तये 'भेदिता' इत्यध्याहर्तव्यं स्यात् इति वरं भेदिता इत्यस्य पठनमेव ।

**'यौगपद्यमतिक्रम्य' इति ॥ २५१ ।**

अस्या अवतरणे पुण्यराजीये— ततः किमित्यत आह' इत्यत्र 'ततः किमित्याह' इति पाठः क्वचिद् दृश्यते । स न युक्तः । 'ततः किम्' इत्यस्य वाक्यस्य कारिकायामनुक्तेः । ततः किमित्याशङ्कातः—अस्याः कारिकाया उक्तिरिति तु युज्यते वक्तुम् ।

**'यथा सास्नादिमान्' इति ॥ २५२ ।**

अस्या व्याख्याने पुण्यराजीये—'स्वरूपं बाह्यश्च' इत्यत्र क्वचित्पुस्तके—'बाह्यञ्च' इति पाठः । स च न युक्तः । अर्थस्य विशेष्यत्वेन पुंलिङ्गपाठस्यैव युक्तत्वादिति ।

**'एकत्वं तु स्वरूपत्वात्' इति ॥ २५७ ।**

अत्र 'स्वरूपत्वात्' इत्यस्य स्थाने 'सरूपत्वात्' इति पाठो युक्तः । तथैवार्थसंगतेः । तथाहि—'स्वरूपत्वात्' इति पाठे अत्यन्तभेदेऽपि स्वरूपत्वादेकत्वमित्यर्थो न संगच्छते ।

**'तान्याम्नायान्तराण्येव' इति ॥ २५९ ।**

अत्र 'कश्चिदेव 'तु' इति प्रथमान्त एव युक्तः । न तु तृतीयान्तपाठः । पुण्यराजीये—'कश्चिदेव मन्त्रः पठ्यते' इति व्याख्यादर्शनात् । अत्रैव पुण्यराजीये 'वेदे मन्त्राः पठिताः' इत्यत्र 'वेदमन्त्राः' इति समस्तपाठः क्वचिदुपलभ्यते । स न युक्तः

तथा सति पठिता इत्यस्याधिकरणाप्रतीतेः। अधिकरणबोधनञ्च—वेदे पठितानामपठितोपलक्षणत्वमित्यस्यार्थस्य प्रतिपादनायावश्यकम्।

अत्रैवाग्रे पुण्यराजीये—'पठितानाञ्चोपलक्षणार्थेति प्रदर्शितम्' इत्यत्र—'अपठितानाञ्च' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। वेदे पठिता हि मन्त्रा अपठितानामुपलक्षणार्था न तु अपठिताः पठितानामिति।

**'शब्दस्वरूपमर्थस्तु' इति ॥ २६० ।**

अस्या अवतरणे हि पुण्यराजीये उक्तम्—'अथ स्वरूपार्थमेव पाठः सर्वेषां वैदिकानां कैश्चिदुच्यते इत्याह' इति।

अत्र द्वितीयपादे—'पाठोऽन्यैरुपवर्ण्यते' इत्यत्र—'पाठेऽन्यै' रिति क्वचित्पुस्तके पाठ उपलभ्यते। अयमेव च युक्तः। एवं पाठे हि एषा पदयोजना भवति। 'अन्यैस्तु पाठे—मन्त्राणां वेदे पाठे—शब्दस्वरूपमर्थः=प्रयोजनम्—शब्दस्वरूपप्रतीतिरेव प्रयोजनम् उपवर्ण्यते इति। एषैव च पदयोजना पुण्यराजसंमता।

**'अन्या संस्कारसावित्री' इति ॥ २६१ ।**

अत्र कारिकाव्याख्यानावसरे पुण्यराजीये—'सारूप्यात्त्वेकत्वव्यवहारस्तत्र' इत्यत्र 'एकत्वं व्यवहार' इति व्यस्तपाठः क्वचिदुपलभ्यते। स चायुक्तः। एकत्वव्यवहारयोः सामानाधिकरण्यानुपपत्तेः।

**'अनेकार्थत्वमेकस्य' इति ॥ २६३ ।**

अस्या अवतरणे—'गौणमुख्यविभाग उपसंहरन्नाह' इति 'इति' पदरहितः पाठः क्वचिद् दृश्यते, स चायुक्तः। अर्थासंगतेः। विभागान्तस्य पदस्य द्वितीयान्तत्वे तु स्यादप्यर्थसामञ्जस्यमिति।

अत्रैव पुण्यराजीये व्याख्यानावसरे—'अनेनैकशब्ददर्शनेऽपि' इत्यस्य स्थाने—'अनेकशब्ददर्शनेऽपि' इतिपाठः क्वचिदुपलभ्यते, अयमेव च पाठो युक्तः। अस्मिन्नेव पाठे 'सादृश्यादभेदे' इत्युत्तरग्रन्थसंगतिः। नह्येकशब्ददर्शने सादृश्यमुपपद्यते। भेदे हि सादृश्यम्, न त्वभेदे इत्यर्थस्य सर्वसंमतत्वात्।

**'अर्थप्रकरणापेक्षो' इति ॥ २६४ ।**

अस्या अवतरणे—'निमित्तान्तरं दर्शयितुम्' इत्यत्र—'निमित्तान्तरमुपदर्शयितुम्' इति क्वचित्पाठः। स चायुक्तः। अत्र हि निमित्तान्तरस्य साक्षात्प्रदर्शनम्, न तूपदर्शनम्। उपदर्शनं हि केनचिल्लिङ्गेन प्रदर्शनम् इति।

**'स्वार्थे प्रवर्तमानस्य' इति ॥ २६७ ।**

अत्र पुण्यराजीये—'असदेतत्' इत्यस्य स्थाने 'असदेतत्त्वम्' इति पाठः क्वचित्समुपलभ्यमानो हेय एव, अर्थासंगतेः। अत्रैवाग्रे—'शक्तिभेदाश्रयेण कल्पितस्य भेदस्य'

इत्यत्र 'शक्तिभेदाश्रयेण' इति पाठः क्वचिद् दृश्यते, स एव च युक्तः। अत्रैव हि पाठे शक्तिभेदस्य शब्दभेदोपपादकत्वं प्रदर्शितं भवति इति।

**'धुरारादिति भिन्नेऽर्थे' इति ॥ २६८।**

अत्र पुण्यराजीये—'तत्रैतयोरर्थप्रकरणादिनाऽर्थनिर्णयः। ततश्चात्रापि गौण-मुख्यभावः स्यान्न चैतदिष्टम्, अनयोरुभयत्रापि मुख्यार्थत्वमिष्यते' इत्यत्र कोष्ठकान्त-र्गतः पाठः क्वचिन्नोपलभ्यते। किन्तु तस्योपलब्धिरेव युक्ता। अन्यथाऽर्थासंगतेः।

**'वाक्यस्यार्थात् पदार्थानां' इति ॥ २६९।**

अत्र चतुर्थचरणे—'कस्यैकस्योपपद्यते' इत्यत्र 'कस्य' इत्यस्य स्थाने 'तस्य' इति पाठो युक्त इति केचिदाहुः। तेषामयमाशयः। तस्य—वाक्यस्य, एकस्य-अखण्डस्य, शब्दान्तरेण—अपोद्धृतेन गौणेन मुख्येन वा शब्देन वाक्याद् भिन्नेन, सम्बन्ध उपपद्यते इति। पुण्यराजीयदर्शनेन तु—'कस्य' इति पाठ एव युक्त इति प्रतीयते। अत्रैष निर्णयः। तस्य इति पाठ एव युक्तः। तथा हि—'इदानीमखण्डपक्षमाश्रित्य गौण-मुख्यतामाह' इति हि अस्याः कारिकाया अवतरणं पुण्यराजीये दृश्यते। तेन चाखण्ड-वाक्यपक्षे गौणमुख्यभावस्योपपत्तये इयं कारिका प्रवृत्तेति प्रतीयते। 'कस्यैकस्य' इति पाठे तु उपपत्तिराक्षिप्यते इति विरुद्धमापद्यते इति।

अत्रैव पुण्यराजीये—'पदपदार्थासद्भावे कीदृश' इत्यत्र 'पदपदार्थसद्भावे' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। अतश्चाखण्डमेव वाक्यं वाक्यार्थस्य प्रत्यायकमिति इति पूर्वसंदर्भेण सह विरोधात्।

अत्रैवाग्रे पुण्यराजीये—'पदपदार्थविभागमुपकल्प्य' इत्यत्र 'पदपदार्थभागम्' इति पाठः क्वचिदुपलभ्यते। स एव तु युक्तः। तथाहि—विभागकल्पनाया अपि भागकल्पनार्थत्वेन भागकल्पनाया एव प्राधान्येनास्यैव पाठस्य युक्तत्वमिति।

**'यच्चाप्येकं पदं दृष्टं' इति ॥ २७०।**

अस्या व्याख्याने पुण्यराजीये 'चरितक्रियत्वाद्' इत्यत्र 'चरति क्रियत्वाद्' इति पाठः क्वचिद् दृश्यते। स चायुक्तः, अर्थासंगतेः।

**'यच्च कोऽयमिति प्रश्ने' इति ॥ २७१।**

अत्र द्वितीयचरणे 'इति चोच्यते' इत्यत्र 'इति वोच्यते' इति पाठः क्वचिदुप-लभ्यते। स एव तु युक्तः। व्यवहारानुरोधेन विकल्परूपार्थस्यैवात्राभिप्रेतत्वात्। न हि व्यवहारे—कोऽयमिति प्रश्ने गौरश्व इति समुच्चितः प्रयोगो दृश्यते इति।

**'विपर्यासादिनार्थस्य' इति ॥ २७४।**

अस्या व्याख्यानावसरे पुण्यराजीये—'अध्यारोपिततद्भावोऽयं विपर्यास' इत्यत्र 'विपर्यास' इत्यस्य स्थाने 'विपर्यय' इति पदं क्वचिद् दृश्यते। स तु न युक्तः।

तथाहि—आरोप्यारोपविषययोर्भेदाज्ञाने सति—वैपरीत्येन-विरुद्धधर्मवत्तया-अयनं ज्ञानं विपर्ययपदार्थः। इण् धातोर्गत्यर्थकस्य ज्ञानार्थकत्वसंभवात्। विपर्यासपदार्थस्तु वैपरीत्येन विरुद्धधर्मवत्तया आसनं स्थापनमिति। तयोर्भेदज्ञाने सति इच्छया अन्यस्मि-स्तद्धर्माध्यारोपणमिति। विपरिपूर्वकस्य जासधातोरन्तर्भावितण्यर्थस्य घञि-प्रयोगः। ण्यन्तस्य वा बाहुलकाद् घञि प्रयोग इति। तथा चाहार्यारोपो विपर्यासः, अनहार्यारोपस्तु विपर्यय इति। एवञ्च यत्र गौणः प्रयोगस्तत्राहार्यारोप एव। स्पष्टञ्चेद-मध्यासभामत्याम्।

एवञ्चात्र विपर्यास इति पाठ एव युक्तः। अत एव कारिकायामपि विपर्यासा-दित्येव पाठ इति।

**'क्रियान्तरेण चैतेषां' इति ॥ २७६।**

अत्र चतुर्थपादे—'निधनेन' इत्यस्य स्थाने 'नियमेन' इति पाठः क्वचिद् दृश्यते। स एव च युक्तः, अर्थसंगतेः। नहि निधनरूपस्यार्थस्यात्र संभवोऽस्ति।

**'श्रुतिमात्रेण यत्रास्य' इति २७८।**

अत्र पुण्यराजीये—'रूपशक्तिः इति सप्तपक्षाः' इत्यत्र 'रूपशक्ती' इति द्विवचनान्तपाठः साधुः। अन्यथा पक्षसप्तत्वानुपपत्तिः। अत्रैवाग्रे पुण्यराजीये—'रूपशक्तिरिति चत्वारः' इत्यत्रापि 'रूपशक्ती' इति द्विवचनान्त पाठ एव साधुः।

अत्रैवाग्रे—'इत्येतैर्निमित्तैः' इत्यत्र 'इत्येतैर्निमित्तैः' इति तकारद्वयघटित-निमित्तशब्दपाठः साधुः। तकारैक्येऽर्थासंगतेः।

अत्रैवाग्रे पुण्यराजीये—'वाक्यार्थोपचारः' इत्यत्र 'वाच्यार्थोपचारः' इति पाठः साधुः। पदवाच्यार्थस्यैव गौणत्वं न तु वाक्यार्थस्य गौणत्वं केनापि अभ्युपगम्यते दृश्यते वा क्वचिद् इति अस्यैव पाठस्य साधुत्वम्।

**'गोयुष्मन् महतां व्यर्थे' इति ॥ २७९।**

अत्र पुण्यराजीये—'अर्थान्तरेऽगवाद्यलक्षणे' इत्यत्र 'अर्थान्तरेऽगवादिलक्षणे' इति पाठः साधुः प्रतीयते। तथैवार्थसंगतेः।

अत्रैवाग्रे पुण्यराजीये—'उत्तरावस्था विद्यमानैव' इत्यत्र—'अविद्यमानैव' इतिच्छेदः कार्यः। तथैवार्थसंगतेः। अत्रैवाग्रे पुण्यराजीये—'इत्येवमत्र प्रगृह्यसंज्ञा' इत्यत्र 'इत्येवमत्र न प्रगृह्यसंज्ञा' इति नञ्घटितः पाठः साधुः। गोऽभवत् इत्यत्र प्रगृह्यसंज्ञाया अभावस्यैवेष्टत्वात्।

अत्रैवाग्रे पुण्यराजीये—'वृद्ध्यात्वे प्राप्नुतः' इत्यत्र 'न प्राप्नुतः इति नञ्घटितः पाठः साधुः। 'गौर्वाहीकः, गां वाहीकमानय' इत्यादौ गौणत्वेऽपि वृद्ध्यात्वयोरिष्टत्वात्।

अत्रैवाग्रे पुण्यराजीये—'गौणार्थताप्रतिपादकस्य इत्यत्र—'गौणार्थता' इति पृथक्पदम् एतदन्तमेव च पूर्ववाक्यम्। 'प्रतिपादकस्य' इत्यस्य स्थाने प्रतिपादकस्य इति पाठः साधुः। तस्य च गौणार्थता इत्यग्रेतनेनान्वयः।

अत्रैवाग्रे पुण्यराजीये—'तद्धि शब्दाश्रये च वृद्धयात्त्वे' इत्यत्र 'तद्धि' इति पाठोऽधिकः। आनर्थक्यात्।

**'ऋष्यादी प्राप्तसंस्कारो' इति ॥ २८४।**

अत्रैव पुण्यराजीये—'तावद् ऋषावेव' इति पाठः साधुः।

अत्रैवाग्रे पुण्यराजीये—'उत्तरकालं प्राप्तसंस्कारः' इत्यस्य स्थाने—'उत्तरकालमप्राप्तसंस्कारः' इति पाठः क्वचिदुपलभ्यते। स चायुक्तः। 'तदाऽन्तरङ्गः संस्कारः' इत्याद्युत्तरग्रन्थविरोधात्। अत्र च 'उत्तरकालम्' इत्यस्य 'अन्यत्र प्रयुज्यते' इत्यनेनान्वयः।

**'अत्यन्ते विपरीतेऽपि' इति ॥ २८५।**

अत्र पुण्यराजीये—'यदा यथा विपर्ययेण चार्थावधारणं क्रियते तदा यथा संप्रत्ययम्' इत्यत्र 'यथा विपर्ययेण च' इत्यस्य स्थाने—'यथावद् विपर्ययेण च' इति युक्तः पाठः। तथैव हि अर्थसंगतिः। 'तदा तथा संप्रत्ययम्' इत्यस्य स्थाने—'तदा तथा यथासंप्रत्ययम्' इति पाठः क्वचिद् दृश्यते, स चायुक्तः। तथा शब्दार्थस्यानन्वितत्वात्, आधिक्याच्चेति।

**'प्रसिद्धार्थविपर्यास' इति ॥ २८९।**

अत्र पुण्यराजीये—'यच्च नैमित्तिकदर्शनं प्रसिद्धार्थविपर्यासनिमित्तम्' इत्यत्र—'नैमित्तिकदर्शनप्रसिद्धार्थविपर्यासनिमित्ताम्' इति समस्तपाठः क्वचिदुपलभ्यते। स चायुक्तः। अत्र पुण्यराजीये—'प्रसिद्धः सत्यरूपः' इत्यादिना 'प्रसिद्धार्थ विपर्यासनिमित्ताम्' इत्यस्यैव व्याख्यादर्शनात्।

किञ्च—नैमित्तिकदर्शनेति पदं कारिकायां न दृश्यते इति कथं समस्तस्य प्रतीकं व्याख्यानं वा। तथा समासे हि नैमित्तिकदर्शनपदस्य व्याख्यानोपेक्षिता स्यात्। 'यच्च नैमित्तिकं दर्शनम्' इति व्यस्तः पाठः साधुः। तथैव वाक्यार्थे समन्वयात्।

तथाहि— यच्च नैमित्तिकं दर्शनम्, यच्च प्रसिद्धार्थविपर्यासनिमित्ताम्, यस्तस्माल्लक्ष्यते भेदः' 'तत्सर्वमसत्त्यं प्रचक्षते' इति वाक्ये पदानामन्वयात्। तत्र-यच्च नैमित्तिकं दर्शनम् इत्यस्याध्याहारः। यच्च दृश्यते इति समुच्चयार्थकचकारानुरोधात्।

अत्र कारिकायाम्—'तमसत्त्यं प्रचक्षते' इत्यत्र—'तदसत्त्यं प्रचक्षते' इति पाठः साधुः। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति शास्त्रानुरोधेन नपुंसकस्यैवैकशेषात्।

**'यच्च निम्नोन्नते चित्रे' इति ॥ २९०।**

अत्र पुण्यराजीये—'सरूपं निम्नोन्नतचित्रभित्तौ' इत्यत्र 'सरूपनिम्नोन्नतचित्रभित्तौ' इति पाठः क्वचिद् दृश्यते। स चायुक्तः। अर्थासंगतेः। तस्मात्' सरूपं निम्नोन्नते चित्रभित्तौ दृश्यते इति युक्तः पाठः। चित्रभित्तेर्निम्नोन्नतत्त्वाभावात्।

**'वप्रप्राकारतल्पैश्च' इति ॥ २९२ ।**

अत्र—'नगरेषु तते' इत्यत्र 'नगरेषु न ते' इति पाठः साधुः, अर्थसंगतेः ।

**'यच्चोपघातजं ज्ञानम्' इति । २९२ ॥**

अत्र पुण्यराजीये—'सत्त्यत्वविपरीतं ग्रैष्मतिमिरिकादिज्ञानम्' इत्यत्र 'सत्त्यत्वविपरीतग्रैष्मतिमिरिकादिज्ञानम्' इति समस्तः पाठः क्वचिदुपलभ्यते। स तु न युक्तः। समस्तपाठे नियमेन विवक्षितान्वयासिद्धेः। सत्यत्ववैपरीत्यं हि प्रकृतकारिकानुरोधेन ज्ञाने विवक्षितम्, तच्च समस्तपाठे कदाचिद् ग्रैष्मतिमिरिकादावपि प्रतीयेत ।

अत्रैव पुण्यराजीये—'यथोक्तम्—असमाख्येयतत्त्वानाम्' इत्यत्र—'यथोक्तम्' इत्यस्य स्थाने 'तथोक्तम्' इति पाठः क्वचिदुपलभ्यते। स चायुक्तः। उद्ध्रियमाणवाक्यस्यादौ 'यथोक्तम्' इति पदोपन्यासस्यैव लेखकसंप्रदायसिद्धत्वात् ।

अत्रैव पुण्यराजीये—'व्यवहारे समाख्यानाम्' इत्यत्र 'समाख्यानम्' इति इति प्रथमान्तपाठो युक्तः। तथा सति एव-अग्रेतनेन तत्प्राज्ञ इत्यत्रत्येन तस्य परामर्शसंभवात्। क्वचित्पुस्तके तु 'समाख्यातम्' इति पाठ उपलभ्यते। स तु न युक्तः। तथा सति—'असमाख्येयतत्त्वानामर्थानाम्' इत्यस्य कर्मषष्ठीत्वस्य न्याय्यस्यानुपपत्तेः। एवञ्च— उपपदविभक्तेः कारकविभक्तिर्बलीयसी इति न्यायविरोधः ।

अत्रैव पुण्यराजीये—'गौणमुख्यविभागमापादयति' इत्यत्र 'गौणमुख्यार्थ—विभागम्' इति पाठः क्वचिद् दृश्यते, स चायुक्तः। उपसंहारे 'गौणमुख्यविभागः इति पाठस्यैव दर्शनात्। उपसंहारानुकूल्येनैवोपक्रमे मध्ये वा पाठनिर्णयो न्याय्यः ।

**'संसर्गिषु तथार्थेषु' इति । २९९ ॥**

अत्र पुण्यराजीये—'यस्मादन्यानपि' इत्यत्र 'तस्माद्' इति पाठः न्याय्यः। यस्मादिति पाठे हि उत्तरत्र 'तस्माद्' इति पाठोऽपेक्षितव्यः, स च नास्ति। अत्रैवाग्रे पुण्यराजीये—'नान्तरीयकतया स्थितात्' इत्यत्र 'स्थितान्' इति द्वितीयान्तपाठः साधुः। तथैवार्थसंगतेः ।

**'यथा शब्दोऽपि कस्मिश्चित्' इति । ३०१ ॥**

अत्र प्रथमपादे—'यथा शब्दोऽपि' इत्यत्र 'तथा शब्दोऽपि' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। समनन्तरपूर्वकारिकायां यथा शब्दस्य पाठदर्शनात् ।

अत्रैव द्वितीयपादे—इत्यत्र 'प्रत्याय्योऽर्थो विवक्षिते' इत्यत्र 'प्रत्याय्याऽर्थो विवक्षिते' यत्र 'प्रत्याय्येऽर्थे विवक्षते' इति पाठः क्वचित् दृश्यते स एव च युक्तः। 'कस्मिश्चित्प्रत्याय्येऽर्थे सिद्धताख्ये' इति पुण्यराजीये तद्व्याख्यादर्शनात्। यस्तु अत्र पुण्यराजीये 'प्रत्याय्येऽर्थे' इति पाठः, स तु न युक्तः। 'सिद्धताख्ये धर्मेऽविवक्षितमप्यर्थं प्रत्याययति' इत्याद्यग्रिमग्रन्थविरोधात् ।

**यथैवात्यन्तसंसृष्टः इति ।। ३०२ ।**

अस्या अवतरणे पुण्यराजीये—'नन्वस्तु वस्तुगतिः' इत्यत्र 'नन्वत्र वस्तुगतिः' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । अस्तु इति पाठो हि दृष्टान्तभूतस्यार्थस्याशंसारूपलोडर्थविषयत्वेनासिद्धत्वप्रतीतिः । न चैतद् युक्तम्, सिद्धस्यैवार्थस्य दृष्टान्तत्वदर्शनात् ।

अस्या एव कारिकाया व्याख्याऽवसरे पुण्यराजीये—'स्तोकत्वक्कण्डकादिः' इत्यत्र 'स्तोकत्वक्कण्टकादिः' इति पाठः साधुः । कण्टकार्थे कण्डकपदस्याप्रसिद्धेः ।

**व्यर्थानां सन्निधानेऽपि इति ।। ३०३ ।**

अत्र द्वितीयपादे—'प्रकाशते' इत्यस्य स्थाने 'प्रकाशने' इति पाठो युक्तः । तथा सत्येव 'एषाम्' इत्यस्य कर्मषष्ठ्यन्तत्वोपपत्तेः ।

**क्वचिद् गुणप्रधानत्वम् इति ।। ३०४ ।**

अत्र तृतीयपादे—'क्वचित्सांनिध्यमप्येषाम्' इत्यस्य स्थाने—'क्वचित् सांनिध्यमेतेषाम्' इति पाठः क्वचित् पुस्तके दृश्यते । स चायुक्तः । 'निर्देशे लिङ्गसंख्यानां संनिधानमकारणम्' इत्यस्य व्याख्यावसरे पुण्यराजीये—'ननु नान्तरीयकतया प्रतिपत्तौ कथं' 'क्वचित्सांनिध्यमप्येषां प्रतिपत्तावकारणम् इत्युक्तम्' इति पाठदर्शनात् । तत्रैव 'भाव इत्यस्मिन्निर्देशे लिङ्गसङ्ख्ययोर्नान्तरीयकतया प्रतिपत्तावपि सन्निधानमकारणम्' इति पुण्यराजीयग्रन्थदर्शनाच्च ।

**आख्याततद्धितार्थस्य इति ।। ३०६ ।**

अत्र पुण्यराजीये—'क्रियाप्रधानत्वेऽपि नाख्यातस्य' इत्यत्र 'नाख्यातस्य' इत्यस्य स्थाने 'व्याख्यातस्य' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । आख्यातस्य वैयाकरणसमये क्रियाप्रधानत्वात् ।

**निर्देशं लिङ्गसङ्ख्यानाम् इति ।। ३०७ ।**

अत्र प्रथमपादे—निर्देशे 'लिङ्गसंख्यानाम्' इत्यत्र 'निर्देशलिङ्गसंख्यानाम्' इति समस्तपाठः क्वचिदुपलभ्यते । स चायुक्तः । 'भाव इत्यस्मिन्निर्देशे लिङ्गसंख्ययोर्नान्तरीयकतया प्रतिपत्तावपि संनिधानमकारणम्' इति पुण्यराजीयव्याख्यादर्शनेन 'निर्देशे' इति व्यस्तस्य सप्तम्यन्तपाठस्यैव तदनुगतत्वावगमात् ।

अत्रैव पुण्यराजीये 'न यत्र तयोः' इत्यत्र 'यत्र' इत्यस्य स्थाने 'तत्र' इति पाठः साधुः, तथैवार्थसंगतेः । अत्रैव कारिकायां तृतीयपादे—'प्रमाणमेव ह्रस्वादौ' इत्यत्र 'प्रमाणमर्धह्रस्वादौ' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः । तथा पाठे आदिपदवैयर्थ्यात् । 'प्रमाणमेव ह्रस्वादौ' इति पाठे तु आदिपदसार्थक्यम् । दीर्घप्लुतयोः संग्राहकत्वात् । 'प्रक्षालनं शरावाणाम्' इति कारिकाव्याख्याने पुण्यराजीये तु

'प्रमाणमर्धह्रस्वादौ' इत्येव पाठः समुपलभ्यते। तत्र च आदिपदं संभावनाभिप्रायेणोपन्यस्तमिति बोध्यम्।

अत्रैव पुण्यराजीये—'मात्रिकद्विमात्रिकत्रिमात्रलक्षणा' इत्यत्र 'मात्रिकद्विमात्रत्रिमात्रलक्षणा' इति पाठः क्वचिद् दृश्यते। स एव च युक्तः। न कर्मधारयाद् मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकर इति न्यायानुरोधात्। तत्र कर्मधारयपदस्य बहुव्रीहीतरसमासोपलक्षकत्वात्, वृत्तिद्वयकल्पनायां गौरवाच्च।

**ह्रस्वस्यार्द्धं यत् च दृष्टम् इति ।। ३०८।**

अत्र पुण्यराजीये—'तथा तत्सन्निधौ' इत्यत्र 'तथा तदसंनिधौ' इति पाठो युक्तः, तथैवार्थसंगतेः।

**दीर्घप्लुताभ्यां तस्य स्याद् इति ।। ३०९।**

अस्या अवतरणे 'तत्राद्यप्रकारमाह' इत्यत्र 'तत्राद्यं प्रकारमाह' इति व्यस्तः पाठः क्वचिदुपलभ्यते। स तु न युक्तः। शाब्दबोधार्थमुपस्थितिद्वयकल्पने गौरवात्। अत्रैव पुण्यराजीये–'एतच्च निर्दशितं ह्रस्वस्यार्धम्–इत्यनेन' इत्यत्र 'एतच्च निदर्शनम्' इति पाठःक्वचिदुपलभ्यते। स तु न युक्तः। 'इत्यनेन' इति तृतीयान्तस्यान्वयानुपपत्तेः।

**गन्तव्यं दृश्यतां सूर्य इति ।। ३१०।**

अत्र तृतीयपादे—'ज्ञायतां काम इत्येतत्' इत्यत्र 'ज्ञायतां काल इत्येतत्' इति पाठो युक्तः। कामपदार्थस्यात्र वाक्यार्थेऽनन्वयात्।

अत्रैव पुण्यराजीये 'लक्षितपरार्थमुख्यशक्त्यर्थोऽपि' इत्यत्र 'लक्षितपरार्थो मुख्यः शक्त्यर्थोऽपि' इति पाठो युक्तः। तथैवार्थसंगतेः।

**विध्यत्यधनुषेत्यत्र इति ।। ३११।**

अत्र पुण्यराजीये 'करणमात्रस्य मुख्यत्वम्' इत्यत्र 'कारणमात्रस्य लक्ष्यत्वम्' इति पाठो युक्तः। 'विध्यत्यधनुषा' इत्यत्र कारणमात्रस्य=कारणसामान्यस्य लक्ष्यत्वात्।

**प्रक्षालनं शरावाणाम् इति ।। ३१३।**

अत्र द्वितीये पादे 'स्थालीनां मार्जमम्' इत्यत्र 'स्थलानां मार्जनम्' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। प्राक् पात्राणामेवोपन्यासात्। तत्प्रसङ्गेन स्थालीनामिति पाठस्यैवौचित्यात्।

एतद्व्याख्यावसरे पुण्यराजीये—'शरावाणां प्रक्षालने शब्देनोपात्ते स्थालीनिर्मार्जनादि अनुक्तमपि' इति पाठदर्शनाच्च।

अत्रैव पुण्यराजीये—'प्रक्षालनं शरावाणामित्यनेन' इत्यत्र 'प्रक्षालनं शरावाणामित्यन्तेन' इति पाठः क्वचिद् दृश्यते। स एव च युक्तः। 'प्रमाणमर्धह्रस्वादौ इत्यादिना' इति प्राच्यग्रन्थानुरोधात्।

अत्रैवाग्रे पुण्यराजीये—'एतदेभाविवक्षितवाच्यमुच्यते' इत्यत्र 'एतदेवाविवक्षितं वाच्यमुच्यते' इति पाठः क्वचिद् दृश्यते। स चायुक्तः। साहित्ये लक्षितस्य अविवक्षितवाच्यस्यैवात्रोपन्यासात्।

**वाक्यात् प्रकरणादर्थात् इति ।। ३१४।**

अत्र पुण्यराजीये—'यथा ग्रामप्रस्तावे' इत्यत्र 'यथा संग्रामप्रस्तावे' इति युक्तः पाठः। सैन्धवानां चोदनमित्युत्तरवाक्यानुरोधात्।

अत्रैवाग्रे पुण्यराजीये—'प्रष्ठसंबन्ध एव षष्ठ्यादीनाम्' इत्यत्र—'प्रष्ठसंबन्ध एव प्रष्ठ्यादीनाम्' इति युक्तः पाठः। पुंयोगादित्याद्युत्तरवाक्यानुरोधात्।

**संसर्गो विप्रयोगश्च इति ।। ३१५।**

कारिकाव्याख्यानावसरे 'यथैव संसर्गादिभिः' इत्यत्र 'तथैव ससर्गादिभिः' इति पाठो युक्तः, प्रकृतवाक्यर्थानुरोधात्। 'सामर्थ्यमौचिती' इत्यादिकारिकाव्याख्यानावसरे पुण्यराजीये—'नपुंसकेन परामर्शात्' इत्यस्मादुत्तरत्र—'ग्रामस्यार्धं स्वयमेव प्रतीयते' इत्यस्य स्थाने 'तस्माद् ग्रामस्यार्धं सममेव प्रतीयते। तं ग्रामस्यार्धमित्यत्र तु तमिति पुंलिङ्गेन परामर्शाद् ग्रामैकदेशमात्रं प्रतीयते' इति पाठः क्वचिदुपलभ्यते। स एव च साधुः। पूर्वस्मिन् पाठे हि—'नपुंसकेन परामर्शाद्' इति 'स्वयमेव प्रतीयते' इति च परस्परं विरुध्येते।

एतदग्रे पुण्यराजीये—'शास्त्रेऽप्यस्वराद् यथा' इत्यस्य स्थाने 'शास्त्रेऽप्यर्थनिर्णयः स्वराद् यथा' इति पाठो युक्तः। पूर्वस्मिन् पाठे ह्यर्थासंगतिः।

**नामाख्यातसरूपा ये इति ।। ३१८।**

कारिकाव्याख्यावसरे पुण्यराजीये—'इह वाक्ये नामरूपाः' इत्यस्य स्थाने 'इह वाक्ये नामसरूपाः' इति पाठो युक्तः। तथैवार्थसंगतेः। इतोऽग्रे पुण्यराजीये—'तस्यातो गुरुरूपत्वे' इत्यस्य स्थाने—'अतो गुण इति पररूपत्वे' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। तथैवार्थसंगतेः।

अत्रैवाग्रे पुण्यराजीये–'तेषु रूपमात्रार्थोऽवगम्यते' इत्यस्य स्थाने 'तेषु न रूपमात्रार्थोऽवगम्यते' इति युक्तः पाठः। यथाश्रुतपाठे ह्यर्थासंगतिः।

**व्याघ्रादिव्यपदेशेन इति ।। ३२१।**

अत्र पुण्यराजीये—'न तत्र व्याघ्रभक्षणं वस्तुस्थितयासंभवि' इत्यस्य स्थाने 'न तत्र व्याघ्रभक्षणं वस्तुस्थित्या भवति' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। तत्र व्याघ्रभक्षणाभावे हेत्वनुक्तेः। आद्यपाठे तु व्याघ्रभक्षणाभावे तत्संभवाभावो हेतुरुपन्यस्तः। व्याघ्रभक्षणाभावस्तु अर्थलभ्यत्वान्नोपन्यस्त इति स एव पाठ युक्त इति।

अत्रैवाग्रे पुण्यराजीये—'एतावन्मात्रं प्रतिग्राह्यते' इत्यस्य स्थाने 'एतावन्मात्रं प्रतिपाद्यते' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। आद्यपाठे हि प्रतिशब्दस्योपसर्गस्य वैयर्थ्यम्। ग्राह्यत इत्यनेनैव हि ज्ञाप्यते इत्यर्थस्य लाभात्। दीयमानवस्तुस्वीकाररूपार्थान्तरे प्रसिद्धत्वेन विरुद्धार्थकत्वमनन्वितार्थकत्वञ्च। 'प्रतिपाद्यते' इति पाठे तु पदेरर्थान्तरद्योतकत्वेन तद्वाचकत्वेन वा प्रतिशब्दस्य सार्थक्यम्।

**न संविधानं कृत्वापि इति ॥ ३२२ ।**

अस्याः कारिकाया अवतरणावसरे पुण्यराजीये—'प्रवृत्तिरुचितेत्याह' इत्यस्य स्थाने 'प्रवृत्तिरुच्यते इत्याह' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। प्रतिषिद्धे प्रवृत्त्यनौचित्यस्यैवैतत्कारिकादर्शनेन प्रतिपिपादयिषितत्वावगमात्।

**रूपं सर्वपदार्थानाम् इति ॥ ३२५ ।**

अत्र पुण्यराजीये 'पृथग् विशिष्टतत्त्वानाम्' इत्यस्य स्थाने 'पृथग् निविष्टतत्त्वानाम्' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। एतत्कारिकैकवाक्यतापन्नायां द्वितीयकारिकायां 'पृथगर्थनिवेशिनाम्' इति पदविशेषणानुरोधात्। विशिष्टपदार्थस्य प्रकृतार्थानुपयोगित्वाच्च। पृथग् निविष्टतत्त्वानामिति पाठे तु पृथगर्थे संबन्धस्वरूपाणामित्यर्थः प्रकृतवाक्यार्थोपयोगी संभवत्येव। निपूर्वकस्य विशेः संबन्धार्थकत्वात्।

अत्रैवाग्रे पुण्यराजीये—'यथोच्यते नहि केचिदित्यादि' इत्यस्य स्थाने 'यथोच्यते नहि किञ्चिदित्यादि' इति पाठो युक्तः। एवं हि कारिका दृश्यते—'नहि किञ्चित् पदं नामरूपेण नियतं क्वचिद्' इत्यादि।

**आख्यातशब्दे नियतम् इति ॥ ३२६ ।**

अस्याः कारिकाया अवतरणे 'अर्थौचित्यादिवशाद्' इत्यस्य स्थाने 'अर्थौचित्यवशाद्' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। किन्तु प्रकरणादिसंग्राहकत्वेन आदिपदघटित आद्य पाठ एव युक्तः। अत्र कारिकायाम् 'समासार्थम्' इत्यस्य स्थाने 'समाप्तार्थम्' इति पाठः क्वचिद् दृश्यते। स एव च युक्तः। समाप्तो निराकाङ्क्षोऽर्थो यस्य तत्तथा इति प्रकृतसङ्गतार्थसंभवात्। समासार्थमिति पाठे तु अर्थासंगतिः।

अत्रैव पुण्यराजीये—'समासार्थं परिपूर्णार्थम्' इत्यस्य स्थाने 'समाप्तार्थं परिपूर्णार्थम्' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। समासार्थमित्यस्य परिपूर्णार्थमित्यर्थासंभवात्।

**शब्दव्यवहिता बुद्धिः इति ॥ ३२७ ।**

अत्र पुण्यराजीये—'साधुवदर्थस्य' इत्यस्य स्थाने 'साधुवत्तदर्थस्य' इति पाठो युक्तः।

अत एवाग्रे 'तदर्थस्य' इत्यस्य व्याख्यानम्—'तस्याप्रयुक्तस्य पदान्तरस्य योऽर्थस्तस्य हेतुरुच्यते' इति दृश्यते। अत्रैवाग्रे पुण्यराजीये—'श्रुतार्थापत्त्या परिकल्पितः' इत्यस्यादौ 'किन्तु' इति पदं पाठ्यम्। तथैव ह्यर्थसंगतिः।

**यत्र साधनवृत्तिर्यः इति ।। ३३४ ।**

अस्याः कारिकाया अवतरणे पुण्यराजीये—'इत्थादिके शब्दार्थलक्षणे' इत्यस्य स्थाने 'इत्यादिके शब्दार्थलक्षणे' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। 'इत्यादिकम्' इत्यस्य भिन्नार्थकत्वेन 'अनित्यत्वम्' इत्यनेन सह सामानाधिकरण्यासंभवात्।

अत्रैव पुण्यराजीये—'न स एव प्रधानभूतस्याभिधायक उपपद्यते' इत्यस्य स्थाने 'न स एव प्रधानभूतस्यार्थस्य प्रतिपाद्यस्यासत्त्वभूतस्याभिधायक उपपद्यते' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। अस्मिन् पाठे हि कारिकायां स्थितस्य 'अर्थस्य' इत्यस्य व्याख्यानम् 'प्रतिपाद्यस्य' इति, 'साध्यस्य' इत्यस्य व्याख्यानं तु 'असत्त्वभूतस्य' इति।

**पारार्थस्याविशिष्टत्वात् इति ।। ३३६ ।**

अत्र पुण्यराजीये–'नापि शब्दाक्षेपो युज्यते, वाच्ये तु वाचकमाक्षिपतीति युक्तम्' इत्यस्य स्थाने 'नार्थेनापि शब्दाक्षेपो युज्यते, वाच्यं तु वाचकमाक्षिपतीति युक्तम्' इति पाठो युक्तः। 'नार्थेनापि' इति पाठः क्वचित् पुस्तके उपलभ्यतेऽपि। वाच्यं तु वाचकमाक्षिपति—इत्यत्र वाचकमिति कर्तृपदम्, वाच्यमिति कर्मपदम्। तु-शब्दो भिन्नार्थको वाचकपदोत्तरं द्रष्टव्यः।

अत्रैवाग्रे पुण्यराजीये—'वाच्यवाचकताविरहात्' इत्यस्य स्थाने 'वाच्य-वाचकभावविरहात्' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। तथाहि—तल्-प्रत्ययेन शब्दगतो धर्मः शक्त्याख्यः,अर्थगतश्च शक्तिनिरूपकत्वरूपः साक्षादेवाभिधीयते, भावशब्देन तु असाधारणधर्मत्वेन रूपेण सोऽभिधीयते। यथा गोत्वमित्यत्र गोत्वत्वेन रूपेण गोगता जातिः साक्षादभिधीयते। गोर्भाव इत्यनेन तु असाधारणधर्मत्वेन सामान्यरूपेण सास्नादिसाधारणेन साऽभिधीयते इति विशेषात्।

अत्रैवाग्रे पुण्यराजीये—'न शब्दार्थस्यासावर्थः' इत्यस्य स्थाने 'न शब्दस्या-सावर्थः' इति पाठो युक्तः। तथैवार्थसंगतेः।

**नष्टरूपमिवाख्यातम् इति ।। ३३७ ।**

अत्र तृतीयपादे 'प्रधानत्वम्' इत्यस्य स्थाने 'प्रधानञ्च' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। 'प्रधानत्वेन वाच्यत्वमापतितम्' इति अत्रत्यपुण्यराजीय-

व्याख्याविरोधात् । एतत्कारिकाव्याख्यानावसरे पुण्यराजीये—'द्वारं द्वारं कर्म इत्यत्र' इत्यस्य स्थाने 'द्वारम् इत्यत्र' इत्येवं पाठो युक्तः । शेषस्य वैयर्थ्यात् ।

**उत्सर्गवाक्ये यत् त्यक्तम् इति ।। ३४६ ।**

अत्र पुण्यराजीये—'बाधकानाक्रान्तधातुविषये भवति' इत्यस्य स्थाने 'बाधकानाक्रान्तधातुविषयेऽण् प्रत्ययो भवति' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः । अन्यथा कर्तृपदाकाङ्क्षाऽत्र वाक्ये परिसमाप्ता न स्यात् । प्रकरणादिपर्यालोचनया विलम्बेन वा परिसमाप्ता स्यात् ।

**ब्राह्मणानां श्रुतिर्दध्नि इति ।। ३४७ ।**

अत्र पुण्यराजीये—'उत्तरकालं तक्रं माठराय इत्येतत् तत्र यथार्थबोधकस्वविषयपरिहारेणैवार्थवत्तां गमयतीत्येव भिन्नवाक्यतासमाश्रयणेन' इत्यस्य स्थाने 'उत्तरकालं तक्रं कौणिन्याय इत्येतत्तत्र यथाऽर्थबोधकं स्वविषयपरिहारेणैवार्थवत्तां गमयति इत्येवं भिन्नवाक्यतासमाश्रयणेन' इति पाठः साधु, तथैवार्थसंगतेः । एवञ्चास्य वाक्यस्य एवं पदयोजना—उत्तरकालं तक्रं कौण्डिन्याय इत्येतद् वाक्यं यथाऽर्थबोधकं स्वविषयपरिहारेणैव तत्र=पूर्ववाक्ये अर्थवत्तां गमयतीत्यादिः ।

**निराकांक्षाणि निर्वृतौ इति ।। ३५० ।**

अत्र पुण्यराजीये—'तेषां निष्प्रयोजनापेक्षापरिकल्प्य तेनैकवाक्यता' इत्यत्र 'परिकल्प्यतेऽतो नैकवाक्यता' इति पाठो युक्तः । तथैवार्थसंगतेः ।

**संज्ञाशब्दैकदेशो यः इति ।। ३५२ ।**

अस्याः कारिकाया अवतरणे 'अपोद्धारसमाश्रयणे' इत्यस्य स्थाने 'अपोद्धारसमाश्रयेण' इति पाठो युक्तः । आद्यपाठे सत्सप्तम्या एव संभवे न तस्या उपपदविभक्तित्वात् । द्वितीयपाठे तु विचारक्रियां प्रति करणत्वबोधिकायास्तृतीयायाः कारकविभक्तित्वेन बलीयस्त्वात्तदुपन्यासस्यैवौचित्यात् ।

अत्रैव वाक्ये 'विचारयितुं स्तौति' इत्यत्र 'प्रस्तौति' इति सोपसर्गः पाठो युक्तः। अत्र स्तुतेरभावात्, पदेषु पदैकदेशाः सन्तीति विचारप्रस्तावस्य च सत्त्वात् ।

**संज्ञान्तराच्च दत्तादेः इति ।। ३५३ ।**

अत्र पुण्यराजीये—'तत्रापि तद्वाच्यप्रतिपत्तिः' इत्यस्य स्थाने 'न चापि तद्वाच्यप्रतिपत्तिः' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । तथैवार्थसंगतेः ।

**वर्णानामर्थवत्त्वं तु इति ।। ३५५ ।**

अत्र तृतीयपादे 'सम्बन्धोऽवयवः' इत्यस्य स्थाने 'संबद्धोऽवयवः' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। पुण्यराजीये—'संबद्ध एव वाचकत्वेन विनियुक्त'—

इति तद्व्याख्यादर्शनात् । चतुर्थपादे च 'संज्ञा' इति प्रथमान्तम्, प्रविवेके इति सप्तम्यन्तम्, ततः परं नञ्पदञ्चेति पृथक् पृथग् बोध्यम् । 'कल्प्यते' इत्यस्य स्थाने 'कल्पते' इति पाठः क्वचिदुपलभ्यते । स एव च युक्तः । चतुर्थपादस्य व्याख्यानभूते—'समुदायाच्च तस्य प्रविवेके पृथग्भावे वाचकत्वं न कल्प्यते, विलक्षणत्वात्' इति पुण्यराजीयेऽपि 'कल्पते' इति पाठ एव युक्तः । तथा हि—अस्मिन् पाठे—'न कल्पते' इत्यस्य न प्रसिध्यति इत्यर्थः । तत्र च संज्ञेति कर्तृपदं श्रूयते । कल्प्यते इति पाठे तु संज्ञायाः कर्मत्वेन कर्तृपदे साकाङ्क्षमिदं वाक्यं स्यात् ।

किञ्च, कल्पते इति कृपेः शुद्धस्य प्रयोगसंभवे णिजन्तप्रयोगतदर्थान्वयकल्पनकर्तृपदाध्याहारादिपर्यन्तानुधावनं व्यर्थमेव समाश्रीयेत । तथा चाभाणकः—अक्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ इति ।

## एकदेशरूपास्तु इति ॥ ३५९ ।

अस्या अवतरणे—'सिद्धान्तमाह' इत्यस्य स्थाने 'इदानीं सिद्धान्तमाह' इति पाठः क्वचिद् दृश्यते । स च पाठो युक्त एव । तस्मिन् पाठे हि—पूर्वं पूर्वपक्ष उक्तः, इदानीं तु सिद्धान्तमाह इत्यर्थोऽधिकः प्रसिध्यति, नाद्यपाठे ।

## साधारणत्वात् संदिग्धाः इति ॥ ३६० ।

अत्र पुण्यराजीये—'दत्तसंज्ञाशब्दः' इत्यस्य स्थाने—'दत्तः संज्ञाशब्दः' इति व्यस्तपाठः साधुः । 'देवोऽपि संज्ञाशब्द' इत्युत्तरग्रन्थानुरोधात् ।

## कृतणत्वाश्च ये शब्दा इति ॥ ३६२ ।

अत्र प्रथमे पादे—'कृतणत्वाश्रये शब्दा' इत्यस्य स्थाने 'कृतणत्वाश्च ये शब्दा' इति पाठः साधुः । 'तान् साधून् संप्रचक्षते' इति चतुर्थपादे तच्छब्देन प्रतिनिर्देशस्य यच्छब्दसाकाङ्क्षत्वात् । 'तत्र ये कृतणत्वास्ते साधव' इति पुण्यराजीये तद्व्याख्यादर्शनाच्च ।

अत्रैव पुण्यराजीये—'अत्रोच्यते । अत्र संज्ञासंज्ञिसंबन्धात् संज्ञात्वं तत्र लक्षणमिति । 'अथोत्तरकालं संज्ञात्वम्' इत्यत्र—'अत्रोच्यते । यत्र संज्ञासंज्ञिसम्बन्धात् संज्ञात्वं तत्र लक्षणमिति । अथोत्तरकालं लक्षणयोगः' इति पाठो युक्तः ।

तथाहि—अत्र इत्यस्य स्थाने यत्रेति पाठो युक्तोऽग्रे तत्र लक्षणमिति प्रतिनिर्देशात् । संज्ञात्वमित्यस्य स्थाने 'लक्षणयोग' इति पाठः साधुः, पूर्वं लक्षणयोगस्यैव प्रागुत्तरकालविकल्पात् ।

## गोत्राण्येव तु तान्याहुः इति ॥ ३६३ ।

अत्र चतुर्थपादे—'स्वार्थे' इति सप्तम्यन्तं पृथक् पदम् । 'न तेषु स्वार्थे संज्ञिनि निमित्तान्वेषणमिष्यते' इति पुण्यराजीये तद्व्याख्यादर्शनात् ।

**वृद्धयादीनां च शास्त्रे इति ।। ३६५ ।**

कारिका—अत्र पुण्यराजीये—'वृद्धयादीनां संज्ञाशब्दानां सर्वार्थप्रकाशनशक्तियोगः' इत्यत्र 'वृद्धयादीनां सर्वार्थप्रकाशनशक्तियोगः' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः। अग्रे 'संज्ञिनामादैजादीनाञ्च सर्वशब्दवाच्यतायोग्यता' इत्यत्र 'संज्ञिनामिति दर्शनेनात्रापि संज्ञाशब्दानामिति पाठस्योचितत्वात्। अत्रैवाग्रे पुण्यराजीये—'पुरुषेणानिलादियोगः क्रियते' इत्यत्र 'पुरुषेण नीलादियोगः क्रियते' इति पाठः साधुः। तथैवार्थसंगतेः।

**संज्ञास्वरूपमाश्रित्य इति ।। ३६६ ।**

अत्र प्रथमपादे—'संज्ञास्वरूपम्' इत्यत्र 'संज्ञा' इति प्रथमान्तं पृथक् पदम्। द्वितीयपादे 'लौकिकी' इति प्रथमान्तपदेन संज्ञाया विशेषणात्।

अत्रैव पुण्यरीजीये—'अर्थानुपात्तं निमित्तम्' इत्यस्य स्थाने 'अर्थानुगतं निमित्तम्' इति पाठः क्वचिद् दृश्यते। स एव च युक्तः। 'कुत्रचित्तस्याभाव एव डित्थादौ' इत्युत्तरग्रन्थानुरोधात्।

**आवृत्तेरनुमानं वा इति ।। ३६८ ।**

अत्र पुण्यराजीये—'शब्दभेदस्य वा गतिः' इति पाठ उपलभ्यते। स तु न युक्तः। मूले—'शक्तिभेदस्य वा गतिः' इति पाठात्। इतोऽग्रे पुण्यराजीयेऽपि 'स एवैको द्विशक्तिरुच्चारित' इति पाठाच्च।

अत्रैवाग्रे पुण्यराजीये—'एकया संज्ञिनः प्रतिपत्तिरपरेणावयवार्थसङ्गतिः' इत्यस्य स्थाने 'एकया संज्ञिनः प्रतिपत्तिरपरयाऽवयवार्थसंगतिः' इति पाठो युक्तः। इतः पूर्वं 'स एवैको द्विशक्तिरुच्चारितः' इति पाठात्।

**क्वचिद् विषयभेदेन इति ।। ३६९ ।**

अस्या व्याख्याने पुण्यराजीये 'न तु सर्वत्र तथैव व्यवस्था' इत्यस्य स्थाने 'न तु सर्वत्र तथैव' इति पाठः क्वचिद् दृश्यते। स तु न युक्तः। सर्वत्र इत्यस्य सर्वसंज्ञार्थकत्वेन तस्य व्यवतिष्ठते इत्यनेन सह कर्तृतयाऽन्वयासंभवात्। अतो व्यवस्थापदमावश्यकमेव।

अत्रैव पुण्यराजीये—'व्यतिहारस्यात्र कृत्रिमसंज्ञाश्रयणानुपपत्तेः' इत्यस्य स्थाने—व्यतिहारस्यात्र कृत्रिमसंज्ञायामाश्रयणानुपपत्तेः' इति पाठो युक्तः। तथाहि—अत्र पुण्यराजीये—'कर्तरि कर्मव्यतिहारे इत्यत्र' इति पक्षनिर्देशः, 'अकृत्रिमा गृह्यते' इति साध्यनिर्देशः। 'व्यतिहारस्यात्र कृत्रिमसंज्ञायामाश्रयणानुपपत्तेः' इति हेतुनिर्देशः। तदर्थश्च कृत्रिमसंज्ञायामनुपपद्यमानव्यतिहारपदार्थान्वितकर्मपदार्थ-

बोधककर्मव्यतिहारपदघटितत्वादिति। आद्यपाठे तु स्वरूपासिद्धो हेतुः। नापि च व्यतिहारस्य कृत्रिमसंज्ञाश्रयणं व्याकरणे क्वचिद् दृश्यते, यदनुपपत्तेर्हेतुत्वं स्यात्।

**संघैकशेषद्वन्द्वेषु इति ॥ ३७१।**

अत्र पुण्यराजीये—'सामर्थ्यं समर्थभावात्मकम्, अग्रे निरूप्यमाणलक्षणं स्वरूपं यस्य तत्तथाविधम्' इत्यस्य स्थाने—'सामर्थ्यं समर्थभावात्मकम्, अग्रे निरूप्यमाणं लक्षणं निमित्तस्वरूपं यस्य तत्तथाविधम्' इति युक्तः पाठः, तथैवार्थसंगतेः।

**भोजनं फलरूपाभ्याम् इति। ३७२ ॥**

अत्र कारिकायाम्—'प्रकल्प्यते' इत्यस्य स्थाने 'प्रकल्पते' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। न तदर्थः प्रकल्पते इति पाठे, न तदर्थः प्रसिध्यति इत्यर्थस्यैवात्रौचित्यात्। अत एवैतद्व्याख्यानावसरे पुण्यराजीये उक्तम्—'तथानाश्रयणे च भुज्यर्थानिष्पत्तेः' इति।

अत्रैव पुण्यराजीये—'अपरेणान्नदानम्' इत्यस्य स्थाने 'अपरेणान्नादानम्' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः। तथा सति–'अन्नेनान्ननिगरणम्' इति उत्तरग्रन्थविरोधात्। येन हि अन्नग्रहणरूपमन्नादानम्, तेनैव अन्ननिगरणमिति अन्नादानान्ननिगरणयोः समानकर्तृकत्वस्यैव लोकप्रसिद्धत्वात्।

अत्रैवाग्रे पुण्यराजीये—'भुजिक्रिया फलेन तृप्तिलक्षणेन' इत्यत्र 'भुजिक्रिया' इति प्रथमान्तं पृथक् पदम्, तथैवार्थसंगतेः।

अत्रैव पुण्यराजीये—'रूपेणान्नदानादीनां चैकाधिकरणेन' इत्यस्य स्थाने 'रूपेणान्नादनादिना चैकाधिकरणेन' इति पाठो युक्तः, तथा सत्येवार्थसंगतेः।

अत्रैवाग्रे पुण्यराजीये—'तथाऽनाश्रयणेन भुज्यर्था निष्पत्तेः' इत्यस्य स्थाने 'तथाऽनाश्रयणे च भुज्यर्था निष्पत्तेः' इति पाठो युक्तः! 'अन्यथा हि व्यवस्थाने' इति सप्तम्यन्तस्यैव 'तथाऽनाश्रयणे च' इत्यनेन व्याख्येयत्वात्।

**अन्नादनादिरूपाम् इति ॥ ३७३।**

अत्र प्रथमपादे—'अन्नादानादिरूपाम्' इत्यस्य स्थाने 'अन्नदानादिरूपाम्' इति क्वचित् पाठ उपलभ्यते। तदुभयमपि न युक्तम्, भुजिक्रियायाम् अन्नादानरूपत्वस्य अन्नदानरूपत्वस्य चाभावात्। भुजिक्रियाया अन्नादनस्वरूपत्वात्। अतः 'अन्नादनादिरूपाम्' इति पाठो युक्तः।

**पाद्यवत् सा इति ॥ ३७४।**

अत्र पुण्यराजीये—'तदभ्यर्चनायोपकल्प्यते' इत्यत्र 'उपकल्पते' इति क्वचित् पाठ उपलभ्यते। स तु न युक्तः। तथाहि अत्र 'कर्त्रा तदभ्यर्चनायोपकल्प्यते'

इत्येवं पदयोजनया 'उपकल्प्यते' अयस्योपस्थाप्यते इत्यर्थकत्वात्। न ह्ययमर्थः 'उपकल्पते' इत्यतः प्रसिध्यतीति।

**दृश्यादिस्तु इति ॥ ३७५।**

अस्याः कारिकाया अवतरणे पुण्यराजीये 'क्रियान्तरसमाश्रयणेन' इत्यस्य स्थाने 'क्रियान्तरासमाश्रयणेन' इति पाठो युक्तः। एवञ्च 'भुजिक्रियावत्' इति वैधर्म्ये दृष्टान्तः। यथा भुजिक्रियास्वातिरिक्ताऽऽवृत्तिक्रियासमाश्रयणेन देवदत्त-यज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यादौ समुदायपरिसमाप्ता भवति, तथा न दर्शनादि-क्रिया आवृत्तिक्रिया समाश्रयणेन देवदत्तयज्ञदत्तविष्णुमित्रान् पश्य इत्यादौ समुदायपरिसमाप्ता भवति, किन्तु आवृत्तिरूपक्रियान्तरासमाश्रयणेनैवेत्यर्थः संपद्यते।

अत्रैव पुण्यराजीये—'योग्यदेशस्थितेषु विषये प्रत्येकपरिसमाप्तिं विना भुक्ति-वन्नोपपद्यते' इत्यत्र 'विषये' इत्यस्य स्थाने 'विषयेषु' इति पाठो युक्तः, 'योग्यदेश-स्थितेषु' इति विशेषणे बहुवचनदर्शनात्। 'भुक्तिवत्' इत्यस्य स्थाने च ,भुजिवद्' पाठः क्वचिदुपलभ्यते। स तु न युक्तः, 'इक्श्तिपौ धातुनिर्देशे' इति धातुनिर्देशे सिद्धस्य भुजिपदस्य धात्वर्थनिर्देशे लक्षणायां गौरवात्।

अत्रैव पुण्यराजीये—'दर्शनं भिन्नम्, प्रार्थनादिको व्यापारो भिन्नः' इति पाठः क्वचिद् दृश्यते। स एव च पाठो युक्तः। 'स संभूय संधानार्थस्य पाकक्रिया-लक्षणस्य साधको दृश्यते' इत्युत्तरग्रन्थानुरोधात्। 'स संभूय संघादर्थस्य' इति पाठः क्वचिदुपलभ्यमानस्तु न युक्तः, अर्थासंगतेः।

अत्रैव पुण्यराजीये—'व्यवहारः कश्चिन्नियतविषय एवोपयोगोऽत्राभिप्रेतः' इत्यत्र 'कश्चिद्' इत्यस्य स्थाने 'कस्मिंश्चिद्' इति पाठो युक्तः, तस्य नियतविषय-विशेषणत्वसंभवात्। 'उपयोग' इत्यस्य स्थाने क्वचिद् 'उद्योग' इति पाठः दृश्यते। स तु न युक्तः। उद्योगस्यापि व्यापाररूपत्वेन 'भिन्नव्यापाररूपाणाम्' इत्यनेन सहान्वयासंभवात्। उपयोगस्तु आनुकूल्येन स्थितिरूप इति संभवति। तस्य तत्रान्वय इति।

**लक्ष्यस्य लोकसिद्धत्वात् इति ॥ ३७७।**

अत्र तृतीयपादे—'अर्थित्वादैक्षुभेदेन' इत्यत्र 'अर्थिष्वादैक्ष्वभेदेन' इति पाठः क्वचिद् दृश्यते। तत्राभेदेनेति पाठो युक्तः, सूत्रेऽभेदनिर्देशस्यैव सत्त्वात्। 'अर्थिषु' इति पाठस्तु न युक्तः, आदैचामर्थित्वाभावात्।

अत्रैव पुण्यराजीये—'आदैक्ष्वर्थिषु संज्ञात्वेन' इत्यत्र 'अर्थिषु' इत्यस्य स्थाने 'अर्थेषु' इति पाठो युक्तः। आदैचो वृद्धिपदार्थत्वात्, अर्थित्वासंभवाच्च। अत्रैव

पुण्यराजीये—'आम्रगुप्तायनिः' इत्यस्य स्थाने 'आश्वगुप्तायनिः' इति पाठः क्वचिद् दृश्यते। स एव चान्वर्थत्वाद् युक्तः। आम्रगुप्तायनिपदे तु नान्वर्थता। नहि आम्रेण कश्चिद् गुप्तो भवति, आम्रेण पालितत्वं तु संभाव्यते।

अत्रैवाग्रे पुण्यराजीये—'तदा मालादीनां वृद्धिर्यस्या चामादिस्तद् वृद्धम् इति मालादयो वृद्धा भवन्ति' इत्यत्र 'मालादीनाम्' इत्यधिकः पाठः, अनन्वितार्थकत्वात्।

**शतादाने प्रधानत्वात् इति ॥ ३७८ ।**

अत्र पुण्यराजीये—'यदि च प्रत्येकं शतकर्मदानं समाप्येत' इत्यत्र 'शतकर्मकादानम्' इति युक्तः पाठः। इतः पूर्वं 'शतादानमेव प्रधानम्' इत्युक्तत्वात्। इत उत्तरत्रापि—'तदा गर्गाः शतानि दण्ड्याः स्युः' इति वाक्यदर्शनाच्च। नहि शतकर्मदानं दण्डनम्, किन्तु शतकर्मकादानमेव तत्, दानस्य गर्गधर्मत्वात्, दण्डनस्य च राजव्यापारत्वात्।

**संघस्यैव इति ॥ ३७९ ।**

अत्र पुण्यराजीये—'पूर्वपदोत्तररूपे हि' इत्यस्य स्थाने 'पूर्वपदोत्तरपदरूपे हि' इति युक्तः पाठः। उत्तरपदशब्दो हि समासस्य चरमावयवे रूढ इत्यस्य सर्वसम्मतत्वात्। अत एवात्र वाक्ये हि शब्दो रूढशब्दश्चेति।

**लक्षणार्थं इति ॥ ३८० ।**

अत्र कारिकायां प्रथमे पादे 'स्तुतिः' इत्यस्य स्थाने 'श्रुतिः' इति पाठो युक्तः। उत्तरत्र कारिकायामुदाहरणे—'वृषलैर्न प्रवेष्टव्यम्' इत्यत्र वृषलानां स्तुत्यभावात्, तेषां तत्र श्रुतेः संभवाच्च।

**वृषलैर्न प्रवेष्टव्य इति ॥ ३८१ ।**

अत्र पुण्यराजीये—'प्रवेशनिषेधार्थः संपद्यते' इत्यत्र 'प्रवेशनिषेधः संपद्यते' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः, अर्थपदस्य वैयर्थ्यात्।

**पात्रादिभेदाद् इति ॥ ३८५ ।**

अस्याः कारिकाया अवतरणे—'एकत्वानेकत्वे विचारयितुमाह' इत्यस्य स्थाने 'एकत्वानेकत्वविचारायाह' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः, पूर्वपाठे स्वरूपगौरवाद्, उपस्थितिगौरवाच्च।

**संहत्यापि च इति ॥ ३८६ ।**

अत्र पुण्यराजीये—'विभागेन प्राप्तं संभूय भुञ्जते' इत्यत्र 'भुञ्जते' इत्यस्य स्थाने 'भुज्यते' इति पाठः क्वचिदुपलभ्यते। स तु न युक्तः, कारिकायां 'कुर्वाणाः, प्रतिपादिताः' इति कर्तृपदद्वयनिर्देशात्। 'भुञ्जते' इति कर्तृप्रत्ययनिर्देशाच्च।

**वीप्साया विषयाभावात् इति ॥ ३८७ ।**

अत्र पुण्यराजीये—'शतदण्डनं प्राधान्येन विधीयते' इत्यत्र 'विधीयते' इत्यस्य स्थाने 'विधीयेत' इति लिङ्प्रयोगः क्वचिदुपलभ्यते। स तु न युक्तः, उत्तरत्र 'शतसंख्या विरुध्यते' इति लट्प्रयोगदर्शनात्। 'विधीयेत' इति पूर्वत्र लिङ्प्रयोगे हि उत्तरत्रापि 'विरुध्येत' इति लिङ्प्रयोग एव स्यात्, 'हेतुहेतुमतोर्लिङ्' इति सूत्रात्।

**भुजिद्वन्द्वैकशेषाभ्याम् इति ॥ ३८८ ।**

अस्याः कारिकाया अवतरणे—'वाक्यार्थश्च परिसमाप्यते' इत्यस्य स्थाने 'वाक्यार्थः परिसमाप्यते' इति पाठो युक्तः, चकारस्यात्र समुच्चेतव्याभावात्।

**सहस्थितौ विरोधित्वम् इति ॥ ३९३ ।**

अत्र पुण्यराजीये-- 'पदार्थो वाक्यार्थो वाक्यार्थे' इत्यत्र 'वाक्यार्थः' इति प्रथमान्तपाठोऽधिकः, अनन्वितत्वात्।

**यथा साधारणे इति ॥ ३९५ ।**

अत्र चतुर्थपादे 'सम्बन्धोऽर्थेन तद्वत्ता' इत्यत्र 'तद्वत्ताम्' इति षष्ठ्यन्तपाठः समुचितः। पुण्यराजीये 'तद्वत्तां संघर्मसंघिनाम्' इति तद्व्याख्यादर्शनादिति।

**वर्णानामर्थवत्तायाम् इति ॥ ३९६ ।**

अत्र कारिकायां चतुर्थपादे—'भेदेन व्यवतिष्ठते' इत्यत्र 'भेदे' इति सप्तम्यन्तस्य पदस्य छेदः। तथैवार्थसंगतेः।

**एकेनैव प्रदीपेन इति ॥ ३९७ ।**

अत्र पुण्यराजीये—'संख्यासमुदायावगताऽभिधीयते' इत्यत्र 'संख्यासमुदायावयवार्थगताऽभिधीयते' इति पाठो युक्तः, तथैवार्थसंगतेः।

**नार्थवत्ता पदे इति ॥ ३९८ ।**

अस्याः कारिकाया अवतरणे—'अत एवम्' इत्यस्य स्थाने 'यत एवम्' इति पाठो युक्तः। उत्तरवाक्ये 'तस्मादसौ' इति तत्पदेन प्रतिनिर्देशात्। अत्रैव चाग्रे—'भवन्तीति न विशिष्यते न पृथगभिधानमुपयुज्यते' इत्यस्य स्थाने 'भवतीति न विशिष्यते'—इति न पृथगभिधानमुपयुज्यते' पाठो युक्तः, तथैवार्थसंगतेः।

**यथा प्रणिहितम् इति ॥ ४०० ।**

अत्र पुण्यराजीये—अभिधातृसंबन्ध्यभिसंधानमपेक्षत एव' इत्यस्य स्थाने 'अभिधातृसंबन्धाभिसंधानमपेक्षत एव' इति पाठः क्वचिदुपलभ्यते। तत्राद्यपाठ एव युक्तः। 'प्रयोक्तृसंबन्ध्यभिसंधाननिमित्तकः इत्यग्रेऽत्रैव पुण्यराजीये वाक्यदर्शनात्।

अत्रैवाग्रे पुण्यराजीये—'स्पष्ट एवभिसंधानोक्तेरभेदनिर्देश:' इत्यस्य स्थाने 'स्पष्ट एवाभिसन्धानोक्त्योरभेदनिर्देशः' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः, इतः प्राक् पुण्यराजीये—'अभिसन्धानमेव ह्यत्र शब्दस्योक्तिलक्षणव्यापारतयाऽतिदिशति' इति वाक्यानुरोधात्।

## बहुष्वेकाभिधानेषु इति ॥ ४०२।

अत्र पुण्यराजीये 'शब्देषु च तत्रार्थेषु' इत्यस्य स्थाने 'सर्वेषु च तत्रार्थेषु' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। तथैवार्थसंगतेः। कारिकायां 'सर्वेषु' इति पाठाच्च।

## अभिधानक्रियाभेदात् इति ॥ ४०४।

अत्र द्वितीयपादे 'अर्थस्य प्रतिपादकात्' इत्यस्य स्थाने 'अर्थस्य प्रतिपादकान्' इति युक्तः पाठः। तथा हि—अत्र पुण्यराजीये—'तदा स्वव्यापारेणाभिधाख्येन तत्तदर्थप्रतिपादकास्तत्तदर्थनिष्ठाः संपद्यन्ते' इति वाक्ये भिन्नविभक्तिकत्वदर्शनेन अर्थस्य प्रतिपादकात् इत्यस्याभेदेन—अभिधानक्रियाभेदे विशेषणत्वस्यानभिप्रेतत्वात्।

## प्रयोगादभिसंधानम् इति ॥ ४०६।

अत्र 'प्रयोगादभिसंधानमत्पदे न विद्यते' इत्यस्य स्थाने—प्रयोगादभिसंधानमन्यत्तेषु न विद्यते' इति पाठो युक्तः। अत्र पुण्यराजीये—'प्रयोग उच्चारणम्, तस्मादन्यत्तेषु अभिसंधानमुक्तिरभिधानैव विद्यते' इति व्याख्यादर्शनात्।

## पदरूपं तु इति ॥ ४०८।

अत्र पुण्यराजीये—'स पदे तदेकपदरूपमेव वाक्यं वाचकं तत्रोपपन्नः' इत्यत्र 'पदेकपदरूपमेव' इति पाठो युक्तः, 'तत्रोपपन्नः' इति तत्पदेन परामर्शदर्शनात्।

## पूर्वैरर्थैरनुगत इति ॥ ४११।

अस्याः कारिकाया अवतरणे पुण्यराजीये—'एवं वाचकाश्रयणे' इत्यस्य स्थाने 'एवं वाचकाश्रयणेन' इति पाठो युक्तः। एवं वाच्यसमाश्रयणेन तथैव प्रतिपादयितुमाह—इति द्राष्टान्तिके तृतीयान्तपाठस्यैव दर्शनात्।

अत्र पुण्यराजीये—'संसृष्टं वाक्यार्थप्रदर्शनं क्रियते' इति पाठ उपलभ्यते, यद्यपि तथापि स न युक्तः, प्रदर्शने पदार्थसंसृष्टत्वाभावात्। वाक्यार्थस्यैव पदार्थसंसृष्टत्वात्। संसृष्टो वा वाक्यार्थ इति विकल्पस्य प्रागुक्तत्वाच्च। तस्मादत्र 'संसृष्टवाक्यार्थप्रदर्शनं क्रियते' इति पाठ एव युक्तः।

अत्रैव पुण्यराजीये—'तथा त्वभिहितान्वयवादिनः पूर्वपूर्वार्थानुगतः संसर्गो वाक्यार्थः' इत्यत्र 'तथा हि अभिहितान्वयवादिनः पूर्वपूर्वार्थावगतः संसर्गो वाक्यार्थः'

इति पाठः क्वचिदुपलभ्यते। तत्र 'तथाहि' इति पाठो युक्तः। तथाहि–इति अव्यय-समुदायो हि प्रसिद्धिमवद्योतयति। प्रसिद्धिरूपश्चात्रार्थः समन्वेतुमर्हति। अन्विताभिधानवादिनो मते पूर्वपूर्वार्थानुगतः संसर्गो वाक्यार्थः प्रसिद्ध इति, तुशब्दस्तु पूर्वोक्तार्थादुत्तरस्मिन्नर्थे वैलक्षण्यं प्रयोगविषय इति। अत्र तदभावात् तुशब्दघटितः पाठो न युक्तः, 'पूर्वपूर्वार्थविगतः' इति पाठोऽपि न युक्तः, अर्थासंगतेः।

अत्रैव पुण्यराजीये—'यदि परमत्र संनिधानं निदर्शकं यस्येतीति कर्तव्यता मात्रस्वरूपावगतावपेक्षन्ते इति बोद्धव्यम्' इत्यस्य मुद्रितस्य पाठस्य स्थाने वाराणसेय-सरस्वतीभवनपुस्तकालयस्थे एकस्मिन् हस्तलिखितपुस्तके—'यदि परमत्र संनिधानं निदर्शकं यस्येतीतिवत्कर्तव्यतामात्रं स्वरूपावगतापेक्षितमिति बोद्धव्यम्' इति पाठः समुपलभ्यते। स च युक्तः प्रतिभाति।

अयं हि तस्यार्थः—अत्र प्रथमतरमेव संसृष्टतया स्थिते पूर्वपदार्थे, यदि परं संनिधानम् परपदस्य संनिधानम्। अत्र पदगतं परत्वं संनिधाने आरोप्याह–परं संनिधानमिति। निदर्शकम्—संसृष्टस्य पूर्वपदार्थस्य ज्ञापकम्। यस्येति इतिवत्—यथा 'ईति' इति परपदसंनिधानेन 'यस्य' इति पूर्वपदस्य—ईत्परकत्वविशिष्टस्य इकारस्य अकारस्य च इत्यर्थः प्रतीयते, न तु यकारस्येति, न वा यकाराकारसंधानस्येति। कर्तव्यतामात्रम्-तस्य-परपदस्य-कर्तव्यतामात्रम्। अयञ्चार्थः 'तस्य' इति पदाध्याहारेण तत्कर्तव्यतामात्रमिति पाठकल्पनेन वा बोध्यः। स्वरूपावगतौ संसृष्टस्य पूर्वपदार्थस्य स्वरूपावगतौ, अपेक्षितं बोद्धव्यमिति।

## आधारनियमाभावात् इति ॥ ४१३।

अत्र पुण्यराजीये—'तत्र साधनं नास्ति' इति पाठो मुद्रितः समुपलभ्यते, स तु न युक्तः, अर्थासंगतेः। 'तत्र' इत्यस्य स्थाने 'यत्र' इति पाठ एव युक्तः। अग्रे 'तस्य साधनस्य तत्र संभवः' इति तत्रपदेन परामर्शात्।

## अविभागं तु इति ॥ ४१५।

अत्र चतुर्थपादे—'वाक्यं वाक्यार्थ एव च' इत्यस्य स्थाने 'वाक्यं वाक्यार्थ एव वा' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः, अत्र समुच्चयार्थकचकार पाठस्यैवार्थानुरोधेनोचितत्वात्। वाकारोऽपि यद्यपि समुच्चयार्थकः संभवति, तथापि तस्य पाठे विकल्पार्थकत्वस्य प्रसिद्धया संग्रहप्रसङ्ग इति।

## स्वरूपं विद्यते इति ॥ ४१६।

अत्र पुण्यराजीये—'प्रत्यक्षादिप्रमाणपरिच्छिन्नं स्वरूपम्' इत्यस्य स्थाने प्रत्यक्षादिप्रमाणपरिच्छिन्नं स्वरूपम्' इति पाठः क्वचिदुपलभ्यते, स एव च युक्तः, स्वरूपमुद्दिश्य प्रत्यक्षादिप्रमाणपरिच्छिन्नत्वस्य विधानात्। समासे च एकार्थीभावस्य सत्त्वेन उद्देश्यविधेयभावविरहात्।

अत्रैवाग्रे पुण्यराजीये—पङ्कप्रायोऽसाविति' इत्यस्य स्थाने 'पङ्कप्रायो नेष्ट इति' इति पाठः क्वचिद् दृश्यते, स च न युक्तः । पङ्कप्रायत्वस्यैव व्यवहारगोचरत्वाभावे हेतुत्वेन अनिष्टत्वोक्तेर्वैयर्थ्यात् । पङ्कप्रायत्वोक्त्या तस्यार्थाक्षिप्तत्वाच्च । पृथग्रूपेणावस्थिते पदार्थे पङ्कप्रायत्वञ्च प्रवृत्त्याद्यनुपकारकत्वमेव ।

अत्रैव पुण्यराजीये—'तदितरोपपत्तेः' इति पाठो युक्त एव, न तु अर्थाप्रतीत्याऽत्रायुक्तत्वभ्रमः कार्यः । तस्माद् वाक्यार्थरूपात् संसर्गादितरेण पदार्थेन संसर्गस्योपपत्तेरिति तदर्थस्य संभवादिति ।

## अशब्दमपरे इति ।। ४१७ ।

अत्र पुण्यराजीये—'अर्थस्य रूपनिर्धारणस्य स्वरूपपरिच्छेदः' इत्यस्य स्थाने 'अर्थस्य रूपनिर्धारणं स्वरूपपरिच्छेदः' इति पाठो युक्तः । स्वरूपपरिच्छेदस्य रूपनिर्धारणपदार्थत्वेन द्वयोः पदयोः सामानाधिकरण्यस्यैवोचितत्वादिति । रूपनिर्धारणमिति प्रथमान्तस्यैव कारिकायां पाठाच्च ।

अत्रवाग्रे पुण्यराजीये 'अर्थप्रतिभासदृशायाम्' इत्यस्य स्थाने—'अर्थप्रतिभाससदृश्याम्' इति पाठो युक्तः । सदृशशब्दस्य कञ्प्रत्ययान्तत्वेन 'टिड्ढाणञ्' इति ङीपः संभवादिति ।

## पृथङ् निविष्टतत्त्वानाम् इति ।। ४१९ ।

अत्र पुण्यराजीये—'पृथक् पृथगर्थं शब्दादिलक्षणम्' इत्यस्य स्थाने 'पृथगर्थं शब्दादिलक्षणम्' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः । पृथगर्थानुपातिनामिति णिनिप्रत्ययेनोपात्तस्य ताच्छील्यस्य वीप्साया अभावेऽसंभवात् ।

अत्रैवाग्रे पुण्यराजीये—'तच्छीलास्ते तथा' इत्यस्य स्थाने 'तच्छीलानि तानि तथा' इति पाठो युक्तः, इन्द्रियाणां विशेष्यत्वेन तदनुरोधेन नपुंसकनिर्देशस्यैवोचितत्वात् ।

## तथापदानाम् इति ।। ४२० ।

अस्याः कारिकाया अवतरणे पुण्यराजीये—'प्रकृतं योजयितुमाह' इत्यस्य स्थाने 'प्रकृते योजयितुमाह' इति पाठो युक्तः, तथैवार्थसंगतेः ।

## दर्शनस्यापि इति ।। ४२२ ।

अत्र पुण्यराजीये—'सत्यत्वेन स्वच्छत्वादिरूपतया' इत्यस्य स्थाने क्वचित् 'सत्यत्वेन स्वस्थत्वादिरूपतया' इति पाठः क्वचिदुपलभ्यते, स तु न युक्तः । अत्रैवाग्रे 'नीलपीताद्युपसृष्टतया निरूप्यते' इति वक्ष्यमाणत्वेन 'स्वच्छत्वादिरूपतया' इति पाठस्यैव युक्तत्वप्रतीतेः ।

**सदित्येव तु यद् वाक्यम् इति ॥ ४२५ ।**

अत्र पुण्यराजीये--'स्पर्धयैव व्यवस्थिते' इति--'स्पष्टे एव व्यवस्थिते' इति च पाठद्वयमुपलभ्यते, किन्तु इदं द्वयमपि न युक्तम् । तथाहि प्रथमपाठस्यायुक्तत्वे हेतुः साध्यसाधनयोरचेतनयोः स्पर्धाया असम्भवः । द्वितीयपाठस्यायुक्तत्वे हेतुः तयोः--स्पष्टं व्यवस्थितेरभावः । तथा हि--अन्यतरोपादाने साध्येन साधनमाक्षिप्यते, साधनेन च साध्यमाक्षिप्यते इति प्रकृते वाक्ये तयोर्द्वयोः स्पष्टं व्यवस्थितेरभाव इति । अतः 'स्पर्धयैव व्यवस्थिते' इति पाठो युक्तः । अन्योऽन्यापेक्षकत्व-प्रयुक्तान्योऽन्याक्षेपकत्वेन च स्पर्धाया आरोप इति ।

**प्राधान्यस्तु क्रिया इति ॥ ४२७ ।**

अत्र पुण्यराजीये--'अङ्गात् प्रधानभूतानि तानि' इत्यस्य पाठस्य स्थाने 'अङ्गान्यप्रधानभूतानि' इति पाठः क्वचिदुपलभ्यते, स एव तु युक्तः । 'यस्मात् साध्यार्थं साध्यनिष्पत्तये प्रयुक्तानि साधनान्यतः' इति प्राक्पाठदर्शनात् ।

अत्रैवाग्रे पुण्यराजीये--'क्रियायाङ्गत्वम्' इत्यस्य स्थाने 'क्रियाया अङ्गत्वम्' इति पाठो युक्तः, तथैव साधुत्वसंभवात् ।

**पचिक्रिया करोमि इति ॥ ४२९ ।**

अत्र तृतीयपादे--'पक्तिः करणरूपं तु' इत्यस्य स्थाने 'पक्तेः करणरूपं तु' इति पाठो युक्तः । अन्यथा 'पक्तिः करणरूपा तु' इति स्यात् ।

अत्र पुण्यराजीये--'सैव पचिक्रियादेवदत्तः करोतीत्यत्र कर्मत्वेनैव पक्तिः पाक-क्रिया' इत्यत्र 'पचिक्रियाम्' इति द्वितीयान्तपाठः साधुः । अन्यथा 'कर्मत्वेनैव पक्तिः पाकक्रिया व्यवस्थापिता' इति वाक्यस्यासंगत्यापत्तेः ।

इदञ्चात्रावधेयम् । अस्याः कारिकायाः प्रथमपादे 'पचिक्रिया' इत्यस्य स्थाने 'पक्तिक्रिया' इति पाठः साधुः संभाव्यते । 'पक्तिः पाकक्रिया व्यवस्थापिता' इति पुण्यराजीये तद्व्याख्यादर्शनादिति ।

**योऽसौ येनोपकारेण इति ॥ ४३० ।**

अत्र तृतीयपादे--'अर्थस्य सर्वशक्तित्वात्' इत्यस्य स्थाने--'सर्वस्य सर्व-शक्तित्वात्' इति पाठः क्वचिदुपलभ्यते । स तु न युक्तः, किन्तु आद्य पाठ एव युक्तः । अस्या अवतरणे पुण्यराजीये--'अथवाऽनेकशक्तिरर्थः स्थितोऽपि' इत्यादिवाक्यानुरोधात् । अत्र हि अर्थस्यैवानेकशक्तित्वं कण्ठत उक्तम् ।

**संसृष्टानां विविक्तत्वम् इति ॥ ४३२ ।**

अत्र प्रथमे पादे--'संसृष्टानां विवेकत्वम्' इत्यस्य स्थाने--'संसृष्टानां विविक्त-त्वम्' इति पाठः क्वचिदुपलभ्यते, स एव च युक्तः । अत्र पुण्यराजीये--'संसृष्टानाञ्च विविक्तत्वं यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इति तद्व्याख्यादर्शनात् ।

**सर्वात्मकत्वादर्थस्येति ।। ४३३ ।**

अत्र पुण्यराजीये—'तत्तद्व्यपदेशमात्रं भवति' इत्यस्य स्थाने—'तत्तद्व्यपदेशमात्रं भजति' इति पाठो युक्तः। 'भवति' इति पाठे हि 'तेषाम्' इत्यध्याहारे गौरवमिति ।

**संबन्धिधर्मा संयोग इति ।। ४३३ ।**

अत्र पुण्यराजीये—'यथावत्परिनिष्ठस्वरूपः' इत्यस्य स्थाने—'यथावत्परिनिष्ठितस्वरूपः' इति पाठो युक्तः। तथैवार्थसङ्गतेः। 'परिनिष्ठ' इति प्रयोगस्यासाधुत्वादनर्थकत्वाच्च ।

**वाक्यार्थे योऽभिसंबन्ध इति ।। ४३७ ।**

अत्र प्रथमपादे—'वाक्यार्थे' इत्यस्य स्थाने 'वाक्यार्थः' इति प्रथमान्तपाठः समुचितः। एतद्व्याख्याने पुण्यराजीये—'वाक्यार्थः' प्रथमान्तपाठस्यैव सत्त्वात्। अभिसंबन्धस्य वाक्यार्थरूपत्वाच्च ।

अत्र पुण्यराजीये—'स चैकस्मिन् पदार्थे' इत्यस्य स्थाने—'स चैकैकस्मिन् पदार्थे' इति पाठो युक्तः। 'समुदाय एव वा परिसमाप्त' इति उत्तरवाक्यानुरोधात् ।

**अन्वाख्यानाय यो भेद इति ।। ४३९ ।**

अस्याः कारिकाया अवतरणे 'एतदेव स्फुटीकरणमाह'—इत्यस्य स्थान 'एतस्यैव स्फुटीकरणमाह' इति पाठो युक्तः। तथैवार्थसङ्गतेः।

**संप्रत्ययार्थाद् बाह्योऽर्थ इति ।। ४४१ ।**

अनया कारिकया सह 'प्रत्ययार्थात्मनियताः शक्तयो न व्यवस्थिताः। अन्यत्र च ततो रूपं न तासामुपलभ्यते' इति कारिकाऽपि क्वचित् पुस्तके उपलभ्यते। सा च पुण्यराजेनैतत्कारिकया सहैव व्याख्याता—'ताः पदार्थशक्तयो न व्यवस्थिताः' इत्यादिना। अत्र 'ताः पदार्थव्यक्तयो न व्यवस्थिताः' इति त्वपपाठः। 'तस्माद् बौद्धादर्थादन्यत्र बाह्य एवार्थे ताः शक्तयो व्यवस्थिताः' इत्युपसंहारे दर्शनात्।

अत्र पुण्यराजीये—'वाक्यार्थं प्रतिपाद्य' इत्यस्य स्थाने 'वाक्यार्थं प्रतिपद्य' इति पाठो युक्तः। तथैवार्थसङ्गतेः। वाक्यार्थस्वरूपं प्राप्य इति च तदर्थः।

अत्रैवाग्रे पुण्यराजीये—'शक्तित एकाकारेण विना' इत्यस्य स्थाने—'शक्तित एकीकारेण विना' इति पाठो युक्तः। तथैवार्थसङ्गतेः।

**बहुष्वपि तिङन्तेषु इति ।। ४४२ ।**

अस्याः कारिकाया अवतरणे—'वाक्यानामेकवाक्यत्वे वा' इत्यस्य स्थाने क्वचित् पुस्तके—'वाक्यानामेकवाक्यत्वं भिन्नवाक्यत्वं वा' इति पाठ उपलभ्यते। स एव च युक्तः। 'वा मतभेदेन' इत्यग्रिमग्रन्थानुरोधात्।

एकतिङ् यस्येति ।। ४४३ ।

अस्याः कारिकाया अवतरणे 'वार्त्तिककारमतेन वाक्यभेदस्तत्र' इत्यत्र 'वार्त्तिककारमतेन वाक्यभेदस्तत्र' इति पाठो युक्तः। तथैवार्थसङ्गतेः। 'वाक्यभेदान्न विद्यते' इत्युपसंहारे हेतूपन्यासाच्च।

फलवन्तः क्रियाभेदा इति ।। ४४८ ।

अस्याः कारिकाया अवतरणे—'भवतीत्यत्र शाब्दमपि' इत्यस्य स्थाने 'भवतीत्यत्राशाब्दमपि' इति पाठो युक्तः। अग्रिमकारिकायाम्—'श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना' इत्युत्तरार्धदर्शनात्। 'शब्दमात्रात् सामान्येन श्रुताद् भेदानां प्रविभागरूपताऽवसातुमशक्या' इति पुण्यराजीये तद्व्याख्यादर्शनाच्च।

यथाकाङ्क्षा निवर्तेत इति ।। ४५५ ।

अस्याः कारिकाया अवतरणे 'यदि पुनः संयुक्तविधिनोपादीयेत' इत्यस्य स्थाने 'यदि पुनः संयुक्तो विधिनोपादीयेत' इति पाठो युक्तः। तथैवार्थसङ्गतेः। 'नैवान्येनाभिसंबन्धं तदुपेयात् कथञ्चन' इत्युत्तरार्धानुरोधाच्च।

अत्र पुण्यराजीये—'अन्येन प्रत्ययविधायकेन संबन्धेनेवोपेयात्' इत्यस्य स्थाने 'अन्येन प्रत्ययविधायकेन संबन्धं नेवोपेयात्' इति पाठो युक्तः। तथैवार्थसङ्गतेः।

कालभिन्नाश्च भेदा ये इति ।। ४५८ ।

तत्र पुण्यराजीये 'शब्दात् शब्दस्वरूपं न भिद्यते' इत्यस्य स्थाने 'शब्दात्मा शब्दस्वरूपं न भिद्यते' इति पाठो युक्तः। तथैवार्थसङ्गतेः।

अक्षाणां तन्निष्ठां इति ।। ४६१ ।

अस्या कारिकाया द्वितीये पादे—'उपायस्तुल्यरूपता' इति पाठो युक्तः। तत्त्वमित्येकवचनान्तेन 'तुल्यरूपता' इत्यनेनापि तादृशेनेव सामानाधिकरण्यात्।

भेदसंसर्गको द्वे इति ।। ४६४ ।

अस्याः कारिकाया अवतरणे पुण्यराजीये 'संबन्धाद् भिद्यत एव साधारण्याद्' इत्यस्य स्थाने 'संबन्धाद् भिद्यत एव, यौगपद्यप्रयोगे तु न भिद्यते, साधारण्याद्' इति पाठो युक्तः। 'क्रमे विभिद्यते रूपं यौगपद्ये न भिद्यते' इति प्रागुक्तत्वात्।

**तथा द्विर्वचनेऽचीति ।। ४७५ ।**

अत्र पुण्यराजीये—'तन्त्रोपायाद्धेतोर्लक्षण एवैकशेषनिर्देशः प्रदर्शितः' इत्यस्य स्थाने 'तन्त्रोपायाद्धेतोरविलक्षण एवैकशेषनिर्देशः प्रदर्शितः' इति पाठो युक्तः। अत एवेतः समनन्तरपूर्वमेव 'तन्त्रमेवात्रैकशेषशब्देनोक्तम्' इत्युक्तम् ।

**कृतेऽथ पतञ्जलिना इति ।। ४७७ ।**

अस्याः कारिकाया अवतरणे—'धर्ममाधनत्वेनोपजातोपयोगाय व्याकरण-स्मृतेः' इत्यस्य स्थाने 'धर्मसाधनत्वेनोपजातोपयोगाया व्याकरणस्मृतेः' इति पाठो युक्तः । अन्यथा 'उपजातोपयोगाय' इत्यस्यानन्वयः ।

**वर्त्मनामत्र केषाञ्चिदिति ।। ४८३ ।**

अत्र पुण्यराजीये 'पदकाण्डे द्वयनिष्पन्दभूते' इति पाठो युक्तः । तथैवार्थसङ्गतेः ।

**प्रज्ञा विवेकं लभते इति ।। ४८४ ।**

अत्र प्रज्ञेति पृथग्भूतं कर्तृपदं न तु समस्तम् । तथैवार्थसङ्गतेः । अत्र पुण्य-राजीये—'तेषु तेषु तेषु' इति वारत्रयं पाठो न युक्तः, किन्तु द्विः पाठ एव युक्तः ।

अत्रैवाग्रे पुण्यराजीये—'पश्यन्तः सिद्धान्तमात्रमिति शोभते' इत्यस्य स्थाने 'पश्यन्तः सिद्धान्तमभिधातुमलमिति शोभते' इति पाठः क्वचिद् दृश्यते । स एव च साधुः । तथैवार्थसङ्गतेः ।

विषयसूच्यां पुण्यराजकृतायां द्वादश्यां कारिकायाम्—'तत्र न्यायवशाद्' इत्यस्य स्थाने 'तन्त्रन्यायवशाद्' इति पाठः क्वचिदुपलभ्यते। स एव च युक्तः। तथैवार्थसङ्गतेः । अस्यामेव कारिकायाम्—'दोषसंवृतिः' इत्यस्य स्थाने 'दोषसंहृतिः' इति पाठो युक्तः। तथा हि—'दोषसंवृतिः' इत्यस्य दोषसंवरणमर्थः, स च प्रकृते वाक्यार्थे न समन्वेति । दोषसंहारस्तु दोषनिरासरूपः प्रकृते समन्वेतुमर्हतीति शिवम् ।

**समाप्तश्चायं वाक्यकाण्डपाठनिर्णयः**